पाञ्चरात्रं ततो देवि शैवलिङ्गागमानि च ।
कुमारी-विजया-काली-ताराकल्पाश्च विश्रुताः ॥८७॥
मातृकामन्त्रज्ञानानि कुलगुप्ताकुलानि च ।
माघश्चेभ्योऽपि शव्देभ्योऽप्यर्णवं परिकीर्तितम् ॥८८॥
रहस्यं क्रमतः कल्लोलिनी श्रीमतकालयोः १ ।
उत्तरञ्च पदं ज्ञेयं चण्डीपीठं प्रकीर्तितम् ॥८९॥
नित्याह्निको २ मातलिके चोड्डीशं कुलपूर्वकम् ।
स्वायम्भुवः सोमशम्भुस्तथैव पिङ्गलामतम् ॥९०॥
षडन्वयो महारत्नवरत्नेश्वरावपि ।
कामधेनुमतं कुम्भकुलसम्भवसंज्ञकौ ॥९१॥
कालीक्रमो मत्स्यसूक्तमुदयाकरपद्धतिः ।
योगिनीहृदयञ्चेति कालीहृदयमेव च ॥९२॥
त्रिशक्तिरत्नकं सोमभुजङ्गावलिरेव च ।
कुलावतारकं पद्मवाराहीहरपूर्वतः ॥९३ ॥
गौरीसंवादकं ज्ञेयं समयाङ्ककमातृका ।
३ पूर्णायागश्च ललिता स्वच्छन्दं परिकीर्तितम् ॥९४॥
कुलप्रकाशकञ्चेति कुलामृतप्रदीपिका ।
नवदुर्गाकल्पसंज्ञं कुलमूलावतारकम् ॥९५॥
तन्त्रराजश्च कामाख्या शव्दात्पञ्चाशिका स्मृता ।
कुलरत्नद्योतकं स्यादेतेभ्यो ग्रन्थमध्यतः ॥९६॥
वचनानि समानीय लिख्यते क्रियते न तु ॥९७॥

---

[1] कालको - इति ख.मा.पा. ।

[2] मातिलके - इति क.मा. ख.मा.पा. ।

[3] भूर्णायोगश्च - इति ख.मा.पा. ।

१ जातीकदम्बकरबीरकुशेशयादि -

पुष्पेभ्य एवं मकरन्दकणां प्रसिद्धाम् ।

आनीय सञ्चयति यन्मधुमक्षिका सा

गृह्णन्ति दैवतविधौ विबुधा न किन्तत् ॥९८॥

२ श्रीदेव्युवाच-

त्राहि त्राहि महादेव शरणागतवत्सल ।

साहंकारा वयं मूढा ईश्वरा इति वादिनः ॥९९॥

महाकालः कथं ज्ञेयः कथं मुक्तिर्भवेच्छिव ।

मुक्तयः कतिधा देव श्रेष्ठा का किञ्च साधनम् ॥१००॥

वदास्माकं यदि कृपा देव्यां विष्णौ सुरेषु च ।

**ईश्वर उवाच-**

ज्ञायते तत्प्रभावेण सकलं वेदवाक्यतः ॥१०१॥

वेदेभ्यः सारमुद्धृत्य यत् कृतं शङ्करेण वै ।

वेदाधिकतया देवि ! आगमः परिकीर्तितः ॥१०२॥

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखम् ।

मलत्रयविनाशित्वात् तस्मादागम उच्यते ॥१०३॥

३ आगमोत्पत्तिसंख्या च कथ्यते शृणु साम्प्रतम् ।

४ सार्धवर्षाष्टको ब्रह्मा यदा जातस्तु देवता ॥१०४॥

अहङ्कारी महान् जातस्तन्त्रविद्याप्रभावतः ।

तदा तस्मिन् कलियुगे शिश्नोदरपरायणाः ॥१०५॥

नादृतास्तैस्तु वेदादिस्मृतयो वै वृथागमे ।

खानं पानं मैथुनञ्च देशे देशे पुरे पुरे ॥१०६॥

---

[1] जातीकदम्बुफरत कुशेयादि - इति ख.मा.पा. ।

[2] ९९, १०९ १/२ श्लोकौ ख.मा न प्राप्यंत ।

[3] 'अथागमोत्पत्तिमाह, श्री शिव उवाच' - इति - ख.मा. अधिकः पाठः ।

[4] सार्धवर्षाकृतो - इनि ख मा पा ।

न कश्चिन्मन्यते विष्णुं गणेशं न रविं शिवम् ।
मत्वा सर्वं जगच्छाक्तं भगपूजां प्रकुर्वते ॥१०७॥
तदा बटुकरूपेण यदा पृष्टः पितामहः ।
१ ब्रह्मणो दिश्यतां धर्मा वयं येन तरेमहि ॥१०८॥
तदा तु ब्रह्मणा प्रोक्तं ममोर्ध्वमुखनिर्गतः ।
आगमः पञ्चमो वेदो भुक्तिमुक्तिप्रदायकः ॥१०९॥
तदाद्य कलिसङ्घे तु मया प्रोक्तः पितामहः ।
ब्रह्मन् नेदं त्वया वाच्यं सृष्टिकर्ता सदाशिवः ॥११०॥
तदा पितामहेनोक्तं कर्ताऽहं चापि रक्षकः ।
ममोर्ध्वमुखतो जातो मन्यते चान्य आगमः ॥१११॥
एवं तदाऽऽचारनिष्ठा यास्यन्ति परमां गतिम् ।
बटुकस्त्वं वेत्सि नो सौख्यं खानपानाङ्गनाभवम् ॥११२॥
इति श्रुत्वा ब्रह्मवचो धर्मसंस्थापनाय तु ।
युगत्रये तदा जातः क्रोधसंरक्तलोचनः ॥११३॥
अवज्ञां वीक्ष्य धातुश्च प्रखरेण नखेन च ।
शिरो निपातितं धातुः कराङ्गुल्या धरातले ॥११४॥
तन्मुखात्पञ्चमो वेदो मम देहे लयं गतः ।
तस्मादागमकर्ताऽहं वेदकर्ता पितामहः ॥११५॥
२ पञ्चाशद् वै महापद्मो ह्यागमग्रन्थ ईरितः ।
तत्र मन्त्रा महादेवि सर्वेऽपि सुप्रतिष्ठिताः ॥११६॥

---

१ 'ब्रह्मणो दिश्यतां - इति क.मा.ख.मा. पा. ।

२ आक्षौ युगभेदाप्यत्राधिकरितास्तीत्याह ।
द्वितीयप्रकाशस्य ५४, ५५ श्लोकौ अत्र निर्दिष्टौ । श्लो. ११६-११९ न सन्ति । तेषां स्थाने -
वेदेभ्यः सारमुद्धृत्य यत्कृतं शङ्करेण वै ।
वेदाधिकतया देवि आगमः परिकीर्तितः ॥
वेदशास्त्रपुराणानां सृष्टिर्वाराङ्गना इव ।
अस्य शाम्भवशास्त्रस्य गुप्तिः कुलवधूरिव ॥
आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखम् ।
मलत्रयविनाशित्वात्तस्मादागम उच्यते ॥
- इति ख. मा. अधिकः पाठः

त्रिंशन्निखर्वषड्वृन्दनवत्यर्बुदकोटयः ।
मन्त्राः प्रोक्ता महोशानि ह्यागमे कुत्र किं स्थितम् ॥११७॥
तच्छृणु त्वं महेशानि यद्यहं तव वल्लभः ।
महत्पञ्चाशत् पद्मे तु षड्विंशतिर्भुवि स्थिताः ॥११८॥
चतुर्दश स्थिताः स्वर्गे दश पातालगोचराः ।
एवं क्रमेण देवेशि ह्यागमः कथितो मया ॥११९॥
आगमे सर्वशास्त्राणि ह्यागमे सर्वदेवताः ।
आगमे सकलं पुण्यमागमे किन्न लभ्यते ॥१२०॥
आगमे सकलं ज्ञानं विद्याः सर्वाः प्रतिष्ठिताः ।
[1] मन्त्रशास्त्रस्य सिद्ध्यर्थमाविर्भवति पार्वति ॥१२१॥
अनादिविद्या काली च महातारामिघा परा ।
षट् शाम्भवेश्वरी विद्या वाचोतीता परा कला ॥१२२॥
महाप्रलयमासाद्य कोटिब्रह्माण्डनायिका ।
शिवशक्तिमयं देहमेकीकृत्य सदा स्थिता ॥१२३॥
कोटिवक्त्रा भवाद्यास्तु ब्रह्माणः प्रेतरूपिणः ।
तच्छ्मशाने प्रनृत्यन्ती गायन्ती ध्यानसंकुलाः ॥१२४॥
चितिरक्षास्वरूपत्वं प्राप्य तिष्ठति पार्वति ।
माहेश्वराणामानन्त्यमस्ति विष्णोरनेकता ॥१२५॥
शक्रादीनां तुं गणना नास्त्येव प्रियवादिनि ।
नद्यान्तु वालुका यावत्तावदिन्द्राः [2] प्रकीर्तिताः ॥१२६॥
कीटाद् ब्रम्हाण्डपर्यन्तं स्थावरं जङ्गमादिकम् ।
एकैकवारमिन्द्रत्वं गतं तत् पुनरव्ययम् ॥१२७॥
अनन्तकोटिब्रह्माण्डे यावन्तः परमाणवः ।
तावन्तः सन्ति तद्भूमौ चितिरूपाः स्वरूपतः ॥१२८॥

---

[1] अथ सृष्टिक्रमः - इति ग. मा. अधिकः पाठः ॥
[2] पुरंदराः - इति ख. मा. पा. ।

माहेश्वरीसमेतानि ब्रह्माणीकोटिकोटयः ।
तिष्ठन्ति देवदेवेशि चतुर्वेदाः शवाः स्मृताः ॥१२९॥
१ युगाश्च शवरुपेण सप्तप्रेतगताः पराः ।
सामरस्यं समासाद्य सर्वरूपसमाहितम् ॥१३०॥
बिन्दुव्यापकरूपेण स्वरूपं विभ्रती परम् ।
एकस्मिन्नेव काले तु स्वबिम्वं पश्यति शिवा ॥१३१॥
तद्बिम्बन्तु भवेन्माया तत्र मानसिकं शिवम् ।
सृष्टेरुत्पादनार्थन्तु भर्तृरूपमकल्पयत् ॥१३२॥
आदिनाथञ्च मनसा कल्पातीतस्वरूपिणम् ।
तं विलोक्य महेशानि सृष्ट्युत्पादनकारणात् ॥१३३॥
आदिनाथं मानसिकं स्वभर्तारमकल्पयत् ।
विपरीतरतिं कृत्वा महाशून्यं विधाय च ॥१३४॥
त्रिंशदर्बुदषड्वृन्दपञ्चाशत्पद्मकोटयः ।
युगानि परमेशानी विपरीतरताऽभवत् ॥१३५॥
विपरीतरतौ देवि बिन्दुरेकोऽभवत् पुरा ।
बिन्दुध्वनिसकाशाच्च प्रत्येकं २ वर्णजातयः ॥१३६॥
मातृकार्णास्तदा जाता अक्षराश्च तदाऽभवन् ।
ध्वनिना व्याप्तमखिलं जगदेतच्चराचरम् ॥१३७॥
अद्यापि जायते देवि कादम्बर्यां ध्वनिश्रुतिः ।
तत्रैका तु सखी जाता महालावण्यकालिका ॥१३८॥
श्रीमहासुन्दरं रूपं बिभ्रती परमां कलाम् ।
३ तस्या नाम महाकाली सुन्दरीति प्रकल्पयत् ॥१३९॥
तां विलोक्य महाकालो महामोहपरोऽभवत् ।

---

१ युताश्च - इति ख. मा. पा. ।

२ वन - इति ख. मा. पा. ।

३ तस्याश्च मानसी शक्तिस्तत्र जाता परात्परा - इति ख. मा. अधिकः पाठः ।

कालीं प्रति वचः कालो वाणीं गर्वान्वितां पराम् ॥१४०॥
उवाच सुन्दरीं कालो महाकालप्रिये परे ।
त्रैलोक्यसुन्दरि कालि कारुण्यामृतसागरे ॥१४१॥
द्वितीयवाक्यं देवेशि कालीं प्रोवाच शङ्करः ।
महाघोरे शिवारावे क्रूरद्रंष्ट्रे करालिनि ॥१४२॥
ललज्जिह्वे भीमनादे ईदृशं वचनं वदन् ।
ईदृशं वचनं श्रुत्वा निर्गुणा परचण्डिका ॥१४३॥
अनादिरूपा श्रीकाली मायोत्पादनतत्परा ।
कालो मोहवशं जातः कालिकामायया शिवे ॥१४४॥
अनादिसृष्टेरुत्पत्तिः [1] कल्याणार्थं महेश्वरि ।
ब्रह्माण्डानामथेशस्त्वं [2] मायया कथितं क्षणात् ॥१४५॥
कालस्य मायां ज्ञात्वा तु स्वयं [3] गोप्यत्वतां गता ।
कालस्तु चकितो जातः सा वै कुत्र गता प्रिया ॥१४६॥
हा हा प्राणप्रिया काली सा वै कुत्र गता प्रिया ।
इति मोहवशं यातः श्मशानाटनतत्परः ॥१४७॥
एवं मोहवशं यातो भ्रान्तचित्तस्तदाऽभवत् ।
दर्शनार्थं तपस्तेपे पञ्चाशत्पद्मकोटयः ॥१४८॥
युगानि तत्र जातानि न कालीदर्शनं शिवे ।
कालश्च यातो देवेशि मार्गभ्रष्टपरायणः ॥१४९॥
इति ज्ञात्वा[4] च कालाय ज्ञानं दत्तं महेश्वरि ।
आकर्षणाख्या बुद्धिस्तु दत्ता कालाय पार्वति ॥१५०॥
भक्तप्रीता महाकाली श्रीमहादक्षिणा मता ।
वरदानेषु त्वरिता तेनेयं दक्षिणा स्मृता ॥१५१॥

---

[1] धारणार्थम् - इति ख. मा. पा. ।
[2] ब्रह्माण्डानां महेशस्त्वम् - इति पा. उचितः ।
[3] व्याप्यत्वताम् - इति ख. मा. पा. ।
[4] महाकाल - इति ख. मा. पा । तत्र च कालाय - इति पाठो नास्ति ।

आकर्षणं कृतं तेन जातं तत् क्षणमात्रकम् ।
काल्या ज्ञानं महेशानि १ आगत्य तु २ शिवान्तिकम् ॥१५२॥
तदा स्वमनसा बालां शक्तिं कृत्वा महेश्वरि ।
आनीयादाच्च कालस्य मार्गाभ्यासार्थमेव तु ॥१५३॥
मार्गं विना महेशानि गतिरत्र कथं भवेत् ।
तन्त्राभ्यासयुत: काल: कुण्डलीध्यानतत्पर: ॥१५४॥
मनुष्याणां कुण्डली तु सार्द्धत्रिबलया स्मृता ।
श्री देव्या: कुण्डली देवी स्वेच्छया गुणिता शिवे ॥१५५॥
त्रिगुणा श्रीत्रिशक्तिश्च यदा वेदगुणा भवेत् ।
चतुर्वर्णा चैकजटा चतुर्वेदेश्वरी परा ॥१५६॥
यदा पञ्चगुणा देवी महोग्रा तु तदा भवेत् ।
यदा षड्गुणिता शक्ति: सिद्धिकाली प्रकीर्तिता ॥१५७॥
यदा सप्तगुणा शक्ति: सप्तार्णा कालसुन्दरी ।
यदाऽष्टगुणिता शक्तिरष्टार्णा भुवनाम्बिका ॥१५८॥
यदा नवगुणा शक्तिर्नवार्णा चण्डिकेश्वरी ।
यदा दशगुणा जाता दशविद्यास्वरूपिणी ॥१५९॥
यदा रुद्रगुणा जाता श्मशानकालिका भवेत् ।
यदा सूर्यगुणा देवी द्वादशी चन्द्रभैरवी ॥१६०॥
यदा कामगुणा देवी काममेदा च तारिणी ।
चतुर्दशगुणा जाता वशीकरणकालिका ॥१६१॥
यदा पक्षगुणा जाता महापञ्चदशी स्मृता ।
कलागुणा यदा शक्ति: श्री महाषोडशी तदा ॥१६२॥
कलातीता गुणा देवी छिन्नमस्ता तदा भवेत् ।

---

१ 'मार्गव्यक्तिपरायण: । कालो जातो महेशानि महाभगप्रियो वर:' शिवाकर्षणकं कर्म मिथुनत्वप्रदायकम् । इति ज्ञात्वा महेशानि - इति ख. ग. मा. अधिक: पाठ: ।
२ शिवान्तरं - इति ख. मा. पा. ।

अष्टादशगुणा प्रोक्ता महामधुमती भवेत् ॥१६३॥
उनविंशगुणा देवी महापद्मावती तदा ।
यदा च विंशतिगुणा विंशवर्णा रमा भवेत् ॥१६४॥
एकविंशगुणा देवी प्रोक्ता श्रीकामसुन्दरी ।
[1]द्वाविंशगुणिता देवी दक्षिणा कालिका तदा ॥१६५॥
त्रयोविंशगुणा देवी विद्येशी तु तदा भवेत् ।
गुणिता तत्त्वसंख्याभिर्गायत्री[2] स्यात्तदा भवेत् ॥१६६॥
पञ्चविंशगुणा देवी पञ्चमी सुन्दरी तदा ।
षड्विंशगुणिता शक्तिः षष्ठी विद्या प्रकीर्तिता ॥१६७॥
सप्तविंशगुणा देवी महारत्नेश्वरी परा ।
अष्टाविंशतिधा सा वै गुणिता परमा कला ॥१६८॥
अष्टाविंशत्यक्षरी सा मृतसञ्जीवनी परा ।
उनत्रिंशगुणा देवी महानीलसरस्वती ॥१६९॥
त्रिंशद्गुणा यदा विद्या वसोर्धारा तदा स्मृता ।
एकत्रिंशद् गुणा देवी त्रैलोक्यमोहिनी भवेत् ॥१७०॥
द्वात्रिंशद्गुणिता चेत् स्यात्त्रैलोक्यविजया स्मृता ।
त्रयस्त्रिंशद् गुणा चेत् स्याच्छ्रीमच्छ्रीकामतारिणी ॥१७१॥
चतुस्त्रिंशद्गुणा शक्तिरघोराख्या तदा भवेत् ।
पञ्चत्रिंशद्गुणा देवी सङ्गीतमोहिनी भवेत् ॥१७२॥
षट्त्रिंशद् गुणिता विद्या बगलाख्या तदा भवेत् ।
सप्तत्रिंशद्गुणा शक्तिः प्रोक्ता विद्या त्वरुन्धती ॥१७३॥
अष्टात्रिंशद्गुणा चेत्स्यादन्नपूर्णेश्वरी मता ।
गुणितोनचत्वारिंशन्नकुली परिकीर्तिता ॥१७४॥
चत्वारिंशद्गुणा शक्तिः प्रोक्ता विद्या त्रिकण्टकी ।

---
[1] १६५, १६६-१६७ १/२ श्लो. ख. मा. पा. त्रुटिताः ।
[2] सा तदा - इति पाठ उचितः ।

गुणितैकचत्वारिंशत्तदा राजेश्वरी कला ॥१७५॥
द्विचत्वारिंशद्गुणिता त्रैलोक्याकर्षिणी तदा ।
त्रिचत्वारिंशद्गुणिता राजराजेश्वरी स्मृता ॥१७६॥
चतुश्चत्वारिंशद्गुणिता कुक्कुटी परिकीर्तिता ।
चत्वारिंशद्वाणगुणा सिद्धविद्या प्रकीर्तिता ॥१७७॥
चत्वारिंशत्षष्ठगुणा प्रोक्ता श्रीमृत्युहारिणी ।
चत्वारिंशन्मुनिगुणा महाभोगवती मता ॥१७८॥
चत्वारिंशद्वसुगुणा वासवी परिकीर्तिता ।
उनपञ्चाशद्गुणिता फेत्कारी परिकीर्तिता ॥१७९॥
पञ्चाशद्गुणिता देवी महाश्रीमातृसुन्दरी ।
पञ्चाशच्चन्द्रगुणिता मातृकोत्पत्तिसुन्दरी ॥१८०॥
एकैकमातृका वर्णं प्रति विद्यासकाशतः ।
उत्पन्ना परमेशानि स्वोत्पत्तिषु परायणा ॥१८१॥
यो भावो यस्य वै प्रोक्तास्तद्भावे संस्थिता शिवा ।
स्वेच्छया बलयं कृत्वा यथा कुण्डलिनी स्थिता ॥१८२॥
तथा विद्या सुसंयाता अक्षोभ्यमुनिरूपिणी ।
सार्धत्रिबलया देवी मनुष्यस्य प्रकीर्तिता ॥१८३॥
एवं विद्या समुत्पन्ना कुण्डलीतो महेश्वरी ।
येन तुष्टा तु या पूर्वा स तस्या ऋषिरीरितः ॥१८४॥
उपासकास्तदन्ये स्युरिति संक्षेपतो मतम् ।
अथातो ब्रह्म देवेशि व्याख्यास्यामि यथाक्रमम् ॥१८५॥
वीजाङ्कुरस्फटिकजवां ब्रह्मेति परिकीर्तितम् ।
तदिदं ब्रह्म चाख्यातं कालकालीमयं परम् ॥१८६॥
यावद्धि वर्णितुं शक्यं तावत्सगुणतां गतम् ।
तदेव सगुणं ब्रह्म वर्णनाशक्तिगोचरम् ॥१८७॥
वर्णनायामशक्तिर्हि यदा जाता महेश्वरी ।
तदेव निर्गुणं प्रोक्तं सगुणं वाच्यगोचरम् ॥१८८॥

वाग्भवं मुखमित्युक्तं मुखादुच्चार्यते च तत् ।
अवाच्यं यद् भवेद ब्रह्म तत्कथं मुखगोचरम् ॥ १८९॥
वाक्शक्त्या यन्त्रितं तच्च तस्माच्छक्तेः प्रधानता ।
शक्तिकोणे महेशानि ब्रह्मण्डानामनन्तकम् ॥१९०॥
सर्वं तिष्ठति देवेशि जगदेत्तच्चराचरम् ।
तस्याः कुण्डलिनीशक्तिरक्षोभ्या नागरूपिणी ॥१९१॥
स्वेच्छया गुणिता देवि स्वेच्छावर्णस्वरूपिणी ।
ब्रह्माण्डगोलो देवेशि काल्या तस्यै प्रदर्शितः ॥१९२॥
ब्रह्मगोलो विष्णुगोलो रुद्रगोलस्तृतीयकः ।
लोकेशगोलो देवेशि देवगोलस्ततः शिवे ॥१९३॥
ततो हि ऋषिगोलो हि क्रमाद् गोलाश्च कोटिशः ।
परं ब्रह्म च प्रकृतिः प्रतिबिम्बस्वरूपिणी ॥१९४।
महत्तत्त्वं ततो जातमहङ्कारस्ततः परम् ।
आकाशस्तु ततो जातस्ततो वायुः प्रकीर्तितः ॥१९५॥
ततोऽग्निश्च प्रजातोऽथ ह्यग्नेरापः प्रकीर्तिताः ।
पानीयात् पृथिवी जाता ततो ह्यौषधयः शुभाः ॥१९६॥
औषधीभ्यो भवेदन्नमन्नात्प्राणाः प्रकीर्तिताः ।
प्राणाज्जीवो हि संजातो जीवात्मपरमात्मकौ ॥१९७॥
ब्रह्मविम्वात्सर्वमेतत् जगदेव चराचरम् ।
अत एव भवेद् ब्रह्म जगदेतच्चराचरम् ॥१९८॥
सत्त्वं रजस्तम इति ब्रह्मविष्णुशिवादयः ।
ये चान्ये वहवो भूताः सर्वे प्रकृतिसम्भवाः ॥१९९॥
सैव देवी महाशक्तिः श्यामा दक्षिणकालिका ।
सैव प्रसूते विश्वं हि विश्वं सैव[1]प्रपाति च ॥२००॥

---

[1] प्रपाल्यते - इति क. मा. ख. मा. पा. ।

सैव संहरते विश्वं जगदेतच्चराचरम् ।
आधारः सर्वभूतानां सैव रोगार्तिहारिणी ॥२०१॥
इच्छा क्रिया तथा ज्ञानं ब्रह्मविष्णुशिवात्मिका ।
त्रिधा शक्तिस्वरूपेण सृष्टिस्थित्यन्तकारिणी ॥२०२॥
सृज्यते ब्रह्मरूपेण विष्णुरूपेण पाल्यते ।
ह्रियते रुद्ररूपेण जगदेत्तच्चराचरम् ॥२०३॥
यस्या योनौ जगत्सर्वं मध्ये प्रवर्ततेऽखिलम् ।
यस्यां [1]प्रलीयते विश्वं यस्यास्तज्जायते पुनः ॥२०४॥
यां समाराध्य त्रैलोक्यं सम्प्राप्तं पदमुत्तमम् ।
तस्या भेदं प्रवक्ष्यामि सावधानावधारय ॥२०५॥
कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा ।
लोकसम्मोहनार्थाय स्वरूपं बिभ्रती परा ॥२०६॥
वेणुनादसमारम्भसर्वसम्मोहनक्षमा ।
कदाचिदाद्या श्रीकाली सैव ताराऽस्ति पार्वति ॥२०७॥
कदाचिदाद्या श्रीतारा पुंरूपा रामविग्रहा ।
रावणस्य वधार्थाय देवानां स्थापनाय च ॥२०८॥
दैत्यसंहरणार्थाय पुंरूपं बिभ्रती परम् ।
आद्या तारा महाशक्तिः सैव काली महेश्वरी ॥२०९॥
या महावैष्णवी माया सा महासुन्दरी मता ।
[2] नैव स्त्री न पुमानेषा न चापि च नपुंसकम् ॥२१०॥
यद्यच्छरीरमाधत्ते युज्यते तेन तेन सा ।
कदाचिज्जायते सा स्त्री कदचिदपि सा पुमान् ॥२११॥
तत्तत्तनु वितनुते लीलार्थमरिमर्दिनी ।
सर्वे भेदाः कालिकायाः सैवाद्या परिकीर्तिता ॥२१२॥

---

[1] प्रणीयते - इति ख. मा. पा. ।
[2] नैव स्त्री ..... लीलार्थमरिमर्दिनी २१०, २११, २१२ (क) श्लो. ख.मा.पा. न सन्ति ।

**श्रीदेव्युवाच -**

देवेश श्रोतुमिच्छामि सिद्धिविद्यादिनिर्णयम् ।
तत्त्वं कथय देवेश यदि मे करुणा तव ॥२१३॥

**श्रीशिव उवाच -**

चतुर्युगक्रमेणैव भेदभेदान्तरे शिवे ।
सत्ये काली च श्रीविद्या कमला भुवनेश्वरी ॥२१४॥
सिद्धिविद्या महेशानि त्रिशक्तिर्बगला शिवे ।
महाविद्या सत्ययुगे मातङ्गी भैरवी शिवे ॥२१५॥
धूमावती च विद्या सा त्रेतायां शृणु पार्वति ।
काली तारा सुन्दरी च सिद्धिविद्या प्रकीर्तिता ॥२१६॥
मातङ्गी भुवना लक्ष्मीर्महाविद्या प्रकीर्तिता ।
धूमावती भैरवी च विद्यात्वेन महेश्वरि ॥२१७॥
द्वापरे कालिका तारा रोचिनी भैरवी तथा ।
सिद्धिविद्या महेशानि सुन्दरी भुवना रमा ॥२१८॥
[1] धूमावती महाविद्या मातङ्गी कमला तथा ।
विद्यात्वेन महेशानि कालौ काली तु केवला ॥२१९॥
काली तारा छिन्नमस्ता सिद्धिविद्या कलौ मता ।
सुन्दरी भैरवी लक्ष्मीर्मातङ्गी भुवनेश्वरी ॥२२०॥
महाविद्या महेशानि धूमा च बगला शिवे ।
विद्यात्वेन महेशानि कलौ सङ्कीर्तिता मया ॥२२१॥
कालिकायां महाकालश्चाक्षोभ्यस्तारिणीमनौ ।
त्रिपुरायान्तु राजेशो बगलायाञ्च त्र्यम्बकः ॥२२२॥
मातङ्ग्यान्तु महेशश्च भुवनेश्यां महेश्वरः ।
नारायणो महालक्ष्म्यां महादेवः शृणु प्रिये ॥२२३॥

---

[1] धूमावती ... रमा" श्लो. २१७ (ख), २१८ श्लो. ख.मा. न प्राप्येते ।

छिन्नायान्तु करालः स्यात्सिद्धायां कुक्कुटेश्वरः ।
धूम्रायान्तु अघोरः स्यादिति संक्षेपतो मतः ॥२२४॥
शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।
शिवं विना चित्कलायां न कलात्वं क्वचिद् भवेत् ॥२२५॥
बीजाङ्कुरन्याययोगाच्छिवशक्त्यात्मकं महः ।
सदा जागर्ति देवेशि नाना रूपाणि दर्शयन् ॥२२६॥
सर्वाभावे तु बटुको महाकालस्तथैवच ।
तारिण्यां बटुकः प्रोक्तः काल्यां कालः प्रकीर्तितः ॥२२७॥
कलौ कालीं कलौ काली कलौ काली तु केवला ।
साधिता कालनाथेन प्रत्यक्षा कालिका कलौ ॥२२८॥
कलौ कालीं विहायाथ यः कश्चिन्मोक्षकामुकः ।
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥२२९॥
कलौ कालीं विहायाथ यः कश्चिच्छान्तिमिच्छति ।
स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ॥२३०॥
कलौ कालीं विहायाथ यः कश्चिन्मोक्षकामुकः ।
स सिद्धान्नं परित्यज्य विषभोजनमिच्छति । २३१॥
कलौ कालीं विहायाथ यः कश्चित्काव्यमिच्छति ।
स तु दुःखनिवृत्त्यर्थं पापानि कुरुते सदा ॥२३२॥
स दरिद्रो महामूर्खो मम द्रोही स एव तु ।
युगत्रये च देवेशि कलिपूर्वे तु तत्त्वतः ॥२३३॥
अन्यां विद्यामपि भजन् सिद्धिमाप्नोति मानवः ।
कलौ काली स्पर्शमणिर्नान्या विद्या कदाचन ॥२३४॥
श्रीमहाकालिकाविद्या कलौ पूर्णफलप्रदा ।
अज्ञानाज्ज्ञानतो वाऽपि सलीलं वा सहेलया ॥२३५॥
स्मृताऽपि सिद्धिदा काली सकृदेव महेश्वरि ।
चतुर्युगानां राज्ञी वै कालिका परिकीर्तिता ॥२३६॥

विद्याराज्ञी सिद्धिविद्या कलौ शीघ्रफलप्रदा।
नामैक्याद् रूपसाम्याच्च महाविद्या प्रकीर्तिता ॥२३७॥
महाविद्या सिद्धिविद्या विद्याभेदैः [1]प्रतिष्ठिता।
उपविद्यादिभेदैश्च कालिका संस्थिता भुवि ॥२३८॥
ताराद्या सकला विद्या कालिकाया अजायत।
सर्वा विद्याः कालिकायां संस्थिता एव पार्वति ॥२३९॥
ब्रह्म शक्तिः शिवः शक्तिः शक्तिर्विष्णुर्जनार्दनः।
शक्तिरिन्द्रो रविः शक्तिः शक्तिश्चन्द्रो ग्रहा ध्रुवम् ।२४०॥
शक्तिरूपं जगत्सर्वं यो न जानति नारकी।
तेषां मध्ये प्रधानन्तु कालीरूपं मनोहरम् ॥२४१॥
विशेषतः कलियुगे नराणां भुक्तिमुक्तिदम्।
कलिर्हि यस्या दासस्य पादपूजां करोति हि ॥२४२॥

इति तन्त्रचिन्तामणौ सृष्टिक्रमनिरूपणात्मकः
प्रथमः प्रकाशः।
(मूलमातृकाया नव पत्राणि, श्लोकसंख्याः २४२

********

१ प्रकीर्तिता - इति ख. मा. पा.।

# द्वितीयः प्रकाशः

अथ दक्षिणकाल्यास्तु मन्त्रमुद्धारयाम्यहम् ।
यदेकबारं स्मरणात् किन्तद्यन्न करे स्थितम् ॥१॥
क्रोधीशं वह्निनसंयुक्तं त्रिमूर्तीन्दुसमायुतम् ।
त्रिर्लिखेत्परतो देवि हूंकारद्वयमेव हि ॥२॥
मायाद्वयं समालिख्य ह्यत्रिः संवर्त्तसूक्ष्मयुक् ।
णेंकालिके सप्तवर्णान् पूर्ववत् परमेश्वरि ॥३॥
स्वाहान्ते[1]च महाविद्या द्वाविंशत्यक्षरी परा ।
मननाद् विश्वविज्ञानं त्राणं संसारबन्धनात् ॥४॥
यतः करोति संसिद्धिर्मन्त्र इच्चुच्यते ततः ।

**विद्यामाहात्म्यम् –**

नात्र सिद्धादिचिन्ताऽस्ति नारिमित्रादिलक्षणम् ॥५॥
न च प्रयासबाहुल्यं न कायक्लेशसम्भवः ।
अस्याः स्मरणमात्रेण सिद्धयोऽष्टौ भवन्ति हि ॥६॥
एवं समस्तविद्यानां राज्ञीं स्तोतुं न शक्यते ।
वक्त्रकोटिसहस्त्रैस्तु जिह्वाकोटिशतैरपि ॥७॥
सर्वसिद्धिप्रदा देवी अनिरुद्धसरस्वती ।
तस्मादस्या ज्ञानमात्रात्सिद्धयः सम्भवन्ति हि ॥८॥
अनिरुद्धसरस्वत्या ज्ञानमात्रेण साधकः ।
पाण्डित्ये च कवित्वे च वागीशसमतां व्रजेत् ॥९॥
तस्य पाण्डित्यवैदग्ध्यविचित्रपद्यकल्पनात् ।
देवा अपि विलज्जन्ते किं पुनर्मानुषादयः ॥१०॥

---

[1] स्वाहन्तेयम् - इति ग. मा. पा. ।

अपि चेत्त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
अनिरुद्धसरस्वत्याः समो मन्त्रस्तदा भवेत् ॥११॥
य एनां चिन्तयेन्मन्त्री सर्वकामसमृद्धिदाम् ।
तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥१२॥
गद्यपद्यमयी वाणी सभायां तस्य जायते ।
ब्रह्महत्या सुरापानमगम्यागमनानि च ॥१३॥
सर्वमाशु तरत्येव दक्षिणामेव चिन्तयन् ।
वागीश्वरसमो वाचा धनेन धनदोपमः ॥१४॥
चन्द्रसूर्यसमो भूत्वा वसेत् कल्पायुतं दिवि ।
[1]इत्यादिमादिकं चैव बहु किं कथ्यते पुनः ॥१५॥
न तस्य दुर्लभं किञ्चिद् यः स्मरेद्घोरकालिकाम् ।
अश्वमेधैश्चगोमेधैर्नरमेधैस्तथा परैः ॥१६॥
दानैश्च विविधैरन्यैर्होमैर्नानाविधैरपि ।
अनेकपुण्यसम्भारैर्यदि सम्प्राप्यते परा ॥१७॥
विद्याराज्ञी घोरकाली ह्यनिरुद्धसरस्वती ।
ज्ञात्वैव मुक्तिमाप्नोति किं पुनः कथ्यते परम् ॥१८॥
मन्त्रस्य ज्ञानमात्रेण विजयी भुवि जायते ।
तस्याऽऽलोकनमात्रेण वादिनो निष्प्रभा मताः ॥१९॥
राजानोऽपि हि दासत्वं भजन्ते किं परे जनाः ।
वह्नेः शैत्यं जले स्तम्भं गतिस्तम्भं विवस्वतः ॥२०॥
दिवारात्रिव्यत्ययं च स कर्तुं भवति क्षमः ।
अस्यास्तु ज्ञानमात्रेण जीवन्मुक्तः प्रजायते ॥२१॥
वृहस्पतिसमो वाग्मी धरणीसदृशः क्षमी ।
श्रीरामसदृशो वीर्ये रूपे कामसमः स्मृतः ॥२२॥

---
१ इत्यादि स्यात् फलं नूनम् - इति पाठः समुचितः ।

समुद्र इव गाम्भीर्ये तेजसि भास्करोपमः ।
दुर्वासा इव शापादौ क्रोधादौ स यमोपमः ॥२३॥
सृष्टौ प्रजापतिः साक्षात् स्थितौ विष्णुसमस्तथा ।
लये हरसमो ह्येष एनां यो वेत्ति तत्त्वतः ॥२४॥
बहुना किमिहोक्तेन समानो नास्ति भूतले ।
अस्या जपो ब्रह्मजपोऽस्या ध्यानमात्म[1]चिन्तनम् ॥२५॥
योगसन्धारणं सम्यग् ध्यानमस्या न संशयः ।
महापदि महापापे महाग्रहनिवारणे ॥२६॥
महाभये महोत्पाते महाशोके महामये ।
महामोहे महासार्थे महादारिद्र्यसङ्कटे ॥२७॥
महारण्ये महाशून्ये महाज्ञाने महारणे ।
[2] दूरध्वे च दुरावासे दुर्भिक्षे दुर्निमित्तके ॥२८॥
समस्तं क्लेशसङ्घातं स्मरणादेव नाशयेत् ।
अस्या ज्ञानं ज्ञानमेवास्या[3]ध्यानमात्मचिन्तनम् ॥२९॥
तस्मादस्याः समा विद्या नास्ति तन्त्रे न संशयः ।
ब्रह्मादिभवने तस्य न समः किमु चापरः ॥३०॥
स एव सुकृती लोके स एव कुलभूषणः ।
धन्या च जननी तस्य येन देवी समर्चिता ॥३१॥
गाने च तुम्बुरुः साक्षाद्दाने कर्णसमोपमः ।
दत्तात्रेयसमो ज्ञानी येन देवी समर्चिता ॥३२॥
मेधा प्रज्ञा तथा लक्ष्मीर्बल्लभः सर्वजन्तुषु ।
अस्याः स्मरणमात्रेण देहज्ञानं प्रजायते ॥३३॥

---

[1] ध्यानमस्यात्मचिन्तनम् - इति क.मा.ख.मा.पा. ।
[2] दूराध्वनि - इति ख. मा.पा. ।
[3] ध्यानमस्यात्मचिन्तनम् - इति क. मा. ख. मा. पा. ।

कृते चैवापि त्रेतायां परे च द्वापरे युगे ।
प्रत्यक्षा देवताः सर्वा भक्ताधीना हि देवताः ॥३४॥
गुरुणा करुणासिन्धुवीरेण[1]चकितासिना ।
सेविता शुद्धबोधेन प्रत्यक्षा कालिका कलौ ॥३५॥
सर्वसिद्धिप्रदा साक्षान्महापातकनाशिनी ।
देवैर्देवत्वविषये सिद्धैः खेचरसिद्धये ॥३६॥
पन्नगै राक्षसैमर्त्यैर्मुनिभिश्च मुमुक्षुभिः ।
कामिभिर्धर्मिभिश्चार्थमीप्सुभिः सेविता सदा ॥३७॥

**तारामन्त्रः -**

अथातः सम्प्रवक्ष्यामि तारामन्त्रं कवित्वदम् ।
ॐ माया त्रीं हुं फडिति पञ्चवर्णो मनुर्मतः ॥३८॥

**छिन्नामन्त्रः**

प्रणवं च रमां लज्जां बीजद्वन्द्वं च वाग्भवम् ।
वज्रवैरोचनीये -ह्रीं-ह्रीं फट् स्वाहान्तराक्षरः ॥३९॥

**षोडशीमन्त्रः-**

श्रीवीजं शक्तिबीजञ्च कामबीजञ्च वाग्भवम् ।
वालान्तः-संस्थितं बीजं प्रणवञ्च ततः परम् ॥४०॥
शक्तिबीजं रमाञ्चैव विद्याञ्च परमेश्वरि ।
लोपां वा कामराजं वा त्रिकूटामथवा पराम् ॥४१॥
विन्यस्य पुनराद्यानि बीजानि पञ्च सुन्दरि ।
विपरीतक्रमेणैव विन्यसेत् षोडशी परा ॥४२॥

**भैरवीमन्त्रः-**

वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः ।
वियत्तदादिकेन्द्राग्निस्थितं वामाक्षिबिन्दुमत् ॥४३॥

---

[1] च विकाशिता - इति ख. मा.पा. ।

आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान् ।
पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ॥४४॥

**लक्ष्मीमन्त्रः-**

[1] ऐँ ह्रीं श्रीं क्लीं समुच्चार्य हसराडौं युताः पुनः ।
विसर्गान्ताः पञ्चमन्तु बीजमेतदुदाहृतम् ॥४५॥
जगत्प्रसूत्यै हृदयं द्वादशार्णो मनुर्मतः ।
प्रणवादिरयं मन्त्रः स्यात्त्रयोदशवर्णकः ॥४६॥

**मातङ्गीमन्त्रः-**

प्रणवञ्च ततो मायां कामबीजञ्च कूर्चकम् ।
मातङ्गी ङेयुता [2] चास्त्रं वह्निजायावधिर्मनुः ॥४७॥

**भुवनेश्वरीमन्त्रः-**

अथ वक्ष्ये महेशानि भुवनेशीमनूत्तमम् ।
नकुलीशोऽग्निमारूढो वामनेत्रार्धचन्द्रवान् ॥४८॥

**धूमावतीमन्त्रः-**

अथातः सम्प्रवक्ष्यामि धूमावत्या मनुं परम् ।
धूँ धूँ धूमावती स्वाहा मन्त्रोऽष्टाक्षर ईरितः ॥४९॥

**बगलामन्त्रः-**

तारं मायां समुच्चार्य वदेच्च बगलामुखी ।
तदग्रे सर्वदुष्टानां ततो वाचं मुखं पदम् ॥५०॥
स्तम्भयेति पदं जिह्वां कीलयेति ततः परम् ।
बुद्धिं विनाशय ह्रीं ॐ स्वाहा षट्त्रिंशदर्णकः ॥५१॥

---

१ ४५-४६ श्लोकौ ख. मातृकायां न प्राप्येते । तयोः स्थाने तत्र - आदौ श्रीबीजमुच्चार्य सहकलहरांस्तथा ।
इकारान्तान् विन्दुयुतान् द्वितीयं कूटमुच्यते ॥
पुनश्च: श्रीं समुच्चार्य मन्त्रस्त्र्यक्षर ईरितः ॥
- इति पाठो दृश्यते ।

२ चास्तम् - इति ख. मा. पा. ।

इत्येवं कालिकाभेदा दशविद्या उदीरिताः ।
देव्या दक्षिणसंज्ञायाः प्रवक्ष्यामि यथा विधिम् ॥५२॥
[1] कृते श्रुत्युक्तमार्गः स्यात्त्रेतायां स्मृतिभाषणम् ।
द्वापरे वै पुराणोक्तः कलावागमसम्भवः ॥५३॥
अशुद्धाः शूद्रकर्माणो ब्राह्मणाः कलिसम्भवाः ।
तेषामागममार्गेण सिद्धिर्न श्रौतवर्त्मना ॥५४॥
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ।
न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः ॥५५॥
उपासना त्रिधा प्रोक्ता श्रेष्ठा तत्र तु सात्त्विकी ।
यस्याञ्च मानसौ पूजाजपौ मुख्यतमौ स्मृतौ ॥५६॥
राजसो दक्षिणो मार्गः प्रतिमायाञ्च पूजनम् ।
बाह्योपचारैः पुष्पाद्यैस्तदा ध्यानं विशिष्यते ॥५७॥
तामसोपासनं प्रोक्तं पीठादौ बलिदानतः ।
वाममार्गेण तच्चाद्यं वर्णं हित्वा प्रशस्यते ॥५८॥
एषा व्यवस्था सम्प्रोक्ता वामदक्षिणयोः परा ।
आचारो द्विविधो देवि वामदक्षिणभेदतः ॥५९॥
पञ्चमुद्रादिसंयुक्तो वामाचारः प्रकीर्तितः ।
पञ्चमुद्रादिरहितो दक्षिणाचारसंज्ञकः ॥६०॥
मद्यं मांसतथा मत्स्यं मुद्रा मैथुनमेव च ।
मकारपञ्चकैर्देवीं योनौ कौलः प्रपूजयेत् ॥६१॥
वामहस्तात्पानपूजा क्रमाद्वामी प्रकीर्तितः ।
दक्षहस्तात्पानयोगाद्वामहस्तप्रतर्पणात् ॥६२॥
दक्षहस्तपूजनाद्धि कौल इत्यभिधीयते ।
केवलं दक्षहस्तेन पूजनाद्दक्षिणाभिधः ॥६३॥

---

[1] कृते .... विधानतः श्लो. ५३, ५४, ५५ ख. मातृकायां प्रथमप्रकाशे पठिताः ।

उपासना द्विधा प्रोक्ता सकामा कामविच्युता ।
मोक्षवीजा तु निष्कामा सकामा भवबीजका ॥६४॥
पन्थास्तु दक्षिणः श्रेष्ठो वामः श्रेष्ठतरो मतः ।
यस्तु वामं विजानाति स एव परमो गुरुः ॥६५॥
अहं जानामि सम्पूर्णं पादोनं सनकादयः ।
अर्धं चापि वशिष्ठाद्याः शक्राद्याः पादसम्मितम् ॥६६॥
जानन्ति नाथाः षष्ठांशं कोट्यंशमितरे जनाः ।
पतन्ति कोटयश्चात्र जायन्ते कृमियोनिषु ॥६७॥
तं मार्गं ये विजानन्ति ते मुक्ता नात्र संशयः ।
श्रीकृष्णो वाममार्गं तु फाल्गुनायोपदिष्टवान् ॥६८॥
मया चिन्तयता दृष्टो मुनिभ्यश्च निरूपितः ।
चाण्डालो वा तुरुष्को वा ब्रह्महा वाऽथ मस्करी ॥६९॥
श्रोत्रियो वा वाममार्गी [1] भुक्तेर्मुक्तेश्च भाजनम् ।
[2] वामदक्षिणमार्गौ हि [3]कालीताराविधौ स्मृतौ ॥७०॥

---

[1] भुक्तिमुक्त्योश्च भाजनम् - इति क.मा.ख.मा. पा. ।
[2] संलग्नः - इति ख. मा. अधिकः पाठः ।
[3]. कालीतारादिदक्षिणमार्गगा - इति ख. मा. पाठः ।

१-छिन्नाविधौ वाममार्गो बगला वामदक्षगा ।

सुन्दरी वामदिव्या च दक्षमार्गेऽपि संस्थिता ॥७१॥

बाला विद्या दक्षविद्या मातङ्गी वामदक्षिणा ।

केवला भुवना लक्ष्मीर्धूमा दक्षिणमार्गगा: ॥७२॥

सुमुखी वामसन्तुष्टा वटुको वामदक्षिण: ।

भैरवी वामयोगस्था बगला वामदक्षिणा ॥७३॥

पूर्वाम्नाये दक्षवामौ दक्षिणे दिव्यवामकौ ।

कौलदक्षौ पश्चिमे तु कौलवामौ तथोत्तरे ॥७४॥

१ ७१-७२ श्लोकौ ख. मातृकायां न प्राप्येते ।
ज्ञातोऽयं शुक्देवेन गर्भे संस्थेन धीमता ।
तं निन्दयति य: पापो विष्ठायां जायते कृमि: ॥
वाममार्गे च मन्त्राणि मया त्रीणि कृतानि तु ।
दत्तात्रेयाय चैकं तु श्रीकृष्णाय तथा परम् ॥
देव्यै दत्तं तृतीयं तु दत्तेन तु युगद्वये ।
बहवो व्रणचोधाश्च वाममार्गेण मोचिता: ॥
श्रीकृष्णाय तु यद्दत्तं तेन ते द्वापरे युगे ।
इह लोकं सुखं दत्त्वा देवलोके प्रवेशिता: ॥
यत्तन्त्रन्तु मया देव्यै दत्तं तेन विमोहिता: ।
पण्डितानामसंसारे यानि नास्ति मयो यथा ॥
तत्सारं संप्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
यद्वच्छैलेषु कनकं मेरौ तच्च स्फुटीकृतम् ॥
यत्र लोका विरज्यन्ति रज्यन्ते तत्र वामिन: ।
अङ्गीकुर्वन्ति यल्लोका वामिभिस्त्यज्यते तु तत् ॥
अथ धर्माणां तारतम्यमाह -
सर्वेभ्यश्चोत्तमा वेदा वेदाद् वैष्णवमुत्तमम् ।
वैष्णवादुत्तम: शैव: शैवाद्दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात्सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि ॥
मथित्वा ज्ञानदण्डेन वेदागममहार्णवात् ।
शङ्करेणोद्धृत: कौलो दध्नो घृतमिवेश्वरि ॥
तस्मात्कौलं समासाद्य लोकद्वयं सुखी भवेत् ।
सर्वधर्मात्परिभ्रष्ट: कुलधर्ममुपासते ॥
कुलधर्मात्परिभ्रष्टो रौरवं नरकं व्रजेत् ।
कुलधर्मं महामार्गं गत्वा मुक्तिपुरीं व्रजेत् ॥
अचिरान्नात्र सन्देहस्तस्मात्कौलं समाश्रयेत् ।
कुलधर्ममनादृत्य योऽन्यधर्ममुपासते ॥
स्वगृहे पायसं त्यक्त्वा भिक्षामत्येति दुर्मति: ।
वेदशास्त्रपुराणानां स्पष्टिर्वाराङ्गना इव ॥
अस्य शाम्भवशास्त्रस्य गुप्ति: कुलवधूरिव । - इति ख. मा. अधिक: पाठ: ।

ऊर्ध्वे दिव्यो महेशानि पाताले वाम एव च ।
[1]यक्षिण्याद्याः सर्वविद्याः कामिनी योगनायिकाः ॥७५॥
वाममार्गेण सिध्यन्ति नान्यथा सिद्धिदाः क्वचित् ।
वामदक्षिणयोगेन उभयाऽऽचारतत्परा ॥७६॥
शैवे शाक्ते गाणपत्ये सौरे स्वायम्भुवे तथा ।
चान्द्रे चीने पाञ्चरात्रे वैष्णवे वैदिकेऽपि च ॥७७॥
वामे चान्ते भविष्यन्ति [2] कलौ वै जातिजातयः ।
एवं दक्षिणमार्गेऽपि न हि वामं करोति चेत् ॥७८॥
तस्य सिद्धिर्न देवेशि मम वैरी प्रकीर्तितः ।
सर्वस्मादधिको वामधर्मः प्रोक्तः कुलागमे ॥७९॥
तत्रापि कालिकाताराविधौ प्रियतरौ स्मृतौ ।
कापालिके महेशानि वाममार्गोऽत्र कारणम् ॥८०॥
वाममार्गप्रकारेण सर्वं सिध्यति नान्यथा ।
वाममार्गं विना देवि न हि सिध्यन्ति देवताः ॥८१॥
[3] उत्तराम्नायसम्प्रोक्ता देवास्तुष्यन्ति पञ्चमैः ।
[4] न्यूनः पदार्थ एकश्चेत् साधकन्ते शपन्ति च ॥८२॥
पश्चिमाम्नायदेवानां सुरापानं कृताकृतम्
म-चतुष्टयमिच्छन्ति तद् विना प्रशपन्ति च ॥८३॥
पूर्वाम्नायोक्तदेवानां तन्मांसं च कृताकृतम् ।
आवश्यकं म-त्रयं च तद् विना प्रशपन्ति ते ॥८४॥
ऊर्ध्वाम्नायोक्तदेवानां ते मत्स्याश्च कृताकृताः ।
आवश्यकं म-द्वयं च विना तं प्रशपन्ति ते ॥८५॥

---

[1] ७५ (ख), ७६, ७७, ७९, ८०, ८१ - इति श्लोकाः ख . मा. न प्राप्यन्ते ।
[2] क्ले द्वे जातिजातयः - इति ग. मा. पा. ।
[3] आम्नायभेदाद्वामे मकारावश्यकतामाह- इति ख.मा. अधिकः पाठः ।
[4] ऊनः - इति ग. मा. पा. ।

दक्षिणाम्नायदेवानां निषिद्धं म-चतुष्टयम् ।
[1] मेनैकेन विना तेऽपि प्रशपन्ति हि साधकम् ॥८६॥
[2] कौलिकं कुर्वतः कर्म वैदिकं नाभिधीयते ।
वैदिकं कुर्वतः कर्म कौलिकं नाभिधीयते ।८७॥
विरोधादुभयं नष्टं तस्मादेकपथा चरेत् ।
वाममार्गी यदा दक्षं प्रविशेत्ततत्सुरैः स तु ॥८८॥
विहन्यते पीड्यते चाऽपि न सिद्धिमधिगच्छति ।
दक्षमार्गी यदा वामं प्रविशेत्तु सुरास्तदा ॥८९॥
लोकद्वयाद्यापयन्ति तं ग्रसन्ति च वामिनम् ।
तस्मात्स्वकुलमार्गं तु ज्ञात्वा कुर्यादुपासनाम् ॥९०॥
[3] यदृच्छया श्रुतं तन्त्रं छद्मनाऽपि बलेन वा ।
परेरितां वा गाथां वा तज्जपेद्यदनर्थकृत् ॥९१॥
न शास्त्रमालोक्य वदेन्नाचरेन्न जपेदपि ।
नोपदिशेन्न पश्येच्च नकुर्यान्नैव साधयेत् ॥९२॥
पुस्तके लिखितान् मन्त्रानालोक्य पूजयन्ति ये ।
ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम् ॥९३॥
तस्माद्दीक्षां प्रयत्नेन सदा कुर्याच्च तान्त्रिकीम् ।
अथ प्रथमतो दीक्षां प्रवक्ष्यामि विशेषतः ॥९४॥
दीयते ज्ञानविज्ञानं क्षीयन्ते पापराशयः ।
तेन दीक्षा इति प्रोक्ता प्राप्ता चेत् सद्गुरोर्मुखात् ॥९५॥
अदीक्षितानां मर्त्यानां दोषं शृण्वन्तु साधकाः ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं तथा ॥९६॥

---

[1] गुरूपदेशतो ... तद्भावभावितः - इति ११४ श्लोकोऽत्र ख. मा. पठितः ।
[2] श्लो. ८७, ८८ (क) ख. मा. पश्चात् पाठः ।
[3] ८७-८८ (क) ख. मा. पठिताः ।

अदीक्षितकृतं श्राद्धं श्राद्धं चादीक्षितस्य वा ।
गृहीत्वा पितरस्तेषां नरके च सुदारुणे ॥९७॥
पतन्त्येव न सन्देहो यावदिन्द्राश्चतुर्दश ।
सहस्रैरुपचारैश्च भक्तियुक्तो यजेद्यदि ॥९८॥
तथाप्यदीक्षितस्यार्चां देवा गृह्णन्ति नैव च ।
कर्माखिलं वृथा तस्माद्यस्माददीक्षितः पशुः ॥९९॥
तस्माददीक्षितं दृष्ट्वा किञ्चित्कार्यं न साधयेत् ।
दीक्षाग्रहणकाले तु पापराशिः पलायते ॥१००॥
निर्वाणपदसंयुक्तो बहिर्गच्छति तत्परः ।
तदा देवपितॄणां तु कार्यार्हो भवति स्वयम् ॥१०१॥
अन्यथा यत्कृतं कर्म [1] हुतं भस्मति हव्यवत् ।
सर्वाश्रमेषु दीक्षायां नित्यत्वं परिचक्षते ॥१०२॥
अनीश्वरस्य मर्त्यस्य नास्ति त्राता यथा भुवि ।
तथा दीक्षाविहीनस्य नेह स्वामी परत्र च ॥१०३॥
न तपोभिर्जपैर्होमैर्विविधैर्वापि साधनैः ।
[२] न क्रियाचित् कदाचित्तु दीक्षाहीनस्य सिध्यति ॥१०४॥
द्विजानामनुपेतानां स्वकर्माध्ययनादिषु ।
यथाऽधिकारो नास्तीह स्याच्चोपनयनादिषु ॥१०५॥
तथा चादीक्षितानाञ्च मन्त्रदेवार्चनादिषु ।
नाधिकारोस्त्यतः कुर्यादात्मानं मन्त्रसंस्कृतम् ॥१०६॥
दीक्षामूलं जगत्सर्वं दीक्षामूलं परं तपः ।
दीक्षामाश्रित्य निवसेद्यत्र कुत्राऽऽश्रमे [३] वसेत् ॥१०७॥

---

[१] हतम्-इति पाठः समुचितः ।
[२] न किञ्चिच्च कदाचित्तु - इति उचितः पाठ ।
[३] .जयत्-इति ग.मा.पा. ।

अदीक्षितश्च मरणे रौरवं नरकं व्रजेत् ।
अतो दीक्षेति संप्रोक्ता दैशिकैस्तन्त्रवेदिभिः ॥१०८॥
यावन्न प्राप्यते दीक्षा पुरुषार्थफलप्रदा ।
सर्वसिद्धिकरी दीक्षा सर्वसंपत्प्रदायिनी ॥१०९॥
प्रतिभास्वरवर्णानि कान्तिपुष्टिधरानि च ।
मोहनस्तम्भनाकृष्टिमारणोच्चाटनानि च ॥११०॥
वशीकार्यं सुकविता बुद्धिश्च धारणायुता ।
तारणं च समुद्रस्य वह्नेः शैत्यं रणे जयम् ॥१११॥
विपिने चाभयं चैव शोकदुःखापहं तथा ।
धर्मार्थकाममोक्षाँश्च ददात्येषा न संशयः ॥११२॥
१ अनेककोटिमन्त्रेभ्यस्तथा विद्याभ्य एव च ।
एकं गुरुमुखाल्लब्धं सर्वसिद्धिप्रवर्तकम् ॥११३॥
गुरूपदेशतो लब्धं जपन्यासार्चनादिकम् ।
पश्चात्तत्साधयेत्सर्वं सदा तद्भावभावितः ॥११४॥

इतिश्रीतन्त्रचिन्तामणौ
श्रीश्यामादिविद्योद्धारोपासनावश्यतापूर्वकमाहात्म्यकथनं
नाम द्वितीयः प्रकाशः ॥
(मूलमातृकायाः पञ्चपत्राणि, श्लोकसंख्या ११४)

*****

---
१ श्लोकः ११३ ख.मा. नास्ति ।

# तृतीयः प्रकाशः

यः शिवः सर्वगः सूक्ष्मश्चोन्मनो निष्कलोऽव्ययः ।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये ॥१॥
अत एव शिवः साक्षाद् गुरुरूपं समाश्रितः ।
दीनानुकम्पया देवि पर्य्येतः पृथिवीमिमाम् ॥२॥
मनुष्यचर्मणा नद्धः साक्षात्परशिवः स्वयम् ।
अत्रिनेत्रः शिवः साक्षादचतुर्वाहुरच्युतः ॥३॥
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ।
नरवद् दृश्यते लोके श्रीगुरुः पापकर्मणाम् ॥४॥
शिववद् दृश्यते साक्षान्नराणां पुण्यकर्मणाम् ।
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चतुषोऽग्रतः ॥५॥
मन्दभाग्या न पश्यन्ति ह्यन्धाः सूर्यमिवोदितम् ।
गुरुः सदाशिवः साक्षात्सत्यमेव न संशयः ॥६॥
शिव एव गुरुर्नो चेद् भुक्तिं मुक्तिं ददाति कः ।
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ॥७॥
उभयोरन्तरं नास्ति यः करोति स पातकी ।
१ घटश्च कलशः कुम्भः सर्वे चैकार्थवाचकाः ॥८॥
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थ उच्यते ।
न गुरोः सदृशं वस्तु न देवो शङ्करोपमः ॥९॥
न च कौलात्परो योगो न विद्या कालिकासमा ।
ग-कारो ज्ञानसम्पत्ती रकारस्तत्प्रकाशकः ॥१०॥
उकाराच्छिवतादात्म्यं दद्यादिति गुरुः स्मृतः ।
यद्यप्यधीतनिगमाः षडङ्गसहिताः प्रिये ॥११॥

---

१ "यया घटश्च कलशः कुभश्चैकार्यवाचकाः - इति ख. मा.पा. ।

आगमाद्यानि शास्त्राणि ज्ञानं नास्ति गुरुं विना ।
तस्माद् गुरुं समालोच्य भजते यः पुमान् शिवम् ॥१२॥
योगं ज्ञानं स्फुटं तस्यै ब्रुवते नात्र संशयः ।
तारकः को हि संसारे प्राणिनां सद्गुरुं विना ॥१३॥
असदगुरुः स्वयं नष्टः कथं तारयते परम् ।
धनार्थिनस्तु गुरवः शिष्याः सिद्ध्यर्थिनः कलौ ॥१४॥
तस्मान्न चोभयोः सिद्धिर्देवतानां विडम्बनम् ।
भक्तिश्रद्धान्वितो शिष्यो गुरुः सम्पूर्णलक्षणः ॥१५॥
सर्वोऽपि मार्गस्तत्कालं भुक्तिमुक्तिप्रदायकः ।

**गुरुलक्षणम्-**

तस्मादादौ प्रवक्ष्यामि लक्षणं गुरुशिष्ययोः ॥१६॥
श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः ।
सर्वलक्षणसंयुक्तः सर्वावयवशोभितः ॥१७॥
सर्वागमार्थतत्त्वज्ञः सर्वमन्त्रविधानवित् ।
लोकसम्मोहनाकारो देववत् प्रियदर्शनः ॥१८॥
सुमुखः सुलभः स्वच्छ इङ्गिताकारचेष्टवित् ।
अन्तर्मुखो वहिर्दृष्टिः सर्वज्ञो देशकालवित् ॥१९॥
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः[1] ।
वेदवेदाङ्गविच्छान्तः सर्वजीवदयापरः ॥२०॥
स्वाधीनेन्द्रियसञ्चारः षडङ्गीविजयक्रमः ।
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ॥२१॥
निर्मलो नित्यसन्तुष्टो निर्द्वन्द्वो नित्यशक्तिमान् ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक् ॥२२॥
भक्तप्रियः सर्वसमो दयालुः शिष्यशासकः ।

---

[1] क्षमः - इति ख.मा.पा. ।

स्वेष्टदेवमनुः प्राज्ञो वनितापूजनोत्सुकः ॥२३॥
नित्ये नैमित्तिके काम्ये एतत्कर्मण्यनिन्दितः ।
रागद्वेषभयक्रोधदम्भाहङ्कारवर्जितः ॥२४॥
यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ।
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनोज्झितः ॥२५॥
अलोलुपोऽहिंसकश्च पक्षपाती विचक्षणः ।
वित्तविद्यादिमन्त्रज्ञो यन्त्रतन्त्राद्यविक्रयी ॥२६॥
निःसङ्कल्पो निर्विकल्पो निर्णीतार्थोऽतिधार्मिकः ।
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामकः ॥२७॥
शुद्धचित्तो दयालुश्च ब्राह्मणो वेदपारगः ।

**कुलगुरुलक्षणम्-**

कुलीनः सर्वविद्यानामधिकारीति गीयते ॥२८॥
दीक्षाप्रभुः स एवात्र सर्वमन्त्रस्य नापरः ॥
अकुलं शिव इत्युक्तः कुलं शक्तिः प्रकीर्तिता ॥२९॥
कुलाकुलानुसन्धाननिपुणः कौलिकः प्रिये ।
कुलभक्तान् कुलाचारान् कुलज्ञानान् कुलव्रतान् ॥३०॥
प्रीतो भवति यो दृष्ट्वा कौलिकः स तु मे प्रियः ।
तत्त्वत्रयस्वीकरणान्मूलमन्त्रार्थतत्त्ववित् ॥३१॥
देवतागुरुभक्तश्च कौलिकः स्यात्तु दीक्षया ।
कुलाचाररतो नित्यं कुलशास्त्रप्रयोजकः ॥३२॥
शान्तः स्वाधीनः सर्वज्ञो लोभमोहविवर्जितः ।
क्रोधमोहसदात्यागी[1] निरोगी वीरवन्दितः ॥३३॥
सर्वाश्रयपरित्यागी ललनार्चनतत्परः ।
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ॥३४॥

---

[1] विरागी - इति ख.मा. पा. ।

नातिवालो न वृद्धश्च न खञ्जो न कृशस्तथा ।
नाधिकाङ्गो न हीनाङ्गो न खल्वाटो न दन्तुरः ॥३५॥
कृतज्ञो वाग्मिताशूरः प्रतिष्ठागमपारगः ।
वास्तुविद्याकृताभ्यासः शल्योद्धारविवेचकः ॥३६॥
क्रियानुक्रमवेत्ता च मुद्रातन्त्रविवेचकः ।
१ स्वविद्यानुष्ठानतया धर्मादीनां प्रकाशकः ॥३७॥
२ वर्णाश्रमज्ञानतया धर्माणाञ्च प्रकाशकः ।
षट्कर्मसुसिद्धो यो दाता भोक्ता न याचकः ॥३८॥
स एवं कौलिकाचार्यस्त्वन्यः कुलविडम्वकः ।
पिण्डपदं तथा रूपं रूपातीतं निरञ्जनम् ॥३९॥
यस्तु सम्यग्विजानाति स गुरुश्चोद्धरेत् परम् ।
पाशस्तम्भं वेधदीक्षां३ पशुग्रहणमेव च ॥४०॥
त्रिविधं यो विजानाति स गुरुः कथितः प्रिये ।
पशुपाशपशूनाञ्च४ रहस्यार्थविधानवित् ॥४१॥
यो जानाति वरारोहे स गुरुः परिकीर्तित ।
घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ॥४२॥
कुलं शीलं तथाऽऽसक्तिरष्टौ पाशाः प्रकीर्तिताः ।
पाशवद्धः पशुः प्रोक्तः पाशमुक्तो महेश्वरः ॥४३॥
तस्मात्पाशहरोऽप्यत्र स गुरुर्नान्य उच्यते ।
मूलादिव्रह्मरन्ध्रान्तं सप्ताम्भोजदलेषु च ॥४४॥
जीवाचारफलं वेत्ति स गुरुर्नापरः प्रिये ।

## कुलक्षणम्-

वह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ॥४५॥

---

[1] स्वविद्यानुस्थानतपो-इति ख.मा.पा. ।
[2] वर्णाश्रमज्ञानतपो-इति ख.मा पा. ।
[3] ४०,४१, ४२ श्लोका ख.मा. न प्राप्यन्ते ।
[4] पतीनाञ्च -इति पाठ समीचीन ।

हेतुवादरतो दुष्टो वाग्वादी गुणनिन्दकः ।
अरोमा वहुरोमा च निन्दिताश्रमसेवकः ॥४६॥
कालदन्तोऽसितोष्ठश्च दुर्गन्धश्वासवाहकः ।
दुष्टलक्षणसम्पन्नो यद्यपि स्वयमीश्वरः ॥४७॥
बहुप्रतिग्रहासक्त आचार्यश्रीक्षयावहः ।
अपुत्रो मृतपुत्रश्च कुण्डश्च वामनस्तथा ॥४८॥
कुनखी दीर्घदन्तश्च स्त्रीजितश्चाधिकाङ्गकः ।
हीनाङ्गः कपटी रोगी वहुवल्गी च कुब्जकः ॥४९॥
एतैर्दोषैर्विहीनो यः स गुरुः शिष्यभाजनः ।
स्वनाम्ना न गुरुः कार्यो भार्या च मातृनामिका ॥५०॥

**देशभेदाद् गुरुभेदनिरूपणम्-**

कुमारीहिमवन्मध्ये श्वेतकृष्णमृगान्विते ।
देशे जातस्तु यो विद्वानाचार्यत्वमथार्हति ॥५१॥
औज्जैन्या मध्यदेशाश्च कौरुक्षेत्राश्च लाटजाः ।
अन्तर्वेदीप्रतिष्ठानाश्चावन्त्या गुरवो वराः ॥५२॥
राधावारेन्द्रकास्तैरा गौर्जरा मागधास्तथा ।
अङ्गजातोद्भवाश्चेतिसप्तैते मध्यमाः स्मृताः ॥५३॥
आन्ध्राः कालिङ्गकार्णाटा महाराष्ट्राश्च पङ्कजाः ।
वीरजा द्राविडा पौण्ड्रास्त्वष्टौ ते गुरवोऽधमाः ॥५४॥
कामरूपाश्च चम्पाका नेपालोत्थाश्च सैन्धवाः ।
[1] वाङ्गा गान्धारपौलिङ्गाःसप्तैते चाधमाधमाः ॥५५॥
काञ्चीजाः कौशलाः काश्याः कावेराः कौङ्कणोड्रजाः ।
सौराष्ट्रा देवराष्ट्राश्च अष्टौ ते निन्दिता भृशम् ॥५६॥
अशेषकामदाः श्रेष्ठा मध्यमा भूतिदायिनः ।

---
[1] वाणा-इति ख.मा.पा. ।

अधमा ह्यशुभे नष्टा आर्यावर्ती न दोषभाक् ॥५७॥
चतुष्पदास्त्रिबोधाश्च षट्पदार्थविभूषिता: ।
[1] गोत्रगोचरसंयुक्ता: समयाद्युक्तलक्षणा: ॥५८॥
दीक्षास्थापनासम्पूर्णा ये जानन्त्यन्यसंहिताम् ।
आचार्यास्ते तु विज्ञेयाश्चापरे लोकदाम्भिका: ॥५९॥
सर्वं द्रव्यातिरिक्तं तु ह्यात्मानं वेत्ति यो नर: ।
सर्वलक्षणहीनोऽपि स गुरुर्नात्र संशय: ॥६०॥
पितृदीक्षा यतेर्दीक्षा या दीक्षा वनवासिनाम् ।
विविक्ताश्रमिणां दीक्षा पुत्रायुर्धननाशिनी ॥६१॥
प्रमादाद्वा तथा ज्ञानात्पितृदीक्षां समाचरन् ।
प्रायश्चित्तं तत: कृत्वा पुनर्दीक्षां समाचरेत् ॥६२॥
[2] त्यक्तागनय: क्रियाहीना यतयो निष्परिग्रहा: ॥
वानस्थास्तादृशा एवं वर्णी न्यूनाश्रमी यत: ॥६३॥
[3] अतस्तेषां नाधिकारो दीक्षादाने महेश्वरि ।
यतेर्दीक्षां गृहीत्वा तु कदाचिदपि मोहित: ॥६४॥
प्रायश्चित्ते धेनुरेका त्रिरात्रव्रतमेव वा
प्रायश्चित्तं तत: कृत्वा पुनर्दीक्षां समाचरेत् ॥६५॥
यदि भाग्यवशादेव सिद्धविद्यां लभेत् प्रिये ।
तदैव तान्तु दीक्षेत त्यक्त्वा गुरुविचारणाम् ॥६६॥
स्वेष्टविद्याप्रदाने तु न कुर्याद् गुरुचिन्तनम् ।
क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहक्षम: ॥६७॥
वैश्यस्यान्ते न कार्य: स्याद् द्वये नित्यमनुग्रह: ।
सजातीयेन शूद्रेण तादृशेन महामते: ॥६८॥

---

[1] गात्र- इति ख.मा.पा. ।

[2] ६३ तम: श्लोक: ख.मा. न प्राप्यते ।

[3] ६४-६५ श्लोकौ ख.मा. न प्राप्यते ।

अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा ।
वर्णोत्तमेऽथ चतुरे सति वा विश्रुतेऽपि वा ॥६९॥
स्वदेशतोऽथ वाऽन्यत्र नेदं कार्यं शुभार्थिना ।
विद्यमाने तु यः कुर्याद्यत्र तत्र विपर्ययः ॥७०॥
तस्येहामुत्र नाशः स्यात्तस्माच्छास्त्रोक्तमाचरेत् ।
विप्र एवेदृशः कार्यो गुरुर्नो चेत्तदेदृशः ॥७१॥
क्षत्रविट्शूद्रजातीयः प्रातिलोम्यं न दीक्षयेत् ।
आचार्यमातुलौ ऋत्विक् पितृव्यः श्वशुरो नृपः ॥७२॥
इति षड् गुरवोऽप्यत्र [1] प्रोक्ता मन्त्रविशारदैः ।
निर्वीर्यः स्यात्पितुर्मन्त्रस्तथा मातामहस्य च ॥७३॥
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ।
निर्वीर्यो हि पितुर्मन्त्रः शैवे शाक्ते न दुष्यति ॥७४॥
दक्षमार्गे तु निर्वीर्यः पितुर्मातामहस्य च ।
सोदरस्यागृहस्थस्य वामेमार्गेऽति वीर्यवान् ॥७५॥
न पत्नीं दीक्षयेद् भर्त्ता न पिता दीक्षयेत् सुताम् ।
न पुत्रं च तथा भ्राता भ्रातरं च न दीक्षयेत् ।७६॥
स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ।
साध्वी चैवं सदाचारा गुरुभक्ता जितेन्द्रिया ॥७७॥
सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥
गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता ॥७८॥
मात्रा दीक्षा प्रदेया वै स्त्रीणां सत्येन शाम्भवि ।
देवीपरम्परा प्राप्ता दीक्षा स्त्रीणां शुभा मता ॥७९॥
देवीपरम्परायां तु विशेषं श्रृणु सादरम् ।
देवीपरम्परोद्दिष्टा पारम्पर्यक्रमागता ॥८०॥

---

[1] प्रोक्तेति प्रारभ्य पितुर्मन्त्र इत्यन्तो भागः ख. मा. न प्राप्यते ।

स्त्रीणां दीक्षा परा जाता देवीदीक्षा शुभा मता ।
तत्परम्परया प्राप्ता दीक्षा सिद्धिप्रदा मता ॥८१॥
पुरुषाणां तत्सकाशाद् जाता दीक्षापरम्परा ।
मुख्यं शृणु महादेवि स्त्रीणां न नियमो मतः ॥८२॥
नियमः पुरुषे ज्ञेयो न योषित्सु कथञ्चन ।
शाक्ते विकल्पसहिते कथं दीक्षा भवेत् प्रिये ॥८३॥
गुरोः सकाशाच्चेद्देया तदा [1] सा भगिनी मता
[2] स्वयं वै यदि चेद्देया तदा कन्या प्रकीर्तिता ॥८४॥
अन्यतो दापनीया चेत्मार्गभ्रष्टा तदा भवेत् ।
मन्त्रशास्त्रे बहुविधा मार्गा देवि मयेरिताः ॥८५॥
तदर्थं शङ्कते चित्तं किं कार्यं वद शङ्कर ।
स्वसम्प्रदाये यः श्रेष्ठस्तत्सकाशात्तु दीक्षणम् ॥८६॥
शुभं प्रोक्तं महादेवि ह्यभावे शृणु सादरम् ।
त्रयोदश्यां कृष्णपक्षे चन्द्रवासरसंयुते ॥८७॥
तालपत्रे मनुर्लेख्यः संस्कारदशकं चरेत् ।
दशसंस्कारयोगेन सिद्धमन्त्रो भविष्यति ॥८८॥
तद्दिने पायसं कृत्वा दक्षिणामूर्तिसन्निधौ ।
पायसादि निवेद्याथ विल्वैः सम्पूज्य शङ्करम् ॥८९॥
इति कृत्वा वाचनीयमष्टोत्तरसहस्रकम् ।
संजप्य होमयेद्देवि तत्तन्मन्त्रोक्तवर्त्मना [3] ॥९०॥
वाचने नास्ति चेच्छक्तिस्तदा किं वा विधीयते ।
पुत्रद्वारा वाचनीयं स पुत्रो गुरुरेव तु ॥९१॥
एवं गृहीतमन्त्रस्तु सिद्धो हि भवति प्रिये ।

---

[1] कन्या प्रकीर्तिता - इति ख. मा. पा. ।
[2] स्वयं .... प्रकीर्तिता - इति ख. मा. नास्ति ।
[3] तत्तन्मन्त्रान्तवर्त्मना - इति ख. मा.पा. ।

अथवाऽन्यप्रकारेण दीक्षणं शृणु साम्प्रतम् ॥९२॥
नद्यां समुद्रगामिन्यां शुभे लग्ने शुभे दिने ॥
सम्प्रदायं पुरा पृष्ट्वा श्रीसूर्यमण्डलं लिखेत् ॥९३॥
साङ्गं सावरणं सूर्यं सम्पूज्य प्राणवल्लभे ।
तारं फट् मनुमालिख्य वाचयेत् तत्सकाशतः ॥९४॥
शताष्टवारं संवाच्य चाङ्गानां वामतो गतिः ।
तत्र सूर्यं गुरुं पूज्य सर्वसिद्धीश्वरो भवेत् ॥९५॥
इदं पशुपरं प्रोक्तं न तु वीरपरं प्रिये ।
वीराणां कौलिकानां तु भर्त्ता दीक्षणमाचरेत् ॥९६॥
भर्त्तुर्दीक्षाप्रदाने तु न दोषः कालिकागमे ।
शिवेन दीक्षा पूर्वन्तु गौर्यै दत्ता शुभावहा ॥९७॥
सा च पुत्र्यथवा भार्या तद्वदत्रापि पार्वति ।
न पुत्री गदिता सा तु वीरभार्या प्रकीर्तिता ॥९८॥

**[1]शिष्यलक्षणम्-**

सच्छिष्यं तं कुलेशानि सर्वलक्षणसंयुतम् ।
समाधिसाधनोपेतं गुणशीलसमन्वितम् ॥९९॥
शुद्धदेहं तपोवन्द्यं धार्मिकं शुद्धमानसम् ।
दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥१००॥
कृतज्ञं पापभीतञ्च साधुसज्जनसम्मतम् ।
[2] आस्तिकं दानशीलं च सर्वभूतहिते रतम् ॥१०१॥
विश्वासविनयोपेतं वित्तशाठ्यविवर्जितम् ।
असाध्यसाधनं शूरं बलकान्तिसमन्वितम् ॥१०२॥

---

[1] वामाचारैर्द्विजैः पूर्वं कर्त्तव्यं कुलदीक्षणम् ।
पश्चाद्दीक्षा तु सावित्र्या व्यत्यासात्पतितो भवेत् ॥
दीक्षा तु लघुदैवत्या प्राक् पश्चान्महतस्तथा ।
बृहद्दैवतमन्त्रे तु सिद्धे क्षुद्राः स्वयंवराः ॥
-इति ख. मा. अधिकः पाठः ।

[2] अधिकम्-इति ख.मा.पाठः ।

अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम् ।
हितसत्यमितस्निग्धभाषिणं मुक्तदूषणम् ॥१०३॥
सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम् ।
गृहतल्पासनोत्सङ्गनिर्विकारं सुसेवकम् ॥१०४॥
विमृष्यकारिणं धीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्यातिकुशलं धीरं सर्वोपकारकम् ॥१०५॥
अन्यार्थे परनिन्दायां सुमुखं विमुखं प्रिये ।
जितेन्द्रियं सुसन्तुष्टं मन्त्रज्ञं ब्रह्मचारिणम् ॥१०६॥
त्यक्ताधिक्यातिचापल्यं दुःशङ्कातङ्कवर्जितम् ।
गुरुध्यानस्तुतिकथाभजने सर्वदोत्सुकम् ॥१०७॥
गुरुदैवतभक्तं च कामिनीपूजनोत्सुकम् ।
[1] सर्वाज्ञापालकं देवि गुरुकीर्तिप्रशंसकम् ॥१०८॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्तिनं प्रेक्ष्यकारिणं कुलनायिके ॥१०९॥
लज्जाऽभिमानगर्वादिवर्जितं गुरुसन्निधौ ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥११०॥
रूपध्यानादिनिरतं मोक्षमार्गाभिगामिनम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥१११॥

**दुष्टशिष्यलक्षणम्-**

दुष्टानुयायिनं दुष्टं गुणहीनं विरूपिणम् ।
परशिष्यं च पाखण्डं धूर्तं पण्डितमानिनम् ॥११२॥
हीनाधिकविकलाङ्गं विकलावयवान्वितम् ।
पङ्गु च बधिरं चैव मलिनं व्याधिपीडितम् ॥११३॥

---
[1] गुर्वाज्ञापालकम्-इति ख.मा. पा. ।

उच्छिष्टं दुर्मुखं चापि स्वेच्छावेषधरं विटम् ।
दुर्विदग्धं कुचेष्टं च कुचेलं भीमवीक्षणम् ॥११४॥
निद्रालस्ययुतं तन्त्रद्यूतादिव्यसनान्वितम् ।
कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा ॥११५॥
पैशुन्ययुक्तिकं क्षुद्रं श्रद्धाभक्तिविवर्जितम् ।
[1] किम्वेति वादिनं स्तब्धं प्रेषकं चपलं शठम् ॥११६॥
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ।
रहस्यभेदकं चापि देवकार्यार्थघातकम् ॥११७॥
मार्जारवकवृत्तिं च रन्ध्रान्वेषणतत्परम् ।
मायान्वितं कृतघ्नं च प्रच्छन्नोत्तरदायकम् ॥११८॥
विश्वासघातकं देवद्रोहिणं पापकारिणम् ।
अविश्वासमवद्याङ्गमनर्थसिद्धिकाङ्क्षिणम् ॥११९॥
आततायिनमाविष्टं कुत्सितं कूटसाक्षिणम् ।
सर्वत्र याचकं देवि सर्वोत्कृष्टाभिगामिनम् ॥१२०॥
असत्यनिष्ठं चाशक्तं ग्राम्यादिबहुभाषितम् ।
दुर्विचारकुतर्कादिकारकं कलहप्रियम् ॥१२१॥
वृथाक्षेपकरं भ्रान्तं प्रत्यक्षे प्रियवादिनम् ।
वाग्रुक्षवादिनं विद्यावचसोऽनुप्रशंसकम् ॥१२२॥
गुणासहिष्णुं सद्भीतमतिक्रोधसमन्वितम् ।
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम् ॥१२३॥
पिशुनं परसन्तापसर्वप्राणिभयङ्करम् ।
अक्लेशवादिनं मित्रद्रोहिणं भ्रातृवञ्चकम् ॥१२४॥
जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहास्यक्लेशचक्रादिकारकम् ॥१२५॥

---

[1] किमंति -इति ख. मा. पा. ।

अतिहास्यस्य कर्तारं सान्तरं परिहासकम् ।
कामुकं चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥१२६॥
असूयामदमात्सर्यदम्भाहङ्कारसंयुतम् ।
ईर्ष्यापैशुन्यपारुष्यकार्पण्यक्रोधशालिनम् ॥१२७॥
अधीरं दूषितं द्वेष्यमशक्तं मतिवर्जितम् ।
[1] अस्पष्टमतिमूढं च चिन्तादलितमानसम् ॥१२८॥
लोभभ्रष्टं पुनर्दीनमतुष्टं सर्वयाजकम् ।
वह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥१२९॥
भक्तिश्रद्धादयाशान्तिधर्माचारविवर्जितम् ।
मातृपितृगुरुप्राज्ञमहतां हास्यकारकम् ॥१३०॥
कुलद्रव्यादिवीभत्सुं गुरुसेवाभिमानिनम् ।
स्त्रीदुष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि ॥१३१॥
इत्यादिविगुणोपेतं गुरुः शिष्यं परित्यजेत् ।

**श्रीदेव्युवाच-**

असिद्धो गुरुणा दत्तो मन्त्रः शिष्याय वा गुरुः ॥१३२॥
[2] सिद्धो मन्त्रान्तरे देवे नैव सिद्धोऽथवा गुरुः ।
भिन्नाम्नायो यदा शिष्यस्तद्भिन्नाम्नायदेवताम् ॥१३३॥
सेवते तत्र देवेश कीदृक्सिद्धिस्तु तद् वद ।

**ईश्वर उवाच-**

गुरुस्तु दक्षिणाम्नायी सर्वाम्नायेषु दीक्षितः ॥१३४॥
ऊर्ध्वाम्नायी तथाऽन्येषु पूर्वाम्नायी परेषु च ।
द्वयोस्तु पश्चिमाम्नायी ह्युत्तरस्त्वधरे भवेत् ॥१३५॥
अधरे नैव कुत्रापि गुरुत्वं पारलौकिकम् ।
दक्षिणोपासकः काले ऊर्ध्वः सायुज्यमाप्नुयात् ॥१३६॥

---

१ अप्रस्वम्-इति ख.मा. पा. ।
२ सिद्धे-इति ख.मा. पा. ।

देवतायास्तथा पूर्वः सारूप्यं लभते परः ।
सामीप्यं चोत्तरो लोकमधोगस्त्वैहिकं फलम् ॥१३७॥
लोभत्यागश्चोपकारो ह्यधोमार्गेऽप्युदर्ककृत् ।
मन्त्रान्तरे च संसिद्धो गुरुर्मन्त्रं प्रयच्छति ॥१३८॥
यथोक्ताऽऽचरणात्तस्य सिद्धिः शिष्यस्य जायते ।
कृपावशात्सिद्धमन्त्रं ददाति च यदा गुरुः ॥१३९॥
विना जपं विना पूजां सिद्धयस्तत्करे स्थिताः ।
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ॥१४०॥
उपदेशं ददन् गृह्णन् प्राप्नुयाद् वै पिशाचताम् ।
स्नेहाद्वा लोभतो वाऽपि यदि गृह्णाति दीक्षयेत् ॥१४१॥
तस्मिन् गुरौ सशिष्ये तु देवता शापदा भवेत् ।
तस्मादेवंविधं शिष्यं न गृह्णीयात् कथञ्चन ॥१४२॥
यदि गृह्णाति मोहेन तत्पापैर्व्याप्यते गुरुः ।
मन्त्रिपापं च राजानं पतिं जायाकृतं यथा ॥१४३॥
तथा शिष्यकृतं पापं प्रायो गुरुमपि स्पृशेत् ।
ज्ञानेन कृपया वाऽपि गुरुः शिष्यं परीक्षयेत् ॥१४४॥
सम्वत्सरं तदर्धं वा तदर्धं वा तदर्धतः ।
उत्तमानधमान् कार्ये नीचानुत्तमकर्मणि ॥१४५॥
प्राणद्रव्यप्रदानाद्यैर्देशस्य सममानसैः ।
उन्मर्मसूचकैर्वाक्यैर्मायाभिर्गुरुचेष्टितैः ॥१४६॥
पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः ।
आकृष्टः पीडितश्चापि यो विषादं नगच्छति॥१४७॥
गुरुः कृपां करोतीति सदा संचिन्तयेत् सदा
श्रीगुरोः स्मरणे चापि कीर्तने वाऽपि वन्दने ॥१४८॥
परिचर्यायां मार्गेण प्रेषणेऽन्वेषणे प्रिये ।
आनन्दकम्परोमाञ्चस्मरनेत्रादिविक्रिया ॥१४९॥
येषां स्यात्तेऽत्र योग्याः स्युर्मन्त्रसिद्धिरपीश्वरि ।

बोधकत्वं च विज्ञाय शिष्यो भूयान्नचान्यथा ॥१५०॥
आदिमध्यावसाने यो न्याय: शक्तिनिपातित: ।
अधमा मध्यमा: श्रेष्ठा: शिष्या देवि प्रकीर्तिता ॥१५१॥
आदौ भक्तिर्भवेद् देवि दीक्षार्थं सम्वदन्ति ये ।
पुनर्विलुप्तभावास्ते आदियोग्या इतीरिता: ॥१५२॥
दीक्षासमयं सम्प्राप्य ज्ञानविज्ञानवर्जिता: ।
तस्मात्प्रध्वस्तवीर्या ये मध्ययोग्या इतीरिता: ॥१५३॥
आदौ भक्तिविहीनो यो मध्ये भक्तोऽस्ति वा न वा ।
अन्ते च प्रतिभक्ति: स्यादन्तयोग्या भवन्ति ते ॥१५४॥
कुर्वन्नाचार्यशुश्रूषां मनोवाक्कायकर्मभि: ।
शुद्धभावो महोत्साहो बोद्धा शिष्य इति स्मृत: ॥१५५॥
स तूपदेश्य: पुत्रश्च व्यत्ययी वसुदस्तथा ।
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ॥१५६॥
अथवा विद्यया विद्या चतुर्थी नोपपद्यते ।
नित्यश: कायवाक्चित्तैस्त्रिद्वयेकावृत्तिकावधि ॥१५७॥
परीक्ष्य स परिग्राह्य: सद्य: संयतमानस ।
तयोर्वत्सरमात्रेण ज्ञातान्योऽन्यं भविष्यति ॥१५८॥
गुरुता शिष्यता वाऽपि नान्यथेति विनिश्चये ।
शिष्यश्च सद्गुरोर्मन्त्रं गृहीत्वा तं परित्यजेत् ॥१५९॥
गुरुत्यागकर: शिष्य: प्रायश्चित्ती भवेद् ध्रुवम् ।
यदि दैवात्पशोर्विद्यां लभ्यते कुलजैर्नरै: ॥१६०॥
द्विजन्तु कौलिकं प्राप्य पुनर्विद्यामुपालभेत् ।
यो गृह्णाति पशोर्विद्यां [1] तस्याधिर्गात्रपीडनम् ॥१६१॥
भवत्येव न सन्देहो वन्धूनां चैव वा भवेत् ।

[1] तस्याधिग्गात्रपीडनम् -इति ख.मा.पा. ।

१ सद्गुरुं तु समाश्रित्य गृह्णीयात् संस्कृतं मनुम् ॥१६२॥
श्रीगुरुं लक्षणोपेतं संशयच्छेदकारकम् ।
लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥१६३॥
अनभिज्ञं गुरुं प्राप्य संशयवृद्धिकारकम् ।
शिष्यो गुर्वन्तरं गत्वा तद्दोषैर्नानुलिप्यते ॥१६४॥
गुरवो बहवः सन्ति कुमन्त्रौषधवेदिनः ।
निगमागमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥१६५॥
अभिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शिलां सन्तारयेन्नौर्हि न शिला तारयेच्छिलाम् ॥१६६॥
मधुलुब्धो यथा भृङ्गःपुष्पात्पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥१६७॥
न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः ।
मन्त्राभावादमन्त्रेण भाषितुं सर्वमर्हति ॥१६८॥
यावद्वर्णान् हि मन्त्राणां शूद्राय प्रतिपादयेत् ।
तावन्तो ब्रह्महत्याः स्युस्तस्मात्संस्कारयेच्च २ तान् ॥१६९॥
स्वाहोंकारेणरहितं दद्यात्पश्चाच्च तान्त्रिकम् ।
स्वागमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् ॥१७०॥
कर्तव्यं संस्कृतैस्तैश्च ह्यागमोक्तेन वर्त्मना ।
शूद्रस्य वाचने देवि ह्याधिकारो हि वर्तते ॥१७१॥
३ तन्त्रोक्तं प्रणवं देवि वह्निजायां च पार्वति ।
वाचनं धारणं देवि कर्तव्यं सततं प्रिये ॥१७२॥
पुरा नोक्तं महेशानि यो जपेच्छूद्रपामरः ।
सदा स पच्यते घोरेयावदिन्द्राश्चतुर्दश॥१७३॥

---

१ अथ दुष्टमन्त्रपरित्यागप्रकारः । बटपत्रे लिखित्वा तु तन्मन्त्रं स्रोतसि क्षिपेत् -इति ख.मा. अधिकः पाठः ।
२ तम् - इति ख.मा.पा. ।
३ तन्त्रोक्तं......... पार्वति-इति पाठः ख.मा. न प्राप्यते ।

प्रणवं बह्निजायां च न शूद्रोऽप्युच्चरेत्क्वचित् ।
प्रणवोच्चारणाद्धोमाच्छालग्रामशिलार्चनात् ॥१७४॥
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ।
शूद्रस्य प्रणवोच्चारं पुराणेऽसम्मतं प्रिये ॥१७५॥
तस्माद्यत्नेन कर्तव्यं तन्त्रोक्तं शूद्रजातिना ।
महाविद्याप्रभावेण शूद्रो वैश्यत्वमाप्नुयात् ॥१७६॥
प्राणवाद्यं महेशानि गृह्णीयुः शूद्रजातयः ।
एतद्दीक्षा परं तत्त्वं सुगोप्यं परमेश्वरि ॥१७७॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पौलस्त्यजातयः ।
पञ्चधा मनवः ख्याताः प्रदेयाश्चानुलोमतः ॥१७८॥
मायाबीजं ब्राह्मणः स्याच्छ्रीबीजं क्षत्रियः स्मृतम् ।
कामबीजं भवेद् वैश्यः वाग्भवं शूद्र ईरितम् ॥१७९॥
चतुर्बीजपरित्यक्तो मन्त्रः पौलस्त्यसंज्ञकः ।
चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम् ॥१८०॥
बीजद्वयं तु वैश्यानां शूद्राणां त्वेकबीजकम् ।
हीनवर्णाय नो दद्यान्मन्त्रं त्वधिकवर्णकम् ॥१८१॥
उमा महेश्वरं चैव दक्षिणामूर्त्यघोरकम् ।
हयग्रीवं च वाराहमष्टाक्षरमतः परम् ॥१८२॥
प्रणवाद्यं वासुदेवं लक्ष्मीनारायणं तथा
वर्णत्रये च दातव्यं नान्यवर्णे कदाचन ॥१८३॥
पाशुपतं नारसिंहं तथा चैव सुदर्शनम् ।
वर्णद्वये च दातव्यं नान्येषां चैव कर्हिचित् ॥१८४॥
अग्निमन्त्राश्च ये केचित्सूर्यमन्त्राश्च ये तथा ।
तारादिघृणिमन्त्राश्च दातव्याश्च त्रिवर्णिके ॥१८५॥
आनुष्टुभाः शक्तिमन्त्रास्तथा विन्ध्यनिवासिनी ।
नीलसरस्वती चैव दातव्याश्चादिवर्णिके ॥१८६॥

मातङ्गिन्युग्रतारा च कालिका श्यामला तथा ।
छिन्नमस्ता च बाला च दातव्या सर्ववर्णके ॥१८७॥
तारादिस्तु गणेशश्च हरिद्रासंज्ञकस्तथा ।
त्रिवर्णेष्वेव दातव्यः पुरन्ध्रीणां विशेषतः ॥१८८॥
प्रणवं मायां लक्ष्मीं च वाग्भवं चान्यबीजकम्
[1] एतद्बीजेनसंयुक्तं दातव्यं चादिवर्णके ॥१८९॥
मायां लक्ष्मी वाग्भवं च दातव्यं क्षत्रियेष्वपि ।
लक्ष्मीं च वाग्भवं चापि कथितं वैश्यवर्णके ॥१९०॥
वाग्भवं चान्यबीजञ्च शूद्राणां च समीरितम् ।
हृदादिहुँफट्कारादि सङ्कराणां प्रशस्यते ॥१९१॥
कल्पोक्ता वैदिका विप्रे देया विन्ध्यनिवासिनी ।
ब्राह्मणे क्षत्रिये वाऽपि देयाः पाशुपताभिधाः ॥१९२॥
सौदर्शना नारसिंहाः कार्तवीर्यस्य नान्यतः ।
वर्णत्रयेऽपि दातव्यं दक्षिणामूर्त्यघोरकम् ॥१९३॥
अष्टाक्षरं हयग्रीवमुमामाहेश्वरं तथा ।
लक्ष्मीनारायणं चास्त्रं देवीं तारां बराहकम् ॥१९४॥
अग्नेः सूर्यस्य घृणयस्ताराद्याश्च गणेश्वराः ।
सर्ववर्णेषु दातव्याः कालिका श्यामला तथा ॥१९५॥
छिन्नमस्ता च वाला च मातङ्गिन्युग्रतारिका ।
योगिनीनां यक्षिणीनां त्रैपुरा बटुकादयः ॥१९६॥
शावराश्च पुलस्त्याश्च, न जाप्या द्विजजन्मनि ।
पन्थानो बहवः प्रोक्ता मन्त्रशास्त्रमनीषिभिः ॥१९७॥

---

[1] "मायां लक्ष्मीं वाग्भवं च दातव्यं चादिवर्णके - इति ख. मा. अधिकः पाठः ।

स्वगुरोर्मतमाश्रित्य शुभं कार्यं न चान्यथा।
[1] अथ मन्त्रो जप्यमानस्त्वन्याचारेषु तत्परैः ॥१९८॥
संप्रदायेन सम्भिन्नः सर्वदोषसमन्वितः।
एवं ते कथितं देवि लक्षणं गुरुशिष्ययोः ॥१९९॥

इति श्रीतन्त्रचिन्तामणौ गुरुशिष्यमन्त्रनिर्णयनाम
तृतीयः प्रकाशः।
(मूलमातृका क-७ पत्राणि। श्लोकाः १९९ ॥)

*****

[1] अथ मन्त्रो ... सर्व-दोष-समन्वितः - इति पाठो ख. मा. न प्राप्यते।

# चतुर्थः प्रकाशः

**श्रीदेव्युवाच-**

शतशोऽत्र जना देव तन्त्रमार्गेपु संस्थिताः ।
सिद्धिर्न दृश्यते क्वापि किं परत्र भविष्यति ॥१॥
यदि कर्म प्रधानं च देवताऽऽराधनेन किम् ।
देवताऽऽराधनं सत्यं साधका दुःखिनः कथम् ॥२॥
एनम्मे संशयं छिन्धि किं चक्रैश्चापि मात्रकैः ।
संस्काराश्च कथं कार्याः साधकानां वदस्व तत् ॥३॥

**ईश्वर उवाच-**

गर्भे कर्मत्रयं कुर्याज्जातमात्रे तथा दश ।
ततः कर्मत्रयं चेति संस्काराः षोडशः स्मृताः ॥४॥
द्विजातीनां तथा मन्त्रे कुर्यात् कर्मत्रयं गुरुः ।
दश शिष्यस्ततः कुर्यात्सिद्ध[1] मन्त्रः पुनस्त्रयं ॥५॥
षडेव जन्मसंस्काराः प्रोक्तास्त्रीशूद्रयोरपि ।
तथैव मन्त्रसंस्काराः षोडशः परिकीर्तिताः ॥६॥
चाण्डालादिषु चत्वारो मन्त्रे तावन्त एव हि ।
त्रयश्च यवनादीनां तन्मन्त्रेष्वपि ते त्रयः ॥७॥
वामदक्षिणभेदेन तेषां कर्तव्यतां शृणु ।
[2] आज्यस्थाने सुरां वामे होमाद्यर्थं प्रकल्पयेत् ॥८॥
पाकादिषु च मांसं [3] स्याच्छाकादौ नियमाः स्मृताः ।
मैथुनं ब्रह्मचर्यञ्च[4] मुद्रास्तत्कर्मकास्तथा ॥९॥

---

[1] सिद्धिमन्त्रे - इति ख.मा. पा. ।
[2] अर्घ्यस्थाने - इति ख.मा.पा. ।
[3] ध्यंकादौनिमय - इति ग.मा. पा. ।
[4] ब्रह्मचर्यस्य - इति ग.मा. पा. ।

## गर्भाधानसंस्कारः-

गर्भाधानं स्वकल्पोक्तवर्त्मना प्रथमं भवेत्।
दक्षिणानामथो वामे दूतीयागं समाचरेत्[1] ॥१०॥

---

[1] रजस्वला तु या नारी तस्या दिनविनिर्णय ।
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥
तृतीये रजकी चैव चतुर्थेऽहनि शुद्ध्यति ।
रक्ताधिका भवेन्नारी नरः शुक्राधिको भवेत् ॥
नपुंसकं ततो जाते समेच रजवीर्ययोः ।
चतुर्थे तु दिने पुंसां संयोगो यदि जायते ॥
तदा पुत्रो भवेन्नूनं स चाल्पायुः प्रकीर्तितः ।
विद्याचारपरिभ्रष्टो दरिद्रो गुणवर्जितः ॥
बहुक्लेशसमायुक्तो नानादोषस्य भाजनम् ।
तस्मादत्र न संयोगः कर्तव्यः सुधिया किल ॥
पञ्चमे तु दिने पुंसां संयोगो यदि जायते ।
तदा भवेच्छुभा कन्या चेति जानीहि पार्वति ॥
षष्ठे दिने यदा विज्ञै स्त्रीसंयोगो विधीयते ।
तदा पुत्रो भवेद्धीरः क्षमायुक्तो न संशयः ॥
सप्तमे तु दिने पुंसां संयोगो जायते यदि ।
तदा कन्या भवेन्नूनं शुभाशुभप्रदायिनी ॥
अष्टमे तु दिने धीरः संयोगं कुरुते यदि ।
तदा पुत्रो भवेन्नूनं धार्मिकः सुन्दरो वरः ॥
ईश्वरः पण्डितश्चापि कविः शूरो विचक्षणः ।
नानागुणगणाकीर्णः सुदीर्घायुः प्रकीर्तितः ॥
नवमे तु दिने पुंसां संयोगो जायते यदि ।
सुभगा स्यात्तदा कन्या शोभिनी शुभदायिनी ॥
दशमे तु दिने विज्ञः संयोगं कुरुते यदि ।
तदा नूनं भवेत् पुत्रः पुरुषपूत्तमोत्तमः ॥
एकादशे दिने पुंसां संयोगो यदि जायते ।
तदा प्रजायते कन्या सर्वावयवसुन्दरी ॥
द्वादशे तु दिने धीरः संयोगं कुरुते यदि ।
तदा तत्र भवेत्पुत्रः पुरुषपूत्तमोत्तमः ॥
त्रयोदशे दिने पुंसां संयोगो जायते यदि ।
तदा कन्या भवेत्तत्र समाकीर्णा च पार्वति ॥
सर्वपापसमाकीर्णा नानादोषविलक्षिता ।
पुंश्चलीत्वसमायुक्ता दूरं याति तदा तु सा ॥
चतुर्दशे तु संयोगो कामुक्या यदि जायते ।
तदा पुत्रो भवेन्नूनं चौरश्छिन्नादिकारण ॥
पञ्चदशादिने पुंसां संयोगो जायते यदि ।
सर्वभोगकरी कन्या पतिव्रता तदा भवेत् ॥
षोडशे तु दिने पुंसां संयोगः क्रियते यदि ।
तदा नूनं भवेत् पुत्रः समाकीर्णो हि पार्वति ॥
सर्वसिद्धसमायुक्तः सर्वावयवसुन्दरः ।
षोडशानां दिनानां च कथितं लक्षणं शिवे ॥
-इति ख मातृकायामधिकः पाठः ।

सन्तर्पयेदङ्गदेवमन्त्रै र्योनिञ्च तीर्थतः ।
अस्या अङ्गे देवताया मन्त्रन्यासं समाचरेत् ॥११॥
सर्वन्यासात् स्त्रिया देहे भावयेत्तां च भैरवीम् ।
स्वयं च भैरवो भूत्वा रतिकर्म समाचरेत् ॥१२॥
सुखासनस्थो भगगं ध्वजं कृत्वा जपेदमुम् ।
मन्त्रं पञ्चसहस्त्रं तु यथेष्टं लभते सुतम् ॥१३॥
लक्ष्मीप्राणेश्वरी चेति मम पाहि नवाक्षरः ।
तस्याः सोमे तस्य सूर्ये गर्भस्तिष्ठेद्वरात्मजे ॥१४॥

**पुंसवनाख्यः संस्कारः-**

अथ द्वितीयः संस्कारः कार्यः पुंसवनाभिधः ।
तृतीये मासि कुर्वीत ह्यथ पुंसवनं वुधः ॥१५॥
वेदोक्तप्रोक्तदिवसे स्वकल्पोक्तेन वर्त्मना ।
तत्र वैदिकमुख्यस्य होमस्थाने स्वदेवताम् ॥१६॥
जुहुयात् कारणेनैव चतुराहुतिसंख्यया ।
तदाऽऽवरणदेवानां पुरुषाणां द्वयं द्वयम् ॥१७॥
एका स्त्रीणां वाममार्गे शेषं पूर्ववदीरितम् ।
सतीर्थं सपशुं पात्रं निशायां भैरवो बलिः ॥१८॥

**सीमन्ताख्यः संस्कारः-**

अथ तृतीयः संस्कारः सीमन्ताख्यः प्रकीर्तितः ।
चतुर्थषष्ठाष्टमेषु मास्सु सन्मध्यमाधमः ॥१९॥
ज्योतिःशास्त्रोक्तदिवसे स्वकल्पोक्तेन वर्त्मना ।
[1] वामी तु देवतामन्त्रं सीमन्ते सुरुचा लिखेत् ॥२०
न्यासं कुर्यात्तदङ्गेषु सूतिरुग्रोहहारिणम् ।
ततो न गच्छेत्तां भार्यां देवताशापभीतितः ॥२१॥

---

[1] वामं - इति ख.मा. पा. ।

कामेन वाऽथ मोहेन दुःकाले वा विधानतः ।
अन्येन वा कृतः सङ्गः सीमान्तस्तदघावहः १ ॥२२॥

## जातकर्माख्यः संस्कारः-

२ जातकर्माख्यसंस्कारं कुर्यात्स्त्रीशूद्रयोरपि ।
जातकर्माभिधं विप्रः स्वकल्पोक्तेन वर्त्मना ॥२३॥
कन्याजन्मनि विप्राणां शूद्रस्य सुतजन्मनि ।
तूष्णीमेव क्रियां कुर्याद् विष्णुस्मरणपूर्वकम् ॥२४॥
वामाचारी न कुर्वीत मेधाजननसंस्कृतिम् ।
किन्तु स्वर्णस्य लेखन्या विलिखेत् कारणाग्रया ॥२५॥
तालुदेशे मूलवीजं रसनायां तथा मनुम् ।
देवतां तर्पयेत् पश्चादन्यत्कर्म तु दक्षवत् ॥२६॥

## नामप्रदानाख्यः संस्कारः-

अथ पञ्चमसंस्कारः नामकर्माह्वयो ध्रुवम् ।
सर्वेषामयमुद्दिष्टः सूतकान्ते शुभे दिने ॥२७॥
स्वकल्पोक्तविधानेन नामकर्म समारभेत् ।
तन्त्रेषु यानि चोक्तानि मात्राचक्राणि षोडश ॥२८॥
विचार्य तानि कुर्वीत नाम यत् सफलं भवेत् ।
न कृतं चेदत्र नाम तादृशश्चेद् गुरुस्तदा ॥२९॥
पूर्णाभिषेके कुर्वीत तत्सवीजं निरूप्यते ॥
यस्मादृक्षगुणैः सिद्धिर्विप्राणां सम्प्रजायते ॥३०॥

## नक्षत्रचक्रम्-

ताराचक्रं प्रवक्ष्यामि वालानां मन्त्रसिद्धये ।
अ आ हये इ र्यमे च इ उ ऊ वह्निभे मताः ॥३१॥

---

१ तदघावह - इति ख.मा. पा. ।

२ अथ चतुर्थसंस्कारम् - इति ख.मा.ग.मा.पा. ।

ऋ ॠ लृ लॄ च रोहिण्यां ए मृगे शिवभे च ऐ।
ओ औ पुनर्वसौ पुष्ये कश्चापि सर्पभे खगौ ॥३२॥
पितृभे च घङौ भाग्ये अर्यम्णि च छजौ मतौ।
हस्ते झञौ टठौ त्वाष्ट्रे स्वात्यां डो द्वीशभे ढणौ ॥३३॥
तथदा अनुराधायां ज्येष्ठायां धोऽथ मूलभे।
नपफाः पूर्वषाढायां बकारो भस्तु वैश्वभे ॥३४॥
मवर्णोऽथ धनिष्ठायां यरौ लः शततारके
वशौ तु पूर्वभाद्रायां षसहाः स्युरुपान्तिमे ॥३५॥
[1] लं क्षं अं अश्च रेवत्यां गुण्या मन्त्राक्षरर्क्षतः।
साध्यनामादिवर्णर्क्षे त्रिरावृत्त्या फलानि तु ॥३६॥
स्थाननाशः सतां सङ्गो बहुमैत्री मृतेः समम्।
आधिं वा व्याधिमाप्नोति साधकः कार्यसिद्धये ॥३७॥
वहुभिः शत्रुताक्षेपो विपत्तिः [2] सम्पदत्ययः।
एतत्तु ताराचक्रस्य फलं ज्ञात्वा चरेदिदम् ॥३८॥

**गणचक्रम्-**

तारोक्तमातृकाभिर्भे ज्ञात्वा साधकसाध्ययोः।
स्त्रीपुंसां वा व्यस्तयोश्च गणचक्रं विचारयेत् ॥३९॥
स्थिराणि विमघोग्राणि रौद्रं नरगणः स्मृतः
हर्यन्त्यमित्रादितीन्दुवातेह्यकरघोटकाः [3] ॥४०॥
देवाः शेषा राक्षसाः स्युः साध्यसाधकयोः फलम्।
नृदेवयोः फलं शीघ्रं व्यस्तयोः कष्टतः फलम् ॥४१॥
नृदैत्ययोर्मनुग्रहाद्व्यस्तयोर्मरणं भवेत्।
देवदानवयोर्युद्धं व्यस्तयो र्निष्फलंभवेत् ॥४२॥

---

[1] कक्षौ अं अश्च - इति समुचितः पाठः।
[2] सम्पदां क्षय - इति पाठ उचितः।
[3] वाताहिकरघोटका -, इति पाठः साधुः।

## राशिचक्रम्-

ग्रहोपग्रहमन्त्रेषु राशिचक्रं विचारयेत् ।
वेदारामास्त्रयो युग्मं युग्मं षष्ठान्तिमौ शषट् ॥४३॥
षड्वर्गाश्च ततः षट्सु नामवर्णस्थलात्मनोः ।
भवेद्यत्रादिमो वर्णः फलं तत्र भवेदिदम् ॥४४॥
इष्टो दासः पोषकश्च रोगकृत्पुत्रदः शुभः ।
स्त्रीसौख्यकृद्घातकारी भाग्यदः कार्यसिद्धिकृत् ॥४५॥
लाभकृद् व्ययकृच्चेति प्रोक्तेयं राशिमातृका ।
स्त्रीशूद्रप्रतिलोमानां नाममन्त्रैरुपासनाम् [1] ॥४६॥
पूर्वोक्ता राशयो ज्ञेया मीनाद्याश्च द्विजादितः ।
वर्णोत्तमैर्मनुर्ग्राह्यो वैदिकोऽत्र विशेषतः ॥४७॥

## पञ्चभूतचक्रम्-

वक्ष्येऽथ कौलिके मार्गे सिद्धिकृत्यं च भौतिकम् ।
वाय्वग्निभूजलाकाशपञ्चतत्त्वानि विन्यसेत् ॥४८॥
द्वौ द्वौ स्वरौ तले लेख्यौ एकाराद्यास्ततः पुनः ।
कादिकाश्चापि षड्वर्गाः षक्षराः सश्च हस्तथा ॥४९॥
पुनः पुनर्नाम लेख्यं मन्त्राक्षरसमो मनुः ।
तस्मात्पुनर्मनुर्लेख्यो युगपत्स्यात्समापनम् ॥५०॥
यावत्तावल्लिखित्वाथ वर्णतत्त्वं विचारयेत् ।
स्थाप्यं रूपमेकतत्त्वे मित्रतत्त्वे तु तद्बलम् ॥५१॥
उदासीने पादमेकं तद्यागः पङ्क्तिभाजितः ।
इष्टं स्यादथ कष्टं तु शत्रौ रूपं समे बलम् ॥५२॥
पादौ मित्रे तु तद्वच्च तत्कष्टं स्यात्कलात्मकम् ।
इष्टेऽधिकेऽल्पकष्टं तु मन्त्रसाधनमाचरेत् ॥५३॥

---

[1] उपासना - इति ख.मा. पा. ।

कुर्वन्ति भूतबेतालाः पिशाचाश्चान्यथा नरम् ।
महीसलिलयोर्मैत्रमनलानिलयो रपि ॥५४॥
सामान्यमग्निभूम्योस्तु सलिलानिलयोस्तथा ।
शात्रवं वैपरीत्येन चक्रं स्यात्पाञ्चभौतिकम् ॥५५॥

## अकडमचक्रम्-

सिद्धादिचक्रं वक्ष्येऽहं यज्ज्ञात्वा नाम कारयेत् ।
दक्षिणोपासनामार्गे स्वमन्त्रं स्वस्य देवताम् ॥५६॥
द्वादशारे तथा चक्रे [1] कूटषङ्कं विवर्जितम् ।
आदिहान्तान् लिखेद्वर्णान् पूर्वतो यावदीश्वरम् ॥५७॥
स्वनामाक्षरमारभ्यं ज्ञेयो मन्त्राक्षरावधि ।
सिद्धः साध्यः सुसिद्धोऽरिरितिज्ञेयं पुनः पुनः ॥५८॥
सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ।
सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृन्तति ॥५९॥

## सिद्धारिचक्रम्-

अथ वक्ष्ये महाविद्यासाधने सिद्धमातृकाः ।
मूलक्रमेण विज्ञेयास्तत्र कोष्ठानि षोडश ॥६०॥
क्रमादेतेषु कोष्ठेषु मातृकार्णान्सुविन्यसेत् ।
कुत्रीशांकद्यब्धिसूर्यदिक् षडष्टनृपा वृषाः ॥६१॥
पञ्चागतिथिविश्वे च कोष्ठकास्तत्र कीर्तिताः
आदौ ज्ञेयं चतुष्केषु सिद्धाद्यं विदिशासु च ।६२॥
तत्स्थानसमकोष्ठा तु पुनर्गण्यं गुरूक्तितः ।
सिद्धसिद्धो जपात्सिध्येत् सिद्धसाध्यो द्विसंगुणात् ॥६३॥
सिद्धः सुसिद्धः सम्प्राप्तः सिद्धारिर्हन्ति गोत्रजान् ।
साध्यसिद्धोऽतिसंक्लेशात्साध्यसाध्योऽतिदुःखकृत् ॥६४॥

---

[1] कूटपण्डविवर्जितात् - इति पाठ उचितः ।

साध्यसुसिद्धो भजनात्साध्यारिः स्वस्त्रियं हरेत् ।
सुसिद्धसिद्धोऽर्धजपात् बहुजाप्याच्च तत्परः ॥६५॥
अतिद्रुतं द्विःसुसिद्धः सुसिद्धारिः कुलापहः ।
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् ॥६६॥
अरिसुसिद्धः पत्नीघ्नश्चार्य्यरिः साधकापहः ।
अत्र प्रसिद्धं नाम स्यात्प्रसुप्तो येन जागृयात् ॥६७॥

## प्रकारान्तरेण निरूपणम्-

प्रसिद्धं यद् भवेन्नाम किम्वास्य जन्मनाम च ।
यतीनां पुण्यपातेन गुरुणा यत्कृतं भवेत् ॥६८॥
विश्लिष्य तस्य वै वर्णान् स्वरव्यञ्जनभेदतः ।
तथैव मन्त्रवर्णन्तु ततः शोधनमारभेत् ॥६९॥
विन्दुद्विबिन्दुकोपध्मानीयजिह्वाङ्घ्रिसम्भवः ।
संहतोच्चारणप्राप्तमधिकाक्षरमेव च ॥७०॥
[1] अपुत्रं साक्षरं लक्षौ त्यक्त्वा खण्डचतुष्टयम् ।
मन्त्राक्षरैः सहैकैकं नामवर्णान् विशोधयेत् ॥७१॥
व्यञ्जनैर्व्यञ्जनान्येव स्वरैः सार्धं स्वरास्तथा ।
आद्यमाद्येन संशोध्यं द्वितीयेन द्वितीयकम् ॥७२॥
मन्त्रे वाऽप्यथ वा नाम्नि वर्णाः स्युर्विषमा [2] यथा ।
तदा मन्त्रं समारभ्य समं यावत् प्रपूरयेत् ॥७३॥
आद्यन्तयोः सिद्धवर्णा मन्त्रे यस्मिन्वरानने ।
अचिरेणैव कालेन स तावत्सर्वसिद्धिदः ॥७४॥
साध्यान्तादियुतो यस्तु सोऽतिकृच्छ्रेण सिध्यति ।
आदावन्ते सुसिद्धस्तु सर्वकामविभूतिदः ॥७५॥
आदावन्ते रिपुर्यस्य भवेत्त्याज्यः समन्त्रकः ।

---

[1] अप्रभम् - इति ख.मा.पा. ।
[2] यदा - इति पाठः समुचितः ।

आदौ सिद्धोऽन्त्यसाध्यो यो द्विगुणेन स सिद्ध्यति ॥७६॥
आदौ सिद्धः सुसिद्धान्तो यथेक्ताष् सिद्ध्यते जपात् ।
आदौ सिद्धोऽन्तशजुश्च स त्याज्यो मन्त्रिसत्तमै ॥७७॥
साध्यादिश्चैव सिद्धान्तस्त्रिगुणात् सिद्ध्यते जपात् ।
आदौ साध्यः सुसिद्धान्तः प्रोक्तमार्गेण सिध्यति ॥७८॥
[1] सुसिध्यादिस्तु साध्यान्तः चतुर्गुणमपेक्षते ।
सुसिद्धादिश्चान्तशत्रुर्मध्यमः परिकीर्तितः ॥७९॥
आद्यारिश्चान्तसिद्धारिः सोऽपि त्याज्योऽत्रकर्मणि ।
आदौ मध्ये तथा चान्ते सिद्धः शुभफलप्रदः ॥८०॥
सर्वसाध्य उदासीनः प्रोक्तस्तन्त्रे स्वयम्भुवा ।
स्थानत्रितयसुसिद्धः सर्वानर्थांश्च साधयेत् ॥८१॥
स्थानत्रितयगतारिर्मन्त्रो मृत्युर्न संशयः ।
सिद्धादिसाध्ययुग्मान्तो व्यर्थ इत्युच्यते बुधैः ॥८२॥
सिद्धार्दिर्हि सुसिद्धान्तः सर्वकार्यार्थसाधकः ।
सिद्धादिररियुग्मान्तो नाशकः संप्रकीर्तितः ॥८३॥
शत्रुर्भवति यदादौ मध्ये सिद्धस्तदन्तके साध्यः ।
कष्टेन कार्यसिद्धिस्तस्य फलं स्वल्पमेव भवति ॥८४॥
अन्ते यदि भवति रिपुः प्रथमे मध्ये च भवति साध्ययुगम् ।
कार्यं विलम्वितं स्यात् प्रणश्यति क्षिप्रमेवान्ते ॥८५॥
आद्यन्तयोर्यदा साध्यो [2] मध्यसिद्धः प्रजायते ।
आद्यन्तयोर्यदा सिद्धो मध्ये साध्यः प्रजायते ॥८६॥
तावुभौ साध्यसिद्धौ हि जयाधिक्येन सिध्यतः ।
अरिसम्पुटितः सिद्धः सुसिद्धो हि तथा भवेत् ॥८७॥

---

[1] सुसिद्धादिस्तु - इति ख.मा.पा. ।
[2] मध्यं -इति ख.मा.पा. ।

सर्वनाशकरो ज्ञेयः साधकस्य न संशयः ।
सिद्धेनान्तरितः साध्यः सुसिद्धान्तरितोऽथवा ॥८८॥
शीघ्रं सिध्यति मन्त्रोऽयमीशानः स्वयमब्रवीत् ।
सिद्धेनान्तरितः शत्रुः सुसिद्धेनापि चेद् भवेत् ॥८९॥
[1] नासौ रिपुर्मवेन्मन्त्रः किन्तु कष्टेन सिध्यति ।
साध्यान्तरितसिद्धस्तु सुसिद्धोऽपि तथा यदि ॥९०॥
ईदृशं लक्षणं दृष्ट्वा दूरतःपरिवर्जयेत् ।
रिपुणा दूषितो मन्त्रे नैव देयः कदाचन ॥९१॥
एषु दोषेषु सर्वत्र मायां कामथापि वा ।
क्षिप्त्वा चादौ श्रियं दद्याद्दोषाणाञ्च विमुक्तये ॥९२॥

## षड्दले मातृकाचक्रम्-

यस्तु वीजात्मको मन्त्रस्तत्र षड्दलमातृका ।
विज्ञेया तत्र पद्मन्तु रचयेत्षड्दलं शुभम् ॥९३॥
[2] तत्र न्यसेन्मातृकाणां कूटषट्कविवर्जितान् ।
स्वनामाद्यक्षरं [3] यत्र तदारभ्य विचारयेत् ॥९४॥
सम्पद्दारिद्र्यधैर्याणि बन्धुविग्रहसंशयौ ।
सर्वनाशः क्रमादेतन्नामाद्यर्णस्य कोष्ठतः ॥९५॥
कथं मन्त्रस्य सिद्धिः स्यादेतदर्थमहं ब्रुवे ।

## ऋणिधनिचक्रम्-

धनर्णमातृका तत्र षट्त्रिद्वित्र्यगषट्कृताः ॥९६॥
वह्न्यभ्राभ्रभुवो लेख्या अङ्का एकादश स्वराः ।
तत्तले काच्च ठाद्वाच्च लेख्या वर्णा हरोन्मिताः ॥९७॥
तदधो द्विकुसप्ताब्धिखत्रिसप्तेषुसागराः ।

---

[1] ९०, ९१ (क) श्लोकौ ख.मा. न प्राप्यंते ।
[2] तत्र न्यसेन्मातृकाश्च कूटषण्डविवर्जिताः - इति समुचितः पाठः ।
[3] तत्र तदा न्यस्य - इति पाठः उचितः ।

षट् पञ्च साधकस्याङ्का मन्त्राङ्काः पूर्वमीरिताः ॥९८॥
स्वरव्यञ्जनहीनानां मन्त्रार्णानां पृथक् पृथक् ।
अङ्कयोगस्तथा कार्यः साधकस्य तु नामजः ॥९९॥
नागशेषाबुभौ स्थाप्यौ यावान्नामान्तको मनुः ।
अधिकं तत्साधकस्य देयं मन्त्रेण साधितम् ॥१००॥
मन्त्रो यद्यधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके ॥१०१॥
शून्ये मृत्युं विजानीयात्तस्माच्छून्यं परित्यजेत् ।
तावत्संख्यां समादाय न साध्यानपि साधयेत् ॥१०२॥
[1] हीनाश्च ग्रहयोगेन तथा [2] दृक्ष्युपपत्तितः ।
पुरनश्चर्यां पुनः कुर्यान्मन्त्रं संदीपयेत् पुनः ॥१०३॥
ऋणी तु साधको ज्ञेयः साधकाङ्को यदाधिकः ।
यावत्स्यादधिकस्तावत्संख्याकानि यदाचरेत् ॥१०४॥
पुरश्चरणसंज्ञानि तदाऽस्य समता भवेत् ।
पुरश्चर्यां पुनः कृत्वा तदा स्यात्कार्यसाधकः ॥१०५॥
एकस्मिन् साधिते कार्ये पुनर्याति सकुण्ठताम् ।
तावज्जपं पुनः कृत्वा चैककार्यक्षमो भवेत् ॥१०६॥
तत्त्वं मन्त्रप्रकटितं सर्वतन्त्रेषु गोपितम् ।
[3] इति क्रमेण संप्रोक्तं ऋणधनविशोधनम् ॥१०७॥
ऋणं धनं च विज्ञाय नाम दद्यान्महेश्वरि ।
अन्यथा नामदाने च नामानुरूपकं फलम् ॥१०८॥
न भवेत्परमेशानि भ्रष्टो भवति साधकः ।
स्वमूर्खत्वं न जानाति देवदोषपुरः कलौ ॥१०९॥

---

[1] हीनोंश्च - इत्युचितः पाठः ।
[2] दृगुपपत्तितः - इति समुचितः पाठः ।
[3] १०७ (ख), १०८, १०९, ११०, १११, ११२, ११३, ११४ श्लोकाः ख.मा. न प्राप्यन्ते ।

सर्वमेवं तु विज्ञाय नामाज्ञां दापयेद् गुरुः ।
विज्ञायैतद् गुरुमुखान्नामकर्म समाचरेत् ॥११०॥
भावशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिस्त्रैपुरेषु गोपालेऽकडमः स्मृतः ॥१११॥
प्रत्यङ्गिरासिद्धिलक्ष्म्याः कुलाकुलं विचारयेत् ।
कालिकायाश्च तारायास्ताराचक्रं विशिष्यते ॥११२॥
अत्र चेच्छुस्तमन्त्राणां नान्यच्चक्रं विचारयेत् ।
कालिकायां च तारायां कुल्लुकायां त्रिकूटके ॥११३॥
तथैकाक्षरकूटे च शिवपञ्चाक्षरे तथा ।
षडक्षरे तु तस्यैव विष्णोरष्टाक्षरेऽपिच ॥११४॥
[1] नृसिंहार्कवराहाणां प्रसादप्रणवस्य च ।
पिण्डिताक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् ॥११५॥
हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च ।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥११६॥
एकाक्षरे तथा कूटे मालामन्त्रे त्रिवीजके
स्वप्नलब्धे स्त्रियै दत्ते सिद्धादीन्नैव शोधयेत् ॥११७॥
विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्तिताः ।

**अन्नप्राशनसंस्कार :-**

अन्नप्राशनसंस्कारः षष्ठः सार्वजनीनकः ॥११८॥
स्वकल्पोक्तविधानेन शूद्रादीनाममन्त्रकः ।
पितरस्तत्र संपूज्या वाममार्गे तु भैरवाः ॥११९॥
स्वेष्टदेवस्य चक्रस्य पूजान्ते [2] ह्यवशेषितम् ।
सतीर्थं सपलं दद्यान्मूलमन्त्रमुदीरयेत् ॥१२०॥
एवं कृतविधानस्य क्षुद्विपत्तिर्न जायते ।

---

[1] ११५, ११६, ११७, ११८ (क) - इति श्लोकाः ख.मा.न प्राप्यन्तं ।
[2] ह्यंकशेषितः - इति ख.मा.पा ।

**चौलाख्यसंस्कारः -**

अथ सप्तमसंस्कारं चौलाख्यं शृणु पार्वति ॥१२१॥
सर्वेषामेतदुद्दिष्टं [1] बाह्यपातकनाशनम् ।
बौद्धानां यवनानाञ्च शिखाऽत्र स्थाप्यते न च ॥१२२॥
स्त्रीणामपि च कर्तव्यं सौभाग्यारोग्यवृद्धये ।
वामे चूडास्तु धर्तव्या मन्त्रबीजसमाः कचाः ॥१२३॥
तीर्थे क्षिप्त्वा खनेद् भूमौ विशेषो वामिनामिति ।

**मौञ्जीबन्धाख्यः संस्कारः -**

अथाष्टमन्त्रसंस्कारं मौञ्जीबन्धमहं ब्रुवे ॥१२४॥
गुरोः समीपे नयनं तच्चोपनयनं स्मृतम् ।
स्वकल्पोक्तविधानेन तत्कुर्याद् ब्रह्मवर्चसे ॥१२५॥
वामाचारैर्द्विजैः पूर्वं कर्तव्यं कुलदीक्षणम् ।
पश्चाद्दीक्षा तु सावित्र्या व्यत्यासात्पतितो भवेत् ॥१२६॥
दीक्षा तु लघुदैवत्या प्राक् पश्चान्महतस्तथा ।
बृहद्दैवतमन्त्रे तु सिद्धे क्षुद्राः स्वयं वशाः ॥१२७॥
तेषां ग्राह्या यत्र दीक्षा पुरश्चर्यां समाचरेत् ।
प्रयोगाँश्चापि कुर्वीत न स्वेष्टस्य कदाचन ॥१२८॥
सच्छिष्यं वा सुपुत्रं वा विनेष्टं दापयेन्न च ।
लोभाद् भयाद् वा कामाद्वा यो दद्यात् सिद्धिमन्त्रकम् ॥१२९॥
शिष्यस्य जायते सिद्धिर्गुरोः शापः प्रजायते ।
यस्या यस्या देवतायाः प्रसक्तिर्यत्र यत्र च ॥१३०॥
तन्तन्मार्गे प्रशस्ता सा स्वराज्ये राजवद् भवेत् ।
तन्त्राण्यष्टोत्तरशतं मया प्रोक्तानि पार्वति ॥१३१॥

---

[1] बाल्यपातकनाशनम् - इति ग.मा.पा. ।

येन येन तु यत्पृष्टं तस्याधिक्यन्तु वर्णितम् ।
निःपक्षपातं वक्ष्यामि मेरुतन्त्रे यथार्थतः ॥१३२॥
सर्वेभ्यो वैदिकं श्रेष्ठं न्यूनं स्मार्तं ततः स्मृतम् ।
ततस्तान्त्रं तु तत्रापि संहिता अर्णवास्ततः ॥१३३॥
यामलाः संगमा [1] स्तन्त्रमुड्डीशानि च ताण्डवम् ।
इन्द्रजालं [2] कक्षपुटा बौद्धं जैनञ्च शावरम् ॥१३४॥
क्रमादपचितं ज्ञेयं यथायोग्यं [3] समुच्यते ।
नीचे उच्चस्य पातः स्यान्नीच उच्चात् पतेद् ध्रुवम् ॥१३५॥
[4] ज्ञातिदैर्घ्याय सर्वेऽपि स्वाचारात् कर्म कुर्वते ।
इदं पशुमतं प्रोक्तं वक्ष्येऽन्यत् कौलवाममोः ॥१३६॥
सर्वेभ्यो वैदिकः श्रेष्ठो वैदिकाद् वैष्णवः परः ।
वैष्णवाद् गाणपः श्रेष्ठो गाणपात्सौर उत्तमः ॥१३७॥
सौराच्छैवः श्रेष्ठतरः शैवाच्छाक्तः परो मतः ।
शाक्तेभ्यो दक्षिणः श्रेष्ठो दक्षिणाद् वाम एव तु ॥१३८॥
वामाद् वीरः श्रेष्ठतरो वीरात्कौलावधूतकः ।
कौलावधूततः कौलः कौलात्परतरं न हि ॥१३९॥

**प्राजापत्यव्रताख्यः संस्कारः –**

संस्कारं नवमं विद्यात्प्राजापत्यव्रताभिधम् ।
स्वकल्पोक्तेन मार्गेण वैदिकस्तान्त्रिकः पुनः ॥१४०॥
एतद्व्रतस्य संस्कारे गाणपत्यो मनुः स्मृतः ।
वक्रतुण्डादिका दक्षे उच्छिष्टाद्यास्तु वामके ॥१४१॥

---

[1] तन्त्राण्युड्डीशानि - इति पाठः समुचितः ।
[2] कक्षपुटम् - इति पाठ उचित ।
[3] समुच्यताम् - इति ख.मा.पा. ।
[4] ज्ञातिदार्घ्याय - इति ख मा पा. ।

**सौम्यव्रताख्यसंस्कारः -**

संस्कारं दशमं सौम्यव्रतं वैदिकमाचरेत् ।
स्वकल्पोक्तविधानेन तत्स्थाने तान्त्रिकं पुनः ॥१४२॥
गृह्णीयाद् भैरवं मन्त्रं बटुकाख्यस्य वामके ।
कालभैरवभेदस्य यस्य कस्यापि दक्षिणे ॥१४३॥
पुरश्चर्योपासकानां नाशको भैरवो यतः ।
दरिद्रैः साधकैर्ग्राह्यः स्वर्णाकर्षणभैरवः ॥१४४॥

**आग्नेयाख्यसंस्कारः -**

एकादशं तु संस्कारमाग्नेयाख्यमतन्द्रितः ।
कुर्याद् गृह्योक्तमार्गेण तस्मिन् स्थाने तु तान्त्रिकम् ॥१४५॥
गृह्णीयादङ्गदेवानां मन्त्रानादौ गुरोर्मुखात् ।
पूजादिमन्त्रान् तद्दीक्षां तद्द्रव्यनियमाँस्तथा ॥१४६॥

**वैश्वदेवाख्यसंस्कारः -**

द्वादशं चापि संस्कारं वैश्वदेवव्रताभिधम् ।
तस्मिन् स्थाने भवेद्दीक्षा स्वेष्टमन्त्रस्य तान्त्रिकी ॥१४७॥

**गोदानख्यसंस्कारः -**

त्रयोदशस्तु संस्कारो गोदानाख्यः प्रकीर्तितः ।
तत्स्थाने तान्त्रिकं कुर्यात् सर्वपापविमोक्षणम् ॥१४८॥
[1] तत्स्थले तु समासीन आदर्शं वा घटोदकम् ।
स्थाप्याग्रे सत्यया वाचा ततः संप्रार्थयेदिति ॥१४९॥
पुरश्चरणकामोऽहं पापं क्षयितुमुद्यतः ।
अपराह्णे जपं कुर्वे देवताः सन्तु साक्षिणः ॥१५०॥
पृथिव्यप्तेज-आकाशवायुसूर्येन्द्रभानि च ।
यावच्छरीरे पापानि तिष्ठन्ति मम देवताः ॥१५१॥

---

[1] सत्स्थले - इति ग.मा. पा. ।

तावच्च प्रतिबिम्बा मे मलिना भान्तु पातके ।
शान्ते पारदमध्ये च यथा संदृश्यतां तथा ॥१५२॥
शुद्धः सच्चिन्मयो भूत्वा चिन्तयेत्पापपूरुषम् ।
दक्षकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम् ॥१५३॥
विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम् ॥
मदिरापानहृदयं गुरुतल्पकटीयुतम् ॥१५४॥
पापसंयोगपदद्वन्द्वमुपपातकरोमकम् ।
खड्गचर्मधरं दुष्टमधोवक्त्रं सुदुःसहम् ॥१५५॥
एवं संचिन्तयित्वाऽथ जपं कुर्वन्विचिन्तयेत् ।
क्षीयमानं पापनरं जपान्ते प्रेक्षयेत्पुनः ॥१५६॥
आदर्शादिर्यदा स्वच्छः सर्वच्छाया प्रदृश्यते ।
तदा तु निर्गतं पापं पुरश्चरणयोग्यता ॥१५७॥

**समावर्तनाख्यः संस्कारः -**

चतुर्दशस्तु संस्कारः समावर्तनमुच्यते ।
तस्य स्थाने पुरश्चर्या कर्तव्या तान्त्रिकैर्जनैः ॥१५८॥
आदौ संक्षेपपूजा तु दिने कृत्वा तु कौलिकः ।
१ आसायान्तं जपं कुर्याच्चक्रपूजां तथा निशि ॥१५९॥
शक्तिभिः सहितः पञ्चमकारादिसमन्वितः ।
एवं सिद्धिमवाप्नोति नान्यथा जपकोटिभिः ॥१६०॥

**विवाहाख्यसंस्कारः -**

विवाहः पञ्चदशमः सर्वेषां सुविधीयते ।
विधवाया विवाहस्तु पिच्छलेनैव जायते ॥१६१॥
सर्वपापविनिर्मुक्ता सा तु विष्णुपदं व्रजेत् ॥
अब्राह्मणी द्विधा कुर्यादन्यमेकं तथा पतिम् ॥१६२॥

---

१ आसायन्तु - इति ख.मा. पा. ।

**पितृमेधाख्यसंस्कारः -**

षोडशः पितृमेधाख्यः स्वगृह्योक्तेन वर्त्मना ।
वैदिकस्तान्त्रिकस्तत्र देवस्थाने स्वदेवताम् ॥१६३॥
स्थापयित्वा चरेच्छ्राद्धं ब्राह्मणा मृतपान्थिनः ।
अथवा यजमानस्य मार्गस्थस्तदभावतः ॥१६४॥
आमश्राध्दं प्रकुर्वीत वामी तु पलपैतृकम् ।
शक्तियुक्ता द्विजाः कौले भोज्याश्च क्रार्चने तथा ॥१६५॥
वर्जयेत् तुलसीं तत्र भृङ्गराजैर्न पूजयेत् ।
पाकः कौलिकवस्तूनां पिण्डाश्च रुधिरोक्षिताः ॥१६६॥
एतैः षोडशसंस्कारैः संस्कृतः साधकोत्तमः ।
जीवन्मुक्तस्तदा ज्ञेयः सामर्थ्यं देवतार्चने ॥१६७॥

**इति श्रीतन्त्रचिन्तामणौ**
**साधकानां गर्भाधानादिषोडशसंस्कारनिर्णयो नाम**
**चतुर्थः प्रकाशः ।**
**(मूलमातृकापत्राणि ६ । श्लोकसंख्या १६७ ।)**

*****

# अथ पञ्चमः प्रकाशः

**मन्त्रगतषोडशसंस्कारः -**

अथ षोडश वक्ष्येऽहं संस्कारान् मन्त्रसंस्थितान् ।
शापैर्मन्त्रा विमुच्यन्ते यान् कृत्वा दैवनिर्मितैः ॥१॥
अथादौ सर्वमन्त्राणां [१] जागृतिः प्रोच्यते मया ।
गुरुणा सा प्रकर्तव्या शिष्यस्य सिद्धिहेतवे ॥२॥
तारात्याग्निवियत्फट्द्वे यस्मिन्नाग्नेयकः स तु ।
अन्यः सौम्यः स्वापकाल इडायामग्निरूपिणः ॥३॥
सौम्यस्य पिङ्गलायां स्यात्तयोरन्यत्र जागृतिः ।
प्रवोधकाले संजप्तो जाग्रतो जायते मनुः ॥४॥
अथवा संपुटीकृत्य लान्तानाद्यान् सबिन्दुकान् ।
पुनश्च सविसर्गास्ताँन् क्षकारं केवलं पठेत् ॥५॥
एवं जप्तोपदिष्टश्चेत् प्रबुद्धः शीघ्रसिद्धिदः ।
अथ शावरमन्त्राणां [२] जागृतिं शृणु पार्वति ॥६॥
काँस्यभाजनमानीय शुद्धं भस्मादिभिः कृतम् ।
प्रजपेद्रविरात्रौ तु यामे यामे शताष्टकम् ॥७॥
खादिर्या ताडयेद्यष्ट्या कांस्यपात्रं वदेदिति ॥
जाग्रतो भव मन्त्र त्वं भाषयाऽथ तुरीयके ॥८॥
यामे दद्याद्बलिं काल्या अण्डजं भैरवस्य तु ।
कुक्कुटं चान्यदेवेषु स्फोटयेन्नारिकेलकम् ॥९॥

**मन्त्रशापहेतुनिर्देशः -**

सुरया सुधया पूर्वं देवा देवा विमोहिताः ।

---

[१] जागर्तिरिति - इति पा. उचितः ।
[२] जागर्तिर्मिति - इति पा. उचितः ।

यदा यदा तु भगवान् प्रोवाच मधुसूदनः ॥१०॥
कः पूज्यो भवतां मध्ये कः श्रेष्ठस्तं [1] निगद्यताम् ।
उन्मत्तास्तु तदा देवाः श्रेष्ठोऽहमिति चाब्रुवन् ॥११॥
किं विष्णुस्तान् स भगवान् मोहयन्नात्ममायया ।
इत्यवोचद्यस्य वाक्यं शापे योऽनुग्रहे क्षमः ॥१२॥
स एव देवः श्रेष्ठोऽग्र्यः पूर्वो वाऽप्यपरोऽपि वा ।
इति श्रुत्वा वचो विष्णोः शशाप च परस्परम् ॥१३॥
[2] मन्त्ररूपाण्यतो देवि संस्कारैः शापमोक्षणम् ।
विना तु शापमोक्षेण कः सिद्धिं प्राप्नुयाज्जनः ॥१४॥

**देव्युवाच -**

शापः केन कथं दत्तः शप्ते जप्ते च किं फलम् ।
निःशापत्वं कथं तेषां सिद्धिः स्यादिति मे वद ॥१५॥

**शिव उवाच -**

आदिमध्यावसानेषु वायुर्यस्य व्यवस्थितः ।
चतुराद्यो वैकबीजो नैकधा यत्र संगमः ॥१६॥
केनाऽपि च समाक्रान्तः स मन्त्रश्छेदितोऽसिना ।
कार्तिकेयेन तज्जापाच्छिद्यतेऽस्य मनोरथाः ॥१७॥
आदौ मध्येऽवसाने वा भूबीजयुगलं भवेत् ।
आदौ यद्वा द्विधा वज्रत्रिधा मध्यं ततो द्विधा ॥१८॥
रुद्धौ शक्रस्य शापेन भुक्तिमुक्तिविवर्जितौ ।
जातौ मन्त्रौ वामदक्षमार्गयोरपि सेवितौ ॥१९॥
[3] ह्रीं मौं क्रौं श्रींष्वेकतमं यत्र बीजं न दृश्यते ।
हूँकारो वा स मन्त्रस्तु शक्तिहीनः कृतः सुरैः ॥२०॥

---

[1] स - इति पाठ उचितः ।

[2] मन्त्ररूपा ह्यतो देवाः - इति पा. समुचितः ।

[3] ह्री मौं - इति पाठ उचितः ।

एतादृशश्चेत् संजातः सामर्थ्यं हन्ति मन्त्रिणः ।
शक्तिहीनस्य वामस्य मरणं नात्र संशयः ॥२१॥
आदौ ह्रीं न च मध्ये क्लीं क्रोंऽन्ते वा नैव दृश्यते ।
असौ पराङ्मुखो मन्त्रो जातः सूर्यस्य शापतः ॥२२॥
पराङ्मुखं जपन् मन्त्रं देवता स्यात्पराङ्मुखी ।
दैवात्कार्येऽपि संसिद्धे लोकः स्याच्च पराङ्मुखः ॥२३॥
आदावन्ते यथा मध्ये हं वा सं वा न दृश्यते ।
बधिरास्ते कृता मन्त्रा देवाचार्येण शापिताः ॥२४॥
जप्ते तु बधिरे मन्त्रे विस्मृतिस्तस्य जायते ।
जायते बधिरो नूनं महाकालेन भाषितम् ॥२५॥
सूर्यबीजं हकारः स्याच्चन्द्रबीजं तु सः स्मृतः ।
रेफोऽग्निवीजमुद्दिष्टमेतन्नेत्रत्रयं मम ॥२६॥
पञ्चाक्षरे यत्र मन्त्रे यत्रैकमपि नास्ति चेत् ।
मम शापान्नेत्रहीनो दुःखशोकभयप्रदः ॥२७॥
नादौ मध्ये न चान्ते वा हसौं चाहं स वा थहौं ।
ऐं वा फ्रैं वाऽथवा हूँ वा नमो वा ह्रीं मनुः स तु ।
शापेन कीलितो मन्त्रो राजदेवेन पार्वति ॥२८॥
जप्तस्तु कीलितो मन्त्रो न सिद्धिमधिगच्छति ।
मध्ये एको लकारो वा फड् वाऽन्ते लद्वयं यदि ॥२९॥
फड्द्वयं वा त्रयं वाऽन्ते न चेत् स स्तम्भितो मनुः ।
शापेन भैरवेणास्मात्सिद्धं भवति शोभनम् ॥३०॥
कदाऽपि नैव दुःखं च प्रायशो वहुलं भवेत् ।
आदौ तु यस्य मन्त्रस्य क्रमात्सप्ताक्षराणि चेत् ॥३१॥
रेफेण वा यकारेण संयुक्तो हि मनुः स तु ।
वाय्वग्निकायसंदग्धः साधकं परितापयेत् ॥३२॥
तस्मात्संस्कारयेद् देवि सिद्धये साधकोत्तमः ।
द्वाभ्यां त्रिभिरथो षड्भिरष्टभिर्वा प्रदृश्यते ॥३३॥

यदाक्षैरन्तरित: फट्कार: स निगद्यते ।
नारसिंहस्य शापेन त्रस्त: संत्रासयेत्सदा ॥३४॥
स्वप्नादौ साधकं नैव सिद्धि: संदृश्यते क्वचित् ।
आँ वा हं वा सकारो वा नादौ भीतो मनु: स तु ॥३५॥
ब्रह्मशापाद्धीनसिद्धिर्भवेदत्यन्तकष्टद: ।
आदिमध्यावसानेषु मिलित्वा मचतुष्टयम् ॥३६॥
स मन्त्रो मलिनो मायाशापान्मालिन्यकारक: ।
हुँ चादौ वा मन्त्रमध्ये चान्ते फड्युगलं भवेत् ॥३७॥
तिरस्कृतो रुद्रशापात्साध्यं कुर्यात् तिरस्कृतम् ।
आदौ तारद्वयं चान्ते वषड्वा ह्यत्र मादले ॥३८॥
कुटुम्बकलहं कुर्याद् बालाशापेन भेदित: ।
हकारेण सकारेण रहितस्त्र्यक्षरस्तु य: ॥३९॥
सुषुप्त: सिंहशापेन प्रोक्तोऽभीष्टफलापह: ।
अष्टादशाक्षरादिर्य: पञ्चफट्कारपूर्वक: ॥४०॥
चामुण्डाशापतो जातो मदोन्मत्तो न शोभन: ।
मध्ये चेत्पञ्च फट्कारा: कालिकाशापत: स तु ॥४१॥
मूर्छितो मूर्छितं कुर्याद् वामिनं तु विशेषत: ।
एवमन्ते च फट्कारपञ्चकं स तु रम्भया ॥४२॥
हतवीर्यस्तु शापेन कृत: [1] क्षीणत्वकारक: ।
चत्वारो यत्र फट्कारा आदिमध्यावसानका: ॥४३॥
अष्टादशाक्षरो [2] हिनो हानिर्भैरवशापत: ।
एकोनविंशत्यर्णश्चह्रीँक्रौँमाँकारसंयुत: ॥४४॥

[1] क्षीणस्तु कारक - इति ख.मा.पा. ।
[2] हीनो हानिम् - इति ख.ग.मा.पा.।
अष्टादशाक्षरां हि नो हानिर्भैरवशापत: ।
- इति उचित: पाठ: ।

प्रध्वस्तः कामशापेन ध्वंसयेत् कामकारणात् ।
सप्तवर्णो मनुर्बालः कुमारोऽष्टाक्षरः स्मृतः ॥४५॥
षोडाशार्णस्तु तरुणः प्रौढो व्योमाब्धिवर्णकः ।
त्रिंशत्कलाः शतं वेदः काष्ठावर्णास्तु यत्र तु ॥४६॥
सकृद्धि एते कालेन सदा दुःखानि कुर्वते ।
नवार्ण ॐकारयुतश्चामुण्डाशापतो मनुः ॥४७॥
निस्त्रिंशः साधकं छिन्द्यान्निस्त्रिंशेन न संशयः ।
अन्ते नमो वा स्वाहा वा नास्ति वा यस्य मध्यतः ॥४८॥
वषट् वौषट् स हूँ फट् च एतद्वा नास्त्यसौ मनुः।
निर्बीज इति संशप्तो भुवनस्यास्य साधकः ॥४९॥
सेवां कुर्वंल्लभेद् वंशनाशो वर्षत्रयादितः ।
आदिमध्यावसानेषु षट् फटकारास्तु यस्य तु ॥५०॥
कौमार्यास्तु स शापेन सिद्धिहीनो न सिद्धिकृत् ।
दशाक्षरो यस्तु मन्त्रः स गणेशस्य शापतः ॥५१॥
मन्दो जप्तस्तु मूर्खत्वं कुर्याज्जन्मनि जन्मनि ।
आदिव्यञ्जनसंयोग एक एव स्वरो भवेत् ॥५२॥
तत्कूटं कूटतो हानिर्मातङ्ग्याः शापतः स्मृता ।
द्विवर्णः सत्त्वहीनः स्यादाश्विनेयस्य शापतः ॥५३॥
नाशयेत्साधकवलं राज्ञः सैन्यं विनाशयेत् ।
चतुर्वर्णः[1] केवलस्तु जातः शर्वाणीशापतः ॥५४॥
जपित्वा केकरं मन्त्रं चक्षुषा नैव पश्यति ।
षडक्षरा बीजहीना जाता रावणशापतः ॥५५॥
वंशवृद्धिर्न तज्जापादन्यथा स्त्रीसुखं न हि ।
सार्धत्रिशप्तसूर्याणां धूमावत्याश्च शापतः ॥५६॥

---

[1] केंकरस्तु - इति ख.मा. ग.मा.पा. ।

धूमितो व्याकुलं चित्तं जायते साधकस्य तु ।
विंशस्तथैकविंशश्च त्रिंशद्वर्णस्तु तारया ॥५७॥
शप्त आलिङ्गितश्चायं जपात्स्वप्नान्तरे मृतिः ।
द्वाविंशत्यक्षरो मन्त्रः सरस्वत्यास्तु शापतः ॥५८॥
मोहितं साधकं कुर्यात्पानादिव्यसनाकुलम् ।
चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ॥५९॥
क्षुधार्तो राजमातङ्ग्याः शापाद्दारिद्र्यकारकः ।
त्रयोविंशत्रयं रुद्रा वर्णाः कौलिकशापतः ॥६०॥
मन्त्रा दृप्तास्तज्जपेन [1] छान्दसो जायते जनः ॥
[2] षड्विंशदेकोनत्रिंशत्षड्विंशदक्षरः ॥६१॥
पूष्णः शापादङ्गहीनः कामनारूपको न हि ।
अष्टाविंशदेकत्रिंशद्वर्णो नन्दीशशापतः ॥६२॥
अतिक्रूरः साध्यनाशं कृत्वा नश्येच्च साधकः ।
अष्टत्रिंशाक्षरो मन्त्रो मातृकाणां तु शापतः ॥६३॥
अतिक्रुद्धस्तज्जपेन स्वकृते स्वस्य संक्षयः ।
चत्वारिंशत्समारभ्य त्रिषष्टियावदक्षरम् ॥६४॥
सव्रीडामातृकाशापात्सव्रीडा तस्य साधकाः ।
पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः ॥६५॥

---

[1] छागांशो - इति ख.मा.पा. ।

[2] षट्त्रिंशदक्षर - इति ख.मा.पा. ।

कामशापेन तज्जापादुद्योगस्य फलं न हि ।
षट्षष्टितो [1] नवनवतिपर्यन्तानि कुजस्य तु ॥६६॥
[2] स्थानभ्रष्टास्तु शापेन जातास्तादृक् च साधकः ।
धातिधृतिः ध्यातिधृतिः [3] कङ्कयुग्मं द्विगोकराः ॥६७॥
शतजयं यत्र वर्णाः शापितास्छिन्नमस्तया ।
यूयं भवन्तु निःस्नेहाः साधकानां भयापहाः ॥६८॥
निष्कामैर्मतिभिर्जप्ताः संसारस्नेहनाशनाः ।
चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम् ॥६९॥
अतिवृद्धा यज्ञशापात्पौष्टिकादिषु वर्जिताः ।
सहस्रार्णाधिका मन्त्रा दण्डपाणेस्तु शापतः ॥७०॥
दण्डकाख्याः पीडिताश्च तज्जपात्कष्टमाप्नुयात् ।
द्विसहस्राधिका मन्त्रा भार्गवस्य तु शापतः ॥७१॥
खण्डीकृताः सप्तधा ते सिद्धिखण्डकराः स्मृताः ।
अन्यच्छृण्वन्तु भो देवा मुनीनां जपतां सदा ॥७२॥
सिद्धिर्न जाता तु तदा दत्तः शापः सुदारुणः ।
आश्वासनं देवतानां जातं सिद्धेरकारणात् ॥७३॥
उपदेशं गुरुः कुर्यात्तस्मात्तन्मन्त्रशोधनम् ।
तत्प्रकारं प्रवक्ष्यामि शृण्वन्तु सकलाः सुराः ॥७४॥
गुरुः सिद्धासने संस्थो गुदमेढ्रान्तरं दृढम् ।
वामेन पार्ष्णिनापीड्य तस्योपरि तु विन्यसेत् ॥७५॥
पादं तु दक्षिणं गुल्फं [4] ग्रन्थ्योरन्योन्यमर्दनम् ।
यथा स्यात्तत्प्रकर्तव्यं ततो दक्षिणपार्ष्णिना ॥७६॥

---

१. नव नवत्रिपर्यन्तं - इति ख.मा.पा. ।
२. स्थानभ्रष्टा - इति क.मा.ख.मा.पा. ।
३. क्लंक - इति ग.मा.पा. ।
४ निर्ग्रन्थ्याऽन्योन्यमर्दनम् - इति पाठ उचितः ।

लिङ्गमूलं विनिष्पीड्य स्थिरकाय उपाविशेत्।
गुदमाकुञ्च्य पवनमपानाख्यं तदा गुरुः ॥७७॥
उत्थापयेत्ततः प्राणान् वायुं सम्यग् निरोधयेत्।
अपानप्राणयोः कुर्यात्संघट्टं[1] चैकदृङ्मनाः ॥७८॥

मूलाधारे चित्स्वरूपकुण्डलिन्यां परात्मनि।
जातदोषं स्वस्य मन्त्रं चिन्तयेत्तत्र सद्गुरुः ॥७९॥
तस्य मन्त्रस्याक्षराणि क्रमादेकैकशस्ततः।
सुषुम्णायास्तु मार्गेण मूलाधारे प्रवेशयेत् ॥८०॥
स्वाधिष्ठाने ततश्चक्रे मणिपूरे ह्यनाहते।
विशुद्ध आज्ञाचक्रे च भित्त्वा भित्त्वा प्रवेशयेत् ॥८१॥
एवं नीत्वा ब्रह्मरन्ध्रं तत्रत्यात्सोममण्डलात्।
निर्गतामृतसंसिक्तमन्त्रार्णान् सुविभावयेत् ॥८२॥
पुनः सुषुम्णामार्गेण ह्याज्ञाचक्रेऽवतारयेत्।
विशुद्धेऽनाहते चापि मणिपूरे च चक्रके ॥८३॥
स्वाधिष्ठाने ततो भेदान् मूलाधारे प्रवेशयेत्।
ततस्तन्मन्त्रमृष्यादिन्यासपूर्वं जपेत्पुनः ॥८४॥
अष्टोत्तरसहस्रन्तु तेन शुद्धो भवेन्मनुः।
[2] उक्तशापाद्विनिर्मुक्तं पश्चादुपदिशेच्च तम् ॥८५॥

अल्पपुण्यतया पापाधिक्यात्पापः कलौ युगे।
आर्शीर्वादफलं स्तोकं पूर्णपापादिजं फलम् ॥८६॥
वाचिकानां तु शापानां नाशाद्यर्थमथोच्यते।

**मन्त्राणां जननादिदशसंस्काराः –**

श्रीपर्ण्यां वा चन्दनस्य पीठे चूतादिकस्य वा ॥८७॥

---

[1] चैव - इति ख.मा.पा.।

[2] अनुक्तशापन्निर्मुक्त - इति ख.मा. पा.।

कस्तुरीकुङ्कुमाब्जैश्च विलिखेत्पाञ्चभौतिकम् ।
चक्रमावाहयेत्तत्र मातृकाख्यां सरस्वतीम् ॥८८॥
यथोक्तविधिना पूजां कृत्वा चाष्टोत्तरं शतम् ।
जपित्वा मातृकां तस्या मध्यात् स्वाभीष्टमन्त्रकम् ॥८९॥
स्वरव्यञ्जनबिन्दूँश्च सर्गयोगाक्षराणि च ।
पृथक् पृथगथोद्धृत्य चैकीकृत्य गुरूक्तितः ॥९०॥
गृहीतं जनयेन्मन्त्रं प्रोक्तं सञ्जननं त्विदम् ।
आद्यन्तं प्रणवं कृत्वा प्रणवान्तरितं जपेत् ॥९१॥
अष्टोत्तरशतं मन्त्रा वर्णानामिह जीवनम् ।
रोचनाकुङ्कुमाभ्यां च भूर्जपत्रे लिखेन्मनुम् ॥९२॥
प्रत्यक्षरं शतवारं ताडयेच्चन्दनाम्भसा ।
समुच्चरन् वायुबीजमेतत्ताडनमुच्यते ॥९३॥
कुण्ठिताः शावरा मन्त्रास्ताडिताः सिद्धिकारकाः ।
पूर्वोक्तपीठे संल्लिख्य तन्मन्त्राक्षरसंख्यया ॥९४॥
आदाय करवीरस्य पुष्पाण्यथ समुच्चरेत् ।
प्रत्यक्षरं च तैः पुष्पैः शतवारं हुनेदिति ॥९५॥
उच्चरन् वह्निबीजं च बोधनं त्विदमुच्यते ।
प्रागवत्पीठे च [1] तैर्द्रव्यैः पद्ममष्टदलं लिखेत् ॥९६॥
तत्कर्णिकायां मालत्याऽऽलिखेत्कलिकयैकया ।
एकैकार्णं तु मन्त्रस्य तन्मन्त्राक्षरसङ्ख्यया ॥९७॥
अश्वत्थपल्लवं गृह्य तमेवं मन्त्रमुच्चरन् ।
अभिषिञ्चाम्यमुं मन्त्रं नम इत्यभिषिञ्चयेत् ॥९८॥
नानासुगन्धितोयेन पल्लवैकेन चाक्षरम् ।
एकमष्टोत्तरशतमभिषेकस्त्वयं स्मृतः ॥९९॥

---

१. पुष्पैः - इति पाठ उचितः ।

अभिषेको मन्त्रशुद्धिं कुर्यान्नृणां यथाजलम् ।
ज्योतिर्मन्त्रश्चिन्तनीयो मूलाधारेऽग्निमण्डले ॥१००॥
संस्कर्तव्यं मनुं [1] तस्य दुर्धमेवं विभावयेत् ।
आणवाख्यः साहजिक आगन्तुः कार्मणः स्मृतः ॥१०१॥
योगाख्यो मायिकः प्रोक्तः स्वमन्त्रे तु मलत्रयम् ।
ज्योतिर्मन्त्रेण निर्दग्धमेकमेकं विचिन्तयेत् ॥१०२॥
एवं तु विमलो जातः स्वमन्त्र इति चिन्तयेत् ।
ज्योतिर्मन्त्रस्तु वेदादिर्ह्रौंमिति द्व्यक्षरो मतः ॥१०३॥
विमलीकरणं त्वेतत्प्रयोगान्तेऽपि कारयेत् ।
प्राग्वत्पीठे कुङ्कुमादि द्रव्यैर्मन्त्रं विलेखयेत् ॥१०४॥
ताम्रादिपात्रं कर्पूरवासितेन जलेन च ।
शुद्धेनाऽऽपूर्य लिखितमन्त्रेणाष्टोत्तरं शतम् ॥१०५॥
अभिमन्त्र्य जलं तेन मन्त्रेण कुशबिन्दुभिः ।
प्रत्यक्षरं प्रोक्षयेत्तदेतदाप्यायनं मतम् ॥१०६॥
पुरश्चर्याक्लेशितानां समावर्तनकं त्विदम् ।
कस्तूर्याद्यैस्ताम्रपात्रमध्ये मन्त्रं विलेखयेत् ॥१०७॥
पात्रान्तरे च कर्पूरादिकवासितसज्जलम् ।
गृहीत्वा चार्घ्यपात्रेण पठन्मन्त्रमिमं मनुम् ॥१०८॥
तर्पयामि नमोऽन्तेन तर्पयेदिति तर्पणम् ।
ॐ ह्रींश्रींपूर्वकं मन्त्रं जपेदष्टोत्तरं शतम् ॥१०९॥

---

[1] तस्मादूर्ध्वमेवम् - इति पाठः समुचितः ।

जपेदेतद्दीपनं स्यात्सर्वमन्त्रेष्वपीष्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥११०॥
संस्कारा दश संप्रोक्ता: सर्वतन्त्रेषु गोपिता: ।
एवमेकादश प्रोक्ता: संस्कारा अथ पञ्च च ॥१११॥
प्रतिमन्त्रं वक्ष्यमाणो जपो होमश्च तर्पणम् ।
मार्जनं भोजनं चापि द्विजानामिति षोडश ॥११२॥
प्रोक्ता मन्त्रस्य संस्कारा देवशापादिमोचका: ।
दीक्षाकालं प्रवक्ष्यामि तच्छृणुस्व वरानने ॥११३॥

इति श्रीतन्त्रचिन्तामणौ
मन्त्राणां जागरणादिषोडशसंस्कारनिर्णयो नाम
पञ्चम: प्रकाश: ।
(मूलमातृकाया: ४ पत्राणि, श्लोकसंख्या ११३)

*****

# षष्ठः प्रकाशः

**मासफलम्**

**ईश्वर उवाच**

चैत्रे दु:खाय दीक्षा स्याद्वैशाखे रत्नसञ्चयः ।
मरणं भवति ज्येष्ठे चाषाढे बन्धुनाशनम् ॥१॥
समृद्धिः श्रावणे नूनं भवेद् भाद्रपदे क्षयः ।
प्रजानाशोऽथाश्विने तु भवेच्चाशुभमेव च ॥२॥
ज्ञानं स्यात्कार्तिके सौख्यं मार्गशीर्षे भवेत्किल ।
पौषे ज्ञानक्षयो माघे भवेन्मेधाविवधर्नम् ॥३॥
फाल्गुने सर्वसिद्धिः स्यान्मलमासं विवर्जयेत् ।
निषिद्धमासे तु तत् तद् विशेषं शृणु भेदतः ॥४॥
षष्ठी भाद्रपदे मासे तथाश्विनचतुर्दशी ।
कार्तिकी नवमी शुक्ला मार्गशुक्ला तृतीयका ॥५॥
पौषे च नवमी शुक्ला माघशुक्ला चतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्दशी ॥६॥
वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तिथिः ।
आषाढे पञ्चमी शुक्ला श्रावणे शुक्लपञ्चमी ॥७॥
एतानि देवपर्वाणि तीर्थकोटिफलं लभेत् ।
निन्दितेष्वपि कालेषु दीक्षोक्ता पर्वणि शुभा ॥८॥

**पक्षफलम् –**

भुक्तिमुक्तिप्रदः शुक्लः कृष्णो मोक्षप्रदः स्मृतः ।
वामाचारवतां शुक्लो न सत्कृष्णोऽपि मध्यमः ॥९॥

---

[1] निषिद्धमासे शुभा, ४ (ख), ५, ६, ७, ८ – इति श्लोकाः ख.मा. न प्राप्यन्ते ।

तिथेः फलं बुद्धिनाशः क्रमाज्ज्ञेयाः सुसिद्धयः ।
अगौरीमान्त्रिका भ्रष्टा विगणेशाश्च दुःखिताः ॥१०॥
सिद्ध्ययन्ति मन्त्राः सर्वेऽपि न सिद्ध्यन्ति कदाचन ।
समृद्धिर्द्रुतसिद्धिश्च मूर्खता गुरुनाशनम् ॥११॥
[1] जडतारिविनाशश्च सर्वं पूर्णं भवेत्फलम् ।
शुक्ला श्रेष्ठा नैव कृष्णा शुभाशुभतरा हरेः ॥१२॥
सिद्धिः स्यात्सर्वमन्त्राणामशैवानां महाभयम् ।
सिद्धिर्धातुर्विशेषेण पुत्रहानिः पितृनृते ॥१३॥
अमावास्या सोमवारे भौमवारे चतुर्दशी ।
सप्तमी रविवारेण सूर्यपर्वशतैः समा ॥१४॥

**वारफलम् -**

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत्किल ।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्जयेत् ॥१५॥
बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥१६॥

**नक्षत्रफलम् -**

क्रमाद्दीक्षाफलं भानां समता च यथा विपत् ।
[2] मनस्तापः प्रियासौख्यं सौख्यं मन्त्रस्य सिद्धयः ॥१७॥
सिद्धिश्च [3] क्रूरमन्त्राणां शक्तिर्मन्त्रस्य सिद्धयः ।
सर्वे मन्त्राः प्रसिध्यन्ति सर्वमन्त्रस्य सिद्धयः ॥१८॥
निधनं राजदण्डश्च वशित्वं सर्वसिद्धयः ।
रुद्रदैवतसंसिद्धिः शीघ्रं सिद्धिः शुभा मतिः ॥१९॥

---

[1] जडता वित्तनाशश्च - इति समुचितः पाठ ।
[2] समस्तापः - इति ख.मा.पा. ।
[3] कुरुमन्त्राणाम् - इति ख.मा.पा. ।

देवमैत्री सर्वहानि: कलहश्च महाभयम् ।
संपद्रोगो जपात्सिद्धि: क्षोभ: सन्ताप ईशता ॥२०॥
सर्वसिद्धि: फलं भानां क्रमाद्दक्षेऽथ वामके ।
चतुरस्रे त्वध:पातो दग्धालिङ्गितधूमिते ॥२१॥
अधोमुखे शुभे भे च चन्द्रशुद्धौ विशेषत: ।
कृष्णे ताराबलं कुर्यात् स्वनामादिविचिन्तनम् ॥२२॥

**योगफलम् –**

योगाश्च प्रीतिरायुष्मान् सौभाग्य: शोभन: शुभ: ।
सुकर्मा च [1] धृतिर्वृद्धिर्ध्रुव: सिध्दिश्च हर्षण: ॥२३॥
वरीयाँश्च शिव: सिद्धो ब्रह्मा इन्द्रश्च षोडश ।
विष्कम्भादिकयोगानां नामतुल्यं फलं भवेत् ॥२४॥
आनन्दादिकयोगानां सर्वत्राविकलं फलम् ।
शुभानि कारणान्याहुर्दीक्षायां च विशेषत: ॥२५॥

[2] **करणफलम् –**

ववबालवतैतिला वणिजस्तदनन्तरम् ।
करणानि शुभान्येव सर्वतन्त्रेषु भाविनि ॥२६॥
शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ।
विष्टिं विहाय करणे च वै सिद्धिर्द्रुतं भवेत् ॥२७॥
सर्वसिद्धिर्विष्टिपुच्छे स्थिरे तु स्थिरता भवेत् ।

**लग्नफलम् –**

अथ लग्नफलं देवा धनधान्यं समृद्धय: ॥२८॥
मृत्युर्वाऽथ भवेद्धानि: पशवपत्यविनाशनम् ।
राज्यं वा देवतासिद्धिर्हानिर्मेधाविनाशनम् ॥२९॥

---

[1] वृत्ति: - इति ख.मा.पा. ।
[2] अथ करणफलम् - इति ख.मा.न प्राप्यते ।

रत्नादिलक्ष्मीलाभश्च धनं धान्यं च सिद्धयः ।
पूर्णसिद्धिः प्रतापश्च हानिर्विज्ञाननाशनम् ॥३०॥
पुत्रप्राप्तिर्मन्त्रसिद्धिः पशवो विपुलं धनम् ।
सदा दुःखं तथा हानिर्वामिनां मिथुनः शुभः ॥३१॥
वामिनां यवनानां च विरुद्धं बहुधा शुभम् ।

**[1] कालफलम् -**

धर्मदः प्रातः कालः स्यात्संगवो राज्यदायकः ॥३२॥
मध्याह्ने सर्वसिद्धिः स्यात्सायाह्ने मध्यमो भवेत् ।
रजनीमन्त्रदानन्तु निषिद्धं देशिकोत्तमैः ॥३३॥
चरःसर्वो विवर्जः स्यात्स्थिरराशिषु सौख्यदः ।
स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे [2] चरं शुभम् ॥३४॥
द्विस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते ।
तृतीयैकादशः षष्ठो दशमस्थः शुभः शशी ॥३५॥
जन्मचन्द्रः शुभः प्रोक्तो जन्मनक्षत्रवर्जितः ।
शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ॥३६॥
गोचरे ये ग्रहाः शुद्धास्तैर्युक्तः[3] पिण्डभः शशी ।
शुभमध्यस्थितो वाऽपि चन्द्रमाः शुभदो भवेत् ॥३७॥
त्रिषडायगताः पापाः शुभाःकेन्द्रत्रिकोणगाः ।
रन्ध्रे मृत्युप्रदाः सर्वे व्यये नैःस्वयं रिपौ च रुक् ॥३८॥
मन्त्रश्चन्द्रबलग्राह्योऽन्यथा [4] स्यादतिसम्भवम् ।
तारावलानुरूपेण देवतायाः कृपा भवेत् ॥३९॥
पञ्चाङ्गशुद्धे दिवसे स्वोदये चन्द्रसूर्ययोः ।
गुरुशुक्रोदये चैव शस्यते मन्त्रसंस्क्रिया ॥४०॥

---

[1] अथ कालफलम् - इति पा. ख.मा. न प्राप्यते ।
[2] चरः शुभः - इति पाठ उचितः ।
[3] पिशुनः - इति ख.मा.पा. ।
[4] अतिसम्भवः - इति पाठ उचितः ।

शुक्रास्तो यदि वा वृद्धो गुर्वादित्यो भवेद्यदि ।
मेषवृश्चिकसिंहेषु तदा दीक्षा न विद्यते ॥४१॥
[1] अस्वाध्याये भूमीकम्पे सन्ध्यागर्ज्जे च भैरव ।
उल्कापाते च दिवसे तत्र दीक्षां विवर्जयेत् ॥४२॥
शिष्यत्रिजन्मनक्षत्रे सङ्क्रान्तौ विषुवेऽयने ।
अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्ययोः ॥४३॥
पञ्चपर्वयुगाद्यासु व्यतिपातादिवासरे ।
अत्र दीक्षा शुभा प्रोक्ता नात्र कार्या विचारणा ॥४४॥
यन्मासतिथिवारादिशोधनं प्रोक्तमेव हि ।
मन्त्रदीक्षापरं तत्तु विज्ञेयं साधकोत्तमैः ॥४५॥
विद्यादीक्षापरं नैव तिथिमासादिशोधनम् ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुसारतः ॥४६॥
मुमुक्षकं प्रत्यथ न कालादिनियमः स्मृतः ।
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ॥४७॥
शशिदिवाकरयोर्ग्रहणे जन्मनि शिष्यस्य मकरसंक्रान्तौ ।
करुणासमये च गुरोर्नक्षत्रादीष्यते न दीक्षायाम् ॥४८॥
सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ॥४९॥
रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किञ्चिन्न विचार्यं कदाचन ॥५०॥
महाष्टम्यां विशेषेण धनकामार्थसिद्धये ।
सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ॥५१॥
सूर्यग्रहणकालेन सामान्यो नास्ति कश्चन ।
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत ॥५२॥

---

[1] ४२ श्लो. ख.मा. न प्राप्यते ।

न मासतिथिवारादिशोधनं सूर्यपर्वणि ।
ददातीष्टं गृही यत्तत्तस्मिन् काले गुरुर्नृषु ॥५३॥
सिद्धिर्भवति मन्त्रस्य विनायासेन वै ततः ॥
कर्तव्यं सर्वयत्नेन मन्त्रसिद्धिमभीप्सुभिः ॥५४॥
चन्द्रग्रहसहस्रेण सूर्यग्रहसमो भवेत् ।
ततो लक्षगुणं प्रोक्तं ग्रहणं निजवासरे ॥५५॥
तत्र सूर्यग्रहः शस्तो न तु चन्द्रग्रहः क्वचित् ।
चन्द्रग्रहे तु दारिद्र्यं सौरे सर्वसमृद्धयः ॥५६॥
सूर्यग्रहः शिवः प्रोक्तश्चन्द्राख्यः शक्तिरेव च ।
सूर्यग्रहे शक्तिदीक्षा पशुदीक्षां न कारयेत् ॥५७॥
चन्द्रग्रहे विष्णुदीक्षां पञ्चरात्रं न कारयेत् ।
चन्द्रसूर्यग्रहे दीक्षा सर्वदीक्षा शुभा मता ॥५८॥
चन्द्रग्रहे शक्तिदीक्षा सर्वदीक्षोत्तमोत्तमा ।
न वारतिथिऋक्षादिर्न मासनियमस्तथा ॥५९॥
न योगः करणं नापि न विचारं समाचरेत् ।
देवीवोधं समारभ्य यावत्स्यान्नवमी तिथिः ॥६०॥
कृता तासु बुधैर्दीक्षा सर्वाभीष्टफलप्रदा ।
बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ॥६१॥
अशोकाख्याऽष्टमी यत्र रामाख्या नवमी तथा ।
युगाद्यायां जन्मदिने विवाहदिवसे तथा ॥६२॥
विषुवाऽयनयोर्द्वन्द्वे नैव किञ्चिद्विचारयेत् ।
अयने विषुवे चैव युगाद्यासु तथैव च ॥६३॥
ग्रहणे च महातीर्थे न कालस्य विचारणम् ।
तुलसीनिकटे विल्वमूले धात्रीतले तथा ॥६४॥
अनादिदेवसान्निध्ये महाक्षेत्रे गवां गृहे ।
देवीपूजादिने वाऽपि नास्ति कालस्य निर्णयः ॥६५॥

तिथिं विनाऽपि दीक्षाया विशिष्टांवसरं शृणु।
दुर्लभे सद्गुरूणां तु सकृत्सङ्ग उपस्थिते ॥६६॥
तदनुज्ञा यदा लब्धा स दीक्षाऽवसरो महान्।
ग्रामे वा यदि वाऽरण्ये क्षेत्रे वा दिवसे निशि ॥६७॥
गुरावश्रुतदृष्टे च सिद्धिक्षेत्रे सुशोभनम्।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥६८॥
यदैवेच्छा तदा दीक्षा गुरोराज्ञाऽनुरूपतः।
न तिथिर्न व्रतं होमो न स्नानं न जपक्रिया ॥६९॥
दीक्षायाः कारणं किन्तु स्वेच्छाऽवाप्ते तु सद्गुरौ।
शिष्यानाहूय गुरुणा कृपया यदि दीयते ॥७०॥
तदा लग्नादिकं किञ्चिन्न विचार्यं कथञ्चन।
सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः ॥७१॥
यस्मिन्नहर्निशं तुष्टो गुरुः सर्वसुखावहः।
पुण्यतीर्थे कुरुक्षेत्रे देवीपीठे चतुष्टये ॥७२॥
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत्।
गयायां भास्करे क्षेत्रे विरजे चन्द्रपर्वते ॥७३॥
चत्वरे च मतङ्गे च तथा कन्याश्रमेषु च।
न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति ॥७४॥
इति ते कथितं देवि दीक्षाकालं सुरेश्वरि।

**इति तन्त्रचिन्तामणौ दीक्षाकालनिर्णयो नाम**
**षष्ठः प्रकाशः**
**(मूलमातृकायाः ३ पत्राणि, श्लोकसंख्या ७४ १/२)**

*****

# सप्तमः प्रकाशः

**श्रीदेव्युवाच -**

वाममार्गे कथं दीक्षा दक्षिणे च कथं भवेत् ।
किं तत्रावश्यकं केषामिति मे निर्णयं वद ॥१॥

**ईश्वर उवाच -**

शृणु देवि प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
दीक्षाविधिं पञ्चविधं तद्राज्ञामुत्तमोत्तमम् ॥२॥
उत्तमं महदाद्यानां सामान्यानां तु मध्यमम् ।
ब्राह्मणानामल्पयुक्तं यतीनामतिचाल्पकम् ॥३॥
तस्मादादौ प्रवक्ष्यामि तुभ्यं यत्रोत्तमोत्तमम् ।
यास्मिन्ज्ञाते चोत्तमादिभेदानां विषयो भवेत् ॥४॥
तत्र वक्ष्यामि दीक्षाङ्गं वास्तुयागपुरस्सरम् ।
तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः ॥५॥

**भूमिपरीक्षणम् -**

प्लवस्थानं च गम्भीरं दीर्घतोयाशयं सरः ।
अग्निशालाऽग्निहोत्राणां पुण्यस्थानं परिश्रुतम् ॥६॥
[1] द्विजानां सव्रतानां वा आश्रयः स्वाश्रयोऽथवा ।
दीक्षायामतिशस्तानि स्थानान्येतानि पार्वति ॥७॥
महानदीनां तीराणि गंगासागरसङ्गमः ।
प्रशस्तानि च तीर्थाणि क्षेत्राणि चाश्रमा अपि ॥८॥
अरण्यानि च सर्वाणि पर्वताः सकला अपि ।
सनिर्जरोऽप्युपगिरिर्देवतायतनान्यपि ॥९॥

---

[1] द्विजानां वा सव्रतानामाश्रयः - इति पाठ उचितः ।

**निषिद्धानि -**

न च दीक्षां प्रकुर्वीत निकुञ्जे गहने वने ।
द्विसीम्नि च महारण्ये मात्सर्यमृगसेविते ॥१०॥
स्फुटिता च सशल्या च वल्मीकरोहिणी तथा ।
दूरतः परिवर्ज्या भूः कर्तुरायुर्धनापहा ॥११॥
स्फुटिता मरणं कुर्यादूषरा धननाशिनी ।
सशल्या क्लेशदा नित्यं विषमा शत्रुवर्धिनी ॥१२॥
ईशकोणप्लवा सा च कर्तुः श्रीदा सुनिश्चितम् ॥
पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा ॥१३॥
दक्षिणप्लवा या भूमिर्नित्यं मृत्युभयप्रदा ।
गृहक्षयकरी सा च भूमिर्या नैर्ऋतप्लवा ॥१४॥
धनहानिकरी पृथ्वी कीर्तिता वरुणप्लवा ।
[1] वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी ॥१५॥
[2] प्रथमे भूप्रदेशे च परीक्षां कारयेद् बुधः ।
ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला ॥१६॥
कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला ।
कुन्देन्द्रगोपहेमालिवर्णा या ब्राह्मणादितः ॥१७॥
[3] ब्राह्मी सर्वार्थसिद्ध्यै स्यात्क्षत्रिया राज्यदा तथा ।
धनधान्यकरी वैश्या शूद्रा तु निन्दिता मुनेः ॥१८॥
[4] मृत्तिकागन्धमाघ्राय शुभाशुभनिरूपणम् ॥
[5] वातगन्धान्महाशोको मांसगन्धाद् धनेश्वरः ॥१९॥

---

[1] अग्निकोणप्लवा या च पुत्रायुर्धननाशिनी । - इत्यन्यत्र पाठः, अत्र त्रुटित इति प्रतीयते ।

[2] १६, १७ श्लो. क. मा. ख. मा. न प्राप्येते ।

[3] ग्राह्या सारक्तगन्ध्याद्या मूत्रविड्गन्धिनीक्रमात् ।
मधुरा शर्करा या सा कटुका च - इति ख.मा. अधिकः पाठः ।

[4] १९, २०, २१ श्लो. ख.मा. न प्राप्यन्ते ।

[5] लालागन्धात् - इति ग.मा.पा. ।

कटुगन्धाद् भवेद्रोगी विष्ठागन्धाच्च निष्फलः ।
मद्यगन्धान्निरोगी स्याद् दुर्गन्धी भयमादिशेत् ॥२०॥
सिद्धिर्न गन्धसंभूते सुधा च वणिजायता ।
क्षारगन्धा तथा नाशो [1] पानगन्धा शुभावहा ॥२१॥
[2] पुनः स्वादं वदिष्यामि शुभाशुभगतं भुवः ।
आम्ला विघ्नी तथा भूमिः कषाया हि निरोगिता ॥२२॥
लवणेन महानाशो तिक्तेनापि निजो रिपुः ।
विशेषस्वादमास्वाद्य मन्त्री [3] तस्या निरूप्यते ॥२३॥
भूमेः परिग्रहं कुर्याद्यावदायतनं भवेत् ।
शल्यादिशोधनं कुर्यात्तुषाङ्गारादि दूरयेत् ॥२४॥
[4] शर्करा यत्र विद्यन्ते क्लेशी भवति मानवः ।
अङ्गारेण तथा रोग आयासो लोहतो भवेत् ॥२५॥
दग्धादिना च काष्ठेन राजभीतिः प्रजायते ।
तृणेन जायते शोक इष्टकेनास्थिरो भवेत् ॥२६॥
वेतसा बन्धनैर्व्याप्तिर्वंशेन मरणं ध्रुवम् ।
विष्ठया बन्धनं प्रोक्तं शून्यभाण्डेन शून्यता ॥२७॥
चर्मणा कलहं विद्यात्कर्परे धननाशनम् ॥
आस्थिना च भवेन्मृत्युः स्थितिर्न ज्ञायते भुवि ॥२८॥
मृत्तिकास्निग्धपत्रेण यशोभागी भवेन्नरः ॥
बालुका यत्र विद्यन्ते तत्र विद्या महासुखी ॥२९॥
पाषाणेन महाभागी स्फाटिकेन च श्रीर्भवेत् ।
मणिना नागनाशश्च हीरकैर्धनवान् भवेत् ॥३०॥
विशेषजन्तुसकले प्रवक्ष्येऽहं शुभाशुभम् ।

---

[1] पयोगन्धा - इति उचित पाठः

[2] २२, २३, २४ (क) श्लो. ख.मा. न प्राप्यन्ते ।

[3] निरूप्यते - इति पाठ उचितः ।

[4] २५, २६, २७, २८, २९, ३०, ३१, ३२ श्लो. ख.मा.न प्राप्यन्ते ।

उरगेणास्थिरा भूमिर्मण्डूकेन धनागमः ॥३१॥
पिपीलिका शोकदा स्यान्मूषकैर्धान्यवर्धनम् ।
छुछुन्दर्या महानाशो कूर्मेण धनवान् भवेन् ॥३२॥
[1] शरभै रोगितां यान्ति पतङ्गेन महाभयम् ।
हिडिङ्गिका त्रासदा स्याद् विच्छिकैर्मरणं ध्रुवम् ॥३३॥
गृहगोधौ महासिद्धिः कृकला भयनाशनम् ।
एवमादीनि जन्तूनां शुभेन शुभदा भवेत् ॥३४॥
अशुभेनाशुभं विद्याज्जन्तूनां च विशेषतः ।
[2] भूमिस्तु खननाच्छोध्या स्वेष्टकुण्डादिकर्मणि ॥३५॥
खन्यमाने जलं यावच्छल्यदोषो विनश्यति ।
दूरे [3] यन्त्रस्थितं वारि खनितुं नैव शक्यते ॥३६॥
पञ्चहस्तं च खातव्यं शल्यदोषोपशान्तये ।
अस्थिकीटाङ्गारमलादिकहीनं शुभावहम् ॥३७॥
[4] अन्यथा तां मृदं त्यक्त्वा पूरयेच्छुभया मृदा ।
ग्रामाद् बहिस्थया तत्र विप्राद्यैः स्वस्ववर्णया ॥३८॥
शल्योद्धारं ततः कृत्वा पूरयेत् सुसमा यथा ।
एतदकरणे मन्त्री न किञ्चित्फलमाप्नुयात् ॥३९॥
[5] एवं संक्षेपतः प्रोक्तः शल्योद्धारक्रमो मया ।
एवं विशोध्य तां भूमिं कूर्याद्वास्तुप्रपूजनम् ॥४०॥
[6] स्मार्ता वा तान्त्रिकी चेति द्विविधा सा निगद्यते ।

---

[1] ३३, ३४, ३५ श्लो. ख. मा. न प्राप्यन्ते ।

[2] एतदकरणे मन्त्री न किञ्चित्फलमाप्नुयात् - इति श्लोकार्धं ख.मा.पठितम् ।

[3] नीच - इति ख.मा.पा. ।

[4] अथ खाताम् - इति ख.मा.पा ।

[5] हस्तमात्रोन्नता या सा पूरणे स्याच्छुभाऽधिका ।
समाना मध्यमा ज्ञेया कनिष्ठा या न पूरिता ॥ - इति ख. मा. अधिकः पाठः ।

[6] अथ वास्तुयोगः
भूमेः परिग्रहः पूर्वं शिलानां स्थापने तथा ।
जलाधारगृहार्थं च यजेद् वास्तुं विशेषतः ॥ - इति ख. मा. अधिकः पाठः ।

चरस्थिरप्रभेदेन द्विधा वास्तुः प्रकीर्तितः ॥४१॥
[1] गृहप्रासादकूपानां मण्डपस्य जलस्य च ।

अपरेष्वपि कार्येषु यागहोमादिकेषु च ॥४२॥

नूतनेऽपि गृहे कार्योऽन्यथा महदुपद्रवः ।

**वास्तुपुरुषोत्पत्तिः -**

वास्तुनामा पुरा कश्चिदसुरोऽभून्महाबलः ॥४३॥
त्रैलोक्यं निर्जितं तेन त्रिपञ्चाशच्च देवताः ॥
ये रणे संमुखे जातास्तेन तेऽतिनिपीडिताः ॥४४॥
पुनः पुनर्जिता युद्धे स एवाऽऽसीत् प्रजापतिः ।
दिव्यवर्षसहस्रान्ते देवाः शरणमागताः ॥४५॥
विष्णोर्ममापि पार्वत्या दैत्येन्द्रेणाऽपि तच्छ्रुतम् ।
योद्धुकामः सोऽभ्यधावन्नारदेन प्रचोदितः ॥४६॥
कृतं युद्धं तेन सार्धमस्माभिर्वर्षपञ्चकम् ।
ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः ॥४७॥
उवाच वचनं तुष्टो व्रियतां व्रियतामिति ।
नेन्द्रेण न कुवेरेण मम तोषकरं कृतम् ॥४८॥
ससैन्येनापि तद्युद्धं त्वया तु जटिलेन हि ।
कृतं विष्णुसहायेन पार्वत्यर्धाङ्गधारिणा ॥४९॥
तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वरः ।
अदेयं नास्ति मे किञ्चिद्याचयन्तु त्रयोऽपि च ॥५०॥
इत्याकर्ण्य वचस्तस्य शिवयोर्भ्रूप्रचोदितः ।
हरिः प्राह महाधन्य दैत्येन्द्र त्वत्समोऽस्ति कः ॥५१॥

---

[1] श्लो ४२ (क) ख.मा. न प्राप्यते ।

सत्यं त्रिवाक्यं कुरुष्व तदा [1] वाच्यो वरो मया ।
शिवेनाऽपि च पार्वत्या [2] एक एवापरो नहि ॥५२॥
त्रिरुवाच तदा दैत्यस्तदा विष्णुर्व्यजिज्ञपत् ।
यथा ते त्वरितं मृत्युः स उपायः प्रदर्श्यताम् ॥५३॥
विष्णोश्छलमिति ज्ञात्वा दैत्येन्द्रः समभाषत ।
अवश्यमेव गन्तव्यं सर्वैः कालमुखं हरे ! ॥५४॥
तथाऽपि स्वप्रतिज्ञार्थं यो गच्छति स जीवति ।
परन्त्वेको न मे वंशे यैश्च मत्सेवनं कृतम् ॥५५॥
तस्य मार्गं दर्शयित्वा देहोऽयं विनिपात्यताम् ।
काले तस्मिँश्च भो देवा वागुवाचाशरीरिणी ॥५६॥
दैत्येन्द्र कुरु मा शोकं भूमेर्जन्म तवाऽभवत् ।
तत्रैव त्वं लयं याहि त्वत्तोषार्थं वरं शृणु ॥५७॥
ये वर्णाः स्वस्य भोगार्थं करिष्यन्ति नवं गृहम् ।
तत्र त्वदुत्सवमृते नानादुःखैरुपद्रुताः ॥५८॥
कालकर्ण्यादिका दास्यो विनायकमुखाश्च ते ।
सेवकाः पीडयिष्यन्ति इत्याज्ञा पारमेश्वरी ॥५९॥
इत्याकर्ण्य वचः सोऽपि गर्तं कृत्वा महीतले ।
प्रविवेश ततो देवैर्मृत्पाषाणैः प्रपूरितम् ॥६०॥
ये तेन निर्जिता देवाः पुनरुद्गमशङ्कया ।
तस्योर्ध्वं तु त्रिपञ्चाशन्निवासं चक्रुरुद्यताः ॥६१॥
मूर्धन्यग्निः समाविष्टो मुखे चापः समाश्रिताः ।
पृथ्वीधरोऽर्यमा चैव तलस्थानमधिष्ठितौ ॥६२॥
वक्षःस्थले चापवत् स पूजनीयः सदा बुधैः ।
नेत्रयोर्दितिपर्जन्यौ श्रोत्रेऽदितिजयन्तकौ ॥६३॥

---

[1] याच्यो - इति पाठ उचितः ।
[2] अत्र च - इति अधिको वाच्यः ।

सूर्येन्द्रौ स्कन्धसंस्थौ तु पूजनीयौ प्रयत्नतः ॥
सत्यरोगादयस्तद्वद्‌वाह्वये पञ्च च पञ्च च ॥६४॥
रुद्रश्च राजयक्ष्मा च वामहस्ते च संस्थितौ ।
सावित्रः सविता तद्‌वद् हस्ते [1] दक्षिणमास्थितौ ॥६५॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ॥
पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धके ॥६६॥
तथैवासुरशेषौ च वामपार्श्वे च संस्थितौ ।
पार्श्वे तु दक्षिणे तद्‌वद्वितथः सगृहक्षतः ॥६७॥
[2] उच्चार्यमावुभौ ज्ञेयौ जान्वोर्गन्धर्वपुष्पकौ ।
जङ्घयोर्भृङ्गसुग्रीवौ स्फिक्स्थौ द्वौवारिको मृगः ॥६८॥
जयशक्तौ तथा मेढ्रे पादयोः पितरस्तथा ।
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते ॥६९॥
तस्मादवश्यं ते पूज्या गृहवाससुखेच्छया ।
शृण्वन्तु तद्विधिं देवा वामदक्षिणमार्गतः ॥७०॥
[3] रुद्रभूमिं प्रसाध्यान्ते दशदण्डं समालिखेत् ।
अधोऽधस्तिर्यगादौ च तमेकाशीतिकोष्ठकम् ॥७१॥
[4] वास्तुमण्डलकं कार्यमष्टहस्तं तु नापरम् ।
[5] एकाशीतिपदं चक्रं वैदिकास्तत्र देवताः ॥७२॥
मध्ये कोष्ठेषु नवसु त्वादौ ब्रह्माणमर्चयेत् ।
अपवत्सं तदीशाने प्रागर्यम्णं त्रिकोष्ठके ॥७३॥
आग्नेये सवितारं च विवस्वन्तमथ त्रिषु ।
इन्द्रं नैर्ऋत्यदिग्भागे मित्रं पश्चिमगं त्रिषु ॥७४॥

---

[1] दक्षिण आस्थितौ - इति पाठ उचितः ।

[2] उर्वोर्यमावुभौ - इति ख. मा. पा. ।

[3] भद्रभूमिः प्रशोध्येत - इति पाठ उचितः ।

[4] गृहप्रसादकूपानां मण्डपस्य जलस्य च - इत्यधिकः ख.मा.पाठः ।

[5] वास्तुमण्डलं कुर्यात्सूत्रयित्वा समं गुरुः ॥ - इत्यधिकः ख. मा. पाठः ।

वायव्ये राजयक्ष्माणं सुमेरुं चोत्तरत्रये ।
वेदकोष्ठेषु चैशान्यामीशकोणाच्च देवता: ॥७५॥
शिखी पर्जन्य आपश्चादिति: प्राक्कोष्ठयोर्द्वयो: ।
क्रमादेते पञ्च देवा ज्ञातव्या: सव्यमार्गत: ॥७६॥
जयन्तेन्द्रौ सूर्यसव्ये भृगुराग्नेयकोणके ।
अन्तरिक्षे तथा वात: पूषा सावित्र एव च ॥७७॥
चतुष्क ईशतो देवास्ततो दक्षिणपञ्चके ।
[1] युग्मे क्रमाच्च वितथो गृहक्षतयमौ तथा ॥७८॥
गन्धर्वो भृङ्गराजश्च[2] नैर्ऋतिस्थचतुष्कके ।
ईशानतो जयनृपौ पितृदौवारिकौ तथा ॥७९॥
तत: पश्चाद् द्विके पञ्च सुग्रीव: पुष्पदन्तक: ।
वरुणासुरशेषाश्च वायव्ये ईशतस्त्वहि: ॥८०॥
रुद्रश्च पापयक्ष्मा च रोगश्चान्तरपञ्चसु ।
मुख्यौ भल्लाटसोमौ च भुजगश्चादितिस्तथा ॥८१॥
देवा एते पञ्चचत्वारिंशदर्च्याश्च भक्तित: ।
उक्तानामिति देवानां पदान्यापूर्य पञ्चभि: ॥८२॥
मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ।
सितेन रजसा भूयस्तद्दिक्षु च चतसृषु ॥८३॥
षट्कं संमार्ज्य रजसा रक्तेन परिपूरयेत् ॥
शिष्टानि च पदान्यत्र यथास्थानं प्रकल्पयेत् ॥८४॥
विचित्राणि ततो मध्ये ब्रह्माणं संप्रपूरयेत् ।
रजोभिस्ते यथोक्तेभ्य: पायसान्नैर्बलिं हरेत् ॥८५॥
पायसैर्मधुरै: सर्वान् संयजेन्मधुरान्वितै: ।
तत्तद्द्रव्यैश्च मतिमान् पूजयेद्दोषशान्तये ॥८६॥

---

[1] युग्मक्रमाच्च - इति पाठ उचित: ।
[2] नैर्ऋतिस्थे - इति ख. मा. पा. । नैऋतश्च चतुष्टके - इति पा. अन्यत्र ।

[1] पाषाणे प्रतिमायां वा वास्तोः पतेःप्रतिजानी ।
इति वैदिकमन्त्रेण तस्यावाहनपूजनम् [2] ॥८७॥
नाममत्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ।
[3] अथ तान्त्रिकमार्गे तु चतुःषटिपदे तथा ॥८८॥
कोणयोः सूत्रयुगलं मध्ये ब्रह्माणमर्चयेत् ।
चतुःकोष्ठेषु तत्पूर्वाद्यासु कोष्ठद्विके द्विके ॥८९॥
आर्षकं च विवस्वन्तं मित्रमन्यं महीधरम् ।
सावित्रः सविता शक्र इन्द्रजिद्रुद्रतज्जयौ ॥९०॥
आपापवत्सकौ चेति शैव्याः कोणार्धकोष्ठयोः ।
शर्वं गुहं चार्यमाणं [4] जम्भकं [5] पिलिपिच्छकम् ॥९१॥
चरकीं च विदारीं च पूतनां पूर्वतो द्वयोः ।
ईशानश्चाथ पर्जन्यो जयन्तः शक्रभास्करौ ॥९२॥
सव्यो वृषोऽन्तरिक्षश्च पूर्वाशाकोष्ठगास्तथा ।
अग्निः पूषा च वितथो यमोऽथ गृहरक्षकः ॥९३॥
गन्धर्वो भृङ्गराजश्च मृगा दक्षिणदिग्गताः ।
निर्ऋतिश्च तथा दौवारिकः सुग्रीवकस्तथा ॥९४॥
वरुणः पुष्पदन्तश्चासुरः शोषाख्यरोगकौ ।
पश्चादथोत्तरे वायुर्नागो मुख्यस्ततः परम् ॥९५॥

---

[1] ८७, ८८ (क) श्लोकौ ख.मा.पठितौ ।

[2] पाषाणे प्रतिमायां वा 'वास्तोष्पते प्रतिजानीहि' ।
इति वैदिकमन्त्रेण तस्याऽऽवाहनपूजनम् ॥
नाममन्त्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ।
मध्ये नवपदो ब्रह्मा शेषास्तूपदिकाः स्मृताः ॥
षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् । - इति ख. मा. अधिकः पाठः ।

[3] ८८ (क), ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९६ श्लोकाः १९६ श्लोकानन्तरं पठिताः ।

[4] जृम्भकम् - इति पाठः समुचितः ।

[5] पिलिपिच्छिकाम् - इति पाठः साधुः ।

सोमभल्लाटार्गलाख्या अदितिर्दितिरुत्तरे।
ब्रह्मस्थानं रक्तवर्णैर्दिशः पीतै [1] र्विदिक्सितैः ॥९६॥
[2] ततो दिशस्तु हरितैर्विदिशः कृष्णवर्णकैः।
अरुणः परिधिः कार्यः सुन्दरं मण्डलं भवेत् ॥९७॥
उक्तानां सर्वदेवानां स्वरूपं च निगद्यते।
अक्षमालावरं दक्षे वामे दण्डकमण्डलुम् ॥९८॥
दधानमष्टनयनं यजेन्मध्येऽम्बुजासनम्।
सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिताः ॥९९॥

**वास्तुध्यानम् –**

आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम्।
स्मरेत्पूजासु कुड्यादिनिवेशे त्वधराननम् ॥१००॥
जानुनी कूर्परासक्ते दिशि वातहुताशयोः।
पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयाञ्जलिः ॥१०१॥
कृताञ्जलिपुटा उर्ध्वे खड्गखेटकपाणयः।
ब्रह्माणं सन्निरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ॥१०२॥
स्वस्वस्थानस्थिताश्चैव साधारणमुदाहृतम्।
मरीचिः श्वेतवर्णः स्याद्विवस्वान् रक्तवर्णकः ॥१०३॥
शातकुम्भनिभो मित्रः कृष्णवर्णस्तु भूधरः।
सविता नीलवर्णाभः सावित्रो धूमविग्रहः ॥१०४॥
इन्द्रश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा।
रुद्रः प्रवालसदृशः पीतो रुद्रजयस्तथा ॥१०५॥
आपो गोक्षीरधवला आपवत्सो जपाद्युतिः।
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसन्निभः ॥१०६॥

---

[1] विकसितैः – इति पाठः साधुः।
[2] ९७ श्लो. ख.मा.न. प्राप्यते।

जयन्तोऽञ्जनसङ्काशो महेन्द्रश्चामलद्युतिः ।
आदित्यो रक्तवर्णः स्यात्सत्यकश्चिचत्रवर्णकः ॥१०७॥
वृषो बन्धुकपुष्पाभः कुन्दाभश्चान्तरिक्षकः ।
उद्यद्दिनकराभोऽग्निः पूषा रक्ताब्जसन्निभः ॥१०८॥
वितथश्चेन्द्रचापाभो विद्युद्वर्णो गृहक्षतः ।
यमश्चाञ्जनसंकाशो गन्धर्वः पद्यरागवत् ॥१०९॥
भृङ्गराजस्तु भृङ्गाभो मृगो जीमूतसन्निभः ।
निर्ऋतिः पावकाभश्च पीतो दौवारिकः स्मृतः ॥११०॥
सुग्रीवो नीलकण्ठाभश्चन्द्राभः पुष्पदन्तकः ।
वरुणः स्फटिकाभश्च भृङ्गाभश्चाम्बरो मतः ॥१११॥
शोषश्चोत्पलसंकाशो रोगश्चैवेन्द्रनीलवत् ।
वायुः कृष्णाभ्रवर्णः स्यान्नागः शङ्खेन्दुसन्निभः ॥११२॥
मुख्यो मौक्तिकसंकाशो भल्लाटः श्वेतपद्मवत् ।
सोमः स्फटिकसंकाशोऽर्गलो रक्तोत्पलद्युतिः ॥११३॥
दितिः कुन्देन्दुधवला कपिला ह्यदितिः स्मृता ।
चरकी शङ्खसदृशी विदारी पावकद्युतिः ॥११४॥
पूतना हिमसंकाशा मेघाभा पिलपिच्छकी ।
खड्गं च पानपात्रं च छुरिकां कर्तृकां तथा ॥११५॥
दधाना भीमरूपास्ता राक्षस्यः परिकीर्तिताः ।
सिता रक्ताश्च पीताश्च कृष्णाः स्कन्दादिका ग्रहाः ॥११६॥
वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः ।
दधाना भीषणाः प्रोक्ता ग्रहाः स्कन्दादिकाश्च ते ॥११७॥
१ होमादिकं तथा कुर्यात्स्वैः स्वैश्चाहुतिमाददेत् ।
व्रीहिमुद्गयवैः क्षौद्रघृतदुग्धप्लुतैः क्रमात् ॥११८॥

---

१ ११८ (क) श्लो. ख. मा. प्राप्यते ।

[1] अष्टोत्तरशतं चाष्टोत्तरविंशतिरेव वा।
प्रत्येकं तैर्हुनेद्द्रव्यैर्मन्त्रैस्तद्वच्च पायसैः ॥११९॥
वलिं च तेषां कुर्वीत पायसैर्व्यञ्जनान्वितैः।
ससितैर्दुग्धकदलीफलापूपादिसंयुतैः ॥१२०॥
बलिं च दापयेत्पूर्वं पूजयेत्साधकस्ततः।
अन्नादिभिश्च संयुक्तं माषभक्तादिमण्डितम् ॥१२१॥
गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय।
गन्धादिशर्करापूपपायसोपरिसंयुतम् ॥१२२॥
आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय।
चन्दनाद्यर्चितं नाथ कर्पूरागुरुमण्डितम् ॥१२३॥
विवस्वन् वै गृहाणेमं सर्वदोषं प्रणाशय।
सगुडं पायसं नाथ पुष्पादिसुसमन्वितम् ॥१२४॥
गृहाणेमं बलिं हृद्यं मित्र शान्तिं प्रयच्छ मे।
माषौदनं समांसं च गन्धादिक्षीरसंयुतम् ॥१२५॥
गृहाणेमं महीभृत्त्वं सर्वदोषं प्रणाशय।
एवं मध्ये तु संपूज्य ईशानादिवलिं हरेत् ॥१२६॥
[2] पुष्पादिकुशपानीयं [3] शर्करागुरुवासितम्।
सावित्र वै [4] गृहाणेमं शान्तिमाशु प्रयच्छ मे ॥१२७॥

---

१ ११९, १२०, १२१ (क) श्लो. ख.मा.न प्राप्यन्ते।

२ एतेन पूजायागादिक्रमेऽपि बलावीशानादिक्रमः-
सर्वेषां खलु वस्तूनां विशेषं पदनिर्णये।
ईशानादिचतुष्कोणसंस्थितान् पूजयेदिति ॥
- इति ख.मा. अधिकः पाठः।

३ कुशमानीय - इति ख.मा.पा.।

४ ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितम्।
गृहाणेमं वलिं हृद्यमिन्द्रजय नमोऽस्तु ते ॥
पक्कापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम्।
गृहाणेमं वलिं हृद्यं रुद्रदेव नमाम्यहम् ॥
समांसं घृतसंपक्वं गन्धपुष्पादिसंयुतम्।
गृहणेमं वलिं रुद्रजय स्वस्ति नमोऽस्तु ते ॥
- इति ग.मा. अधिकः पाठः।

पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् ।
गृहाणेमं बलिं सूर्य विघ्नमाशु प्रणाशय ॥१२८॥
शीतमन्नं तथा पुष्पं कुङ्कुमादिसमन्वितम् ।
गृहाणेमं बलिं ह्यचं शक्रदेव नमोऽस्तु ते ॥१२९॥
क्षीरखण्डसमायुक्तं पुष्पादिभिरलङ्कृतम् ।
गृहाणेमं बलिं ह्यद्यमाप: शान्तिं प्रयच्छ मे ॥१३०॥
दधीदं गुडसंमिश्रं गन्धादिभि: सुसंयुतम् ।
गृहाणेमं बलिं वत्स विघ्नं मे त्वं प्रणाशय ॥१३१॥
सघृतं माषभक्तं च रक्तगन्धादिसंयुतम् ।
बलिं गृहाण शर्व त्वं [1] रक्ष विघ्नं विनाशय ॥१३२॥
मांसं पुष्पादिसंयुक्तं माषभक्तोपसंयुतम् ।
गृहाणेमं बलिं स्कन्द रक्ष विघ्नं विनाशय ॥१३३॥
श्वमांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम् ।
अर्यमन् वै गृहाणेमं सर्वविघ्नं विनाशय ॥१३४॥
रक्तमांसौदनं मत्स्यगन्धधूपसमन्वितम् ।
जृम्मक त्वं गृहाणेमं रक्ष विघ्नं विनाशय ॥१३५॥
छागकर्णान्वितं मांसं वस्तुगन्धादिसंयुतम् ।
पिलिपिच्छे गृहाणेमं रक्ष विघ्नं विनाशय ॥१३६॥
घृतेन साधितं मांसं वस्त्रगन्धादिसंयुतम् ।
चरकि त्वं गृहाणेमं रक्ष विघ्नं विनाशय ॥१३७॥
रक्तपुष्पं समांसं वै रक्तवस्त्रादिसंयुतम् ।
विदारि वै गृहाणेमं रक्ष विघ्नं विनाशय ॥१३८॥
पित्तरक्तास्थिसंयुक्तं रक्तगन्धादिमण्डितम् ।
गृहाणेमं पूतने त्वं रक्ष विघ्नं विनाशय ॥१३९॥
सघृतं चाक्षतं पुष्पवस्तुगन्धाद्यलङ्कृतम् ।

---

१ १३२ श्लोकसंख्यात: १३९ पर्यन्तेषु श्लोकेषु रक्ष विघ्नम् इत्यत्र रक्षोविघ्नम् - इति पाठोऽन्यत्र दृश्यते

गृहाणेमं बलिं त्वीश वास्तुदोषापहारकम् ॥१४०॥
उत्पलं पायसैर्युक्तं वस्त्रादिकसमन्वितम् ।
गृहाणेमं बलिं हृद्यं मेघराज नमोऽस्तु ते ॥१४१॥
पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम् ।
गृहाणेमं बलि हृद्यं जिष्णुसुत नमोऽस्तु ते ॥१४२॥
ओदनं घृतसंपूर्णं पञ्चरत्नादिमण्डितम् ।
गृहाणेमं बलिं हृद्यं देवराज नमोऽस्तु ते ॥१४३॥
रक्तपुष्पयुतं भक्तं रक्तगन्धादिभियुर्तम् ।
गृहाणेमं बलिं हृद्यं [1] भास्कराय नमोऽस्तु ते ॥१४४॥
वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम् ।
रक्तयुक्तं गृहाणेमं बलिं सत्य नमोऽस्तु ते ॥१४५॥
इदं तु मांसभक्तं वै वस्त्रगन्धादिपूजितम् ।
गृहाणेमं वृष [2] बलिं वास्तुदोषं विनाशय ॥१४६॥
इदं तु शार्दूलं मांसं नैवेद्यादिसुसंयुतम् ।
गृहाणेमं बलिं हृद्यं व्योम शान्तिं प्रयच्छ मे ॥१४७॥
सुवर्णं पिष्टकं चाथ वस्त्रगन्धादिभिर्युतम् ।
घृतान्वितं गृहाणेमं सप्तजिह्व नमोऽस्तुते ॥१४८॥
क्षीरं लाजासमायुक्तं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं वलिं हृद्यं पूषदेव नमोस्तु ते ॥१४९॥
मांसौदनं गन्धमाल्ययुतं वस्त्रादिभूषितम् ।
वितथैनं बलिं गृह्ण वास्तुदोषं विनाशय ॥१५०॥
मत्स्यमांसयुतं भक्तं गन्धपुष्पाद्यलङ्कृतम् ।
यमराज गृहाणेमं बलिं शान्तिं प्रयच्छमे ॥१५१॥

---

१ भास्कर त्वम् - इति पाठः साधुः ।
२ धृष-इति ख.मा.पा. ।

१ पक्वमांसौदननवनीतं वस्त्रादिमण्डितम् ।
प्रीतिकरं गृहाणेमं गृहरक्ष नमोऽस्तुते ॥१५२॥
नानागन्धसमायुक्तं रक्तधूपादिभिर्युतम् ।
बलिं गृहाण गन्धर्व सर्वदोषं प्रणाशय ॥१५३॥
इमां तु शाकुनिं जिह्वां माषभक्तोपरिस्थिताम् ।
गृहाणेमं भृङ्गराज बलिं शान्तिं प्रयच्छ मे ॥१५४॥
एवं तिलघृतोपेतं गन्धपुष्पादिभिर्युतम् ।
गृहाणेमं बलि हृद्यं मृगदेव नमोऽस्तु ते ॥१५५॥
शर्करामण्डितं खण्डं वस्तुगन्धाद्यलङ्कृतम् ।
प्रीतो बलिं गृहाणेमं रक्षराज नमोऽस्तु ते ॥१५६॥
चन्दनागुरुकाखण्डं वस्त्रगन्धादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं दौवारिक नमोऽस्तु ते ॥१५७॥
इदं तु पायसं नाथ गन्धपुष्पादिमिश्रितम् ।
सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥१५८॥
यवाग्वलङ्कृतं दुग्धं भक्तोपरिसमर्पितम् ।
गृहाणेमं बलिं हृद्य जलदेव नमोऽस्तु ते ॥१५९॥
माषभक्तं कुशस्थं च घृतगन्धादिसंयुतम् ।
पुष्पदन्त गृहाणेमं वास्तुदोषं प्रणाशय ॥१६०॥
मधुना साधितं पिष्टं गन्धाद्यैरुपशोभितम् ।
बलिं गृहाणासुरेन्द्र सर्वदोषं प्रणाशय ॥१६१॥
घृतं चान्नसमायुक्तं कर्पूरादिसमन्वितम् ।
गृहाणेमं बलिं शोष सर्वशान्तिं प्रयच्छ मे ॥१६२॥
यवजं तण्डुलं माषं गन्धपुष्पादिशोभितम् ।
गृहाणेमं बलिं रोग सर्वदोषं प्रणाशय ॥१६३॥

---

१ पक्वमांसौदनं नीतम् - इति पाठः समुचितः ।

सघृतं मण्डकं चेदमन्नाद्यैरुपशोभितम् ।
गृहाणेमं बलिं हृद्यं मृगवाह नमोऽस्तु ते ॥१६४॥
इदं तु कृशरान्नं मे दुग्धगन्धादिसाधितम् ।
पातालेश गृहाणेमं विघ्नमाशु प्रणाशय ॥१६५॥
नारिकेलोदकं भक्तं पीतवस्त्रादिसंयुतम् ।
गृहाणेमं बलिं मुख्य वास्तुदोषं प्रणाशय ॥१६६॥
दधिगन्धादिभिर्युक्तं पीतपुष्पसमन्वितम् ।
बलिं प्रगृह्यतां सोम सर्वदोषं प्रणाशय ॥१६७॥
ओदनं घृतसंमिश्रं गन्धपुष्पसमन्वितम् ।
गृहाणेमं वलिं हृद्यं भल्लाटक नमोऽस्तु ते ॥१६८॥
माषान्नं तु घृताभ्यक्तं गन्धपुष्पादिमण्डितम् ।
गृहाणेमं बलिं हृद्यमर्गलाख्य नमोऽस्तु ते ॥१६९॥
१ पोलिकां मधुसंमिश्रां वस्त्रगन्धादिसंयुताम् ।
गृहाणेमं बलिं हृद्यं देवमातर्नमोऽस्तु ते ॥१७०॥
क्षीरखण्डसमायुक्तं नानापूजोपशोभितम् ।
दैत्यमातर्गृहाणेमं सर्वदोषं प्रणाशय ॥१७१॥
स्वर्गपातालमर्त्येषु ये देवा वास्तुदेवताः ।
गृह्णन्त्विमं बलिं हृद्यं तुष्टा यान्तु स्वमन्दिरे[२] ॥१७२॥
मातरो भूतवेताला ये चान्ये वलिकाङ्क्षिणः ।
विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम् । १७३॥
पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा प्रकामतः ।
अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत् ॥१७४॥
वास्तुशेषक्रियाभूतः सर्वरक्षाविभूतिकृत् ।
भूतप्रीतिप्रदश्चास्मिन् दिशां बलिरुदीर्यते ॥१७५॥

---

१ पोरिकाम् - इति पा. अन्यत्र ।
२ स्वमन्दिरम् - इति ख.मा.पा. ।

दिक्पालपरिषत्सर्वभूतानुद्दिश्य नामभिः ।
पूजा विसर्जनान्ता या स विज्ञेयो दिशां बलिः ॥१७६॥
दध्यम्बुरजनीपुष्पलाजासक्तुतिलान्धसा ।
द्रव्येण वितरेद् दिक्षु बलिं दिक्क्रमयोगतः ॥१७७॥
सुराणां तेजसां चैव प्रेतानां रक्षसामपि ।
[1] देव्या जलानां प्राणानां नक्षत्राणां च तत्पुनः ॥१७८॥
विद्यानामधिपानां च नान्यथोक्तान् बलिं हरेत् ।
सवाहनपदं प्रोक्ता परिवाराय शक्तये ॥१७९॥
तत्पार्षदेभ्यश्च ततः सर्वेभ्य इति संयुतम् ।
भूतेभ्यश्च क्रमाद् भूयः प्राच्यां दिशि क्षिपेद् बलिम् ॥१८०॥
द्विषत्पिशाचवेतालरक्षोरक्षार्थिनामिह ।
दिशां बलिर्विशेषेण सर्वसम्पत्समृद्धिदः ॥१८१॥
[2] देवीदेवविशेषाणां कर्म कृत्वा सुभक्तितः ।
महाबलिप्रदानेन प्रसृते देशमण्डले ॥१८२॥
कुद्दालं चास्त्रमन्त्रेण पूजयेत् परमेश्वरि ।
खनितृपुरुषायापि [3] दापयेद्दक्षिणादिकम् ॥१८३॥
[4] हीनाङ्गा वर्जनीयाश्च चानपत्याँश्च वर्जयेत् ।
तत्क्षणान्मृदमुद्धृत्य बसुधां तत्र पूजयेत् ॥१८४॥
द्विभुजः पीतदेहस्तु जटाधारी गजासनः ।
विश्वकर्मा सदागौरो ज्ञानमुद्राऽक्षसूत्रभृत् ॥१८५॥
विश्वकर्मन् जगद्व्यापिन् संसारसृष्टिकारक ।
अत्र कुद्दालहस्तस्त्वं विश्वकर्मन् नमोऽस्तु ते ॥१८६॥

---

[1] तथा - इति पा. अन्यत्र ।

[2] वास्तौ गृहप्ररोहे भूतद्रोहे गृहप्रवेशे च ।
वितते च शान्तिहोमे दिशां बलिः सिद्धये प्रयोक्तव्यः ॥
- इति ख.मा. अधिकः पाठः ।

[3] दापयेद्दक्षिणादिभिः - इति क. मा. ग.मा.पा. ।

[4] १८४, १८५, १८८, १८९, १९०, १९१, १९२, १९३, १९४ (क) - इति श्लोकाः ख. मा.न प्राप्यन्ते ।

[1] एकाशीकोष्ठनिर्भेदवास्तौ विश्वात्मकर्मकः ।
कुद्दालं गृह्यतामत्र खननं कुरु साम्प्रतम् ॥१८७॥
भद्रं मुहूर्तमाश्रित्य खन्यते [2] वास्तुकोष्ठकम् ।
स्वर्ण कुद्दालरूप त्वं भूमेः खननकर्मणि ॥१८८॥
विश्वकर्मायुधो नित्यं नमोऽस्तु वास्तुमूर्तये ।
[3] कुद्दालैर्दापयित्वाऽपि कीटकोटिशतैरपि ॥१८९॥
क्षम्यतां पृथिवीदेवि विष्णुस्थापनहेतवे ।
शुभाशुभानि वास्तूनां क्रमेणैव वदाम्यहम् ॥१९०॥
कक्षान्तरे च नित्यं च सर्वत्र भद्रमादिशेत् ।
शीर्षे चैव भवेन्मृत्युः [4] कक्षे च दुःखभागिता ॥१९१॥
हस्ते चौरभयं विद्यादुरसोः पशुनाशनम् ।
जानौ विदेशगमनं पादाभ्यां च निरर्थकम् ॥१९२॥
वामदक्षिणमित्येवं वास्तुक्षेत्रमुदीरितम् ।
निपुणः कारयेन्मन्त्री कल्याणं पूर्णतः कृतम् ॥१९३॥
समाहितमना भूत्वा [5] खनिते वास्तुकक्षके ॥१९४॥
[6] ततो विसर्जयेद्देवि देवान् वास्तुप्रपूजितान् ।
यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ॥१९५॥
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ।
इत्येतत्कथितं देवि वास्तुयागस्य लक्षणम् ॥१९६॥
सर्वपापहरं चैव सर्वकामप्रपूरकम् ।
[7] दैवासुरञ्च वास्तूनां प्रकारे नागवास्तुकम् ॥१९७॥

---

[1] एकाशीतिकोष्ठभेदे - इति पाठोऽन्यत्र ।
[2] चास्त्रमूर्तये - इति पा. अन्यत्र ।
[3] कुद्दालैर्दारितैरत्र - इति पाठोऽन्यन्त्र ।
[4] कण्ठे - इति पा.अन्यत्र ।
[5] खनयेत् - इति पा. अन्यत्र ।
[6] १९७ (ख), १९८, १९९, २००, २०१, २०२, २०३, २०४, २०५ - इति श्लोकाः ख.मा.न प्राप्यन्ते ।
[7] १८८ ख, १८९, १९०, १९१, १९२, १९३, १९४, १९५, १९६, १९७, १९८ (ख) २१९, २२० श्लोकाः ख.मा. पठिताः ।

एकाशीतिपदे कोष्ठमीशनैर्ऋत्यमण्डलम् ।
ईश: शिरस्तथा पुच्छं मण्डलाकारवास्तुकम् ॥१९८॥
कोष्ठे च देवता: पूज्या विधिं मध्ये तु पूजयेत् ।
भाद्रपदादिसर्वस्मिन् मासि मासि त्रयं त्रयम् ॥१९९॥
दिशाञ्चैवेशभादीनि चरताञ्च विधीयते ।
कन्यादिसंक्रमं ज्ञात्वा दिगादीनां क्रमो मत: ॥२००॥
तुलामिथुनपूर्वादिराश्विन:कार्तिकस्तथा ।
एवं क्रमेण संयातं मार्गशीर्षं च पौषकम् ॥२०१॥
माघमासान्तकं चक्रे धनुर्मकरकुम्भकम् ।
मीनो मेषवृषौ चेति फाल्गुणं चैत्रमेव च ॥२०२॥
वैशाखान्तक्रमं ज्ञात्वा पश्चिमादिषु चाक्रमम् ।
मिथुनं कर्कसिंहौ च ज्येष्ठाषाढौ च श्रावणम् ॥२०३॥
एवं क्रमं प्रबुध्यन्तं नागानां वास्तुसंक्रमम् ।
त्रयस्त्रयोऽपि मासाश्च चतुष्टयदिशाक्रम: ॥२०४॥
स्वपितं वामपार्श्वन्ते द्विभुजं नवभि: फणा ।
एकाशीकोष्ठञ्चाङ्गानि व्यापकं नागवास्तु स: ॥२०५॥
[1] खनितं ग्रीववामाग्रे निपुणं कारयेत् सुधी: ।
एवं नागस्य वास्तूनि जलकार्यं विशेषत: ॥२०६॥
अथवा निर्मिते गेहे वास्तुपूजां समारभेत् ।
नैर्ऋत्यकोणे गेहस्य चतुरस्राकृतिं शुभाम् ॥२०७॥
कृत्वा समतलां भूमिं वितस्त्युच्चां च वेदिकाम् ।
विस्तारायामतो हस्तमात्रां तत्र लिखेद् बुध: ॥२०८॥
एकाशीतिपदे कोष्ठे लेखयेच्छुद्धभूमिषु ।
स्वै: स्वैर्मन्त्रैस्तु वास्त्वादीन् पूजयेत् पूर्ववत् सुधी: ॥२०९॥

[1] २०६, २०७, २०८, २०९ - इति श्लोका: ख.मा. न प्राप्यन्ते ।

एवं सिंहगते भानौ पूर्णायां प्रतिवत्सरम् ।
स्वगेहे वास्तुपूजां यो मण्डपेषु समाचरेत् ॥२१०॥
न बालमरणं व्याधिर्भूतप्रेतादिकानि च ।
न सर्पपीडा ह्यन्योऽन्यकलहाद्यशुभानि च ॥२११॥
पुत्रपौत्रधनारोग्यपशुदासीसमृद्धिभाक ।
अरोगी विजयी ख्यातश्चिरं जीवति तद्गृहे ॥२१२॥
राजवेश्मसु सर्वत्र तथा च महिषीगृहे ।
सचिवामात्यसेनानां भवनेषु पुरे तथा ॥२१३॥
विदध्यात् प्रतिवर्षं तु प्रोक्तसिध्दौ तु देशिकः ।
न चेदुक्तान्यथारूपफलैः क्लेशोऽनिशं भवेत् ॥२१४॥
भैरवक्षेत्रपालानां योगिनीनां विशेषतः ।
वामाचारैर्बलिः कार्यो महिषैर्वाऽपि कुक्कुटैः ॥२१५॥
आराधितास्तु वामेन जायन्तेऽतिबुभुक्षिताः ।
देवता बलिमिच्छन्ति तद्धीनं हन्ति साधकम् ॥२१६॥
मद्यमांसप्रमत्तास्ते प्राक्तनेन प्रचोदिताः ।
कदाचिच्छुभमिच्छन्ति तस्मात्सद्भिर्न वामतः ॥२१७॥
क्रियतेऽभ्यर्चनं तासां पातस्तु निकटे यतः ।
शुभं भवति वा नो वा यथाशास्त्रे तथा जने ॥२१८॥
यावन्न मद्यमांसाशी जनस्तावदलोलुपः ।
भुक्ते तस्मिंस्तन्मना स्यात् क्व जपः क्व च देवता ॥२१९॥
मद्यमांसादिकत्यागात्तस्य वाऽतिनिषेवणात् ।
दृश्यते तुल्यरूपो यः स सिद्धोऽन्यस्तु पातकी ॥२२०॥
एवं परीक्ष्य कर्तव्या सिद्धानामपि संगतिः ।
तत्संसर्गी पञ्चमोऽयमन्यसंगेन दृश्यते ॥२२१॥

•

कालरूपेण कलना गीतगाथाविधेः पुरः ।
मय्यधैर्याद् वृषो नश्येत्तृष्णया द्वौ विनश्यतः ॥२२२॥
धातुर्वादात्त्रयं नश्येत्सर्वनाशस्तु वामतः ।
इति सञ्चिन्त्य भो देवाः स्वधर्मः श्रेयसे भवेत् ॥२२३॥

इति तन्त्रचिन्तामणौ वास्तुयागनिर्णयो नाम
सप्तमः प्रकाशः ।
मूलमातृकायाः ८ पत्राणि । श्लोकसङ्ख्या २२३ ।)

*****

# अष्टम प्रकाशः

वास्तुशान्तिं विधायैवं सदसज्ज्ञानहेतवे ।
ततः समीकृतायान्तु भूमौ दिक्साधनं चरेत् ॥१॥
सूत्रकर्कटकीलानि गृहीत्वा च निशान्तरे ।
आद्यान्तरं[1] च संयुक्ता नलिका ध्रुववेधिका ॥२॥
याम्योत्तरा सा तन्मध्ये केन्द्राद् वृत्तं समालिखेत् ।
रेखान्ततो वृत्तमध्ये तेन कर्काटकेन तु ॥३॥
धनुः कुर्यात्ततश्चायं ततः कुर्याद् धनुः पुनः ।
एवं चापानि षट् तत्र पद्मे भवति षड्दलम् ॥४॥
सौम्ये याम्ये त्रयं कृत्वा दलानां मध्यदेशतः ।
दीर्घरेखा कृता सा तु भवेत् पूर्वाऽपराभिधा ॥५॥
याम्यपश्चिमयोः सौम्य पूर्वयोरुपरिस्थयोः ।
चापयोरर्धगं सूत्रमीशानी राक्षसी भवेत् ॥६॥
अन्ययोश्चापयोरेवमाग्नेयी वायवी भवेत् ।
विदिक्संस्थानि सूत्राणि समान्येव हि वृत्ततः ॥७॥
यथेष्टं बहिरानीय निखनेत्तत्र कीलकान् ।
बद्धं चतुर्णां कीलानां मस्तके दृढसूत्रकम् ॥८॥
समकर्णं दिगङ्कं तच्छुद्धं स्याच्चतुरस्रकम् ।
गणेशं पूजयित्वाऽऽदौ पुण्याहं वाचयेत् सुधीः ॥९॥
ततः पञ्चनिनादैश्च मण्डपं रचयेच्छुभम् ।
मण्डपं कुलदीक्षायां कुर्याद्विंशतिहस्तकम् ॥१०॥
मद्यमांसं पुरन्ध्रीणां समावेशो यथा भवेत् ।
मण्डपोऽष्टादशकरः सिद्धान्ते वाममार्गके ॥११॥

---

[1] वशं युक्ता - इति ख.मा.पा. ।

अल्पत्वात्तत्र कुण्डानामधिकेऽपि सपञ्चके ।
वैदिक्यबहुसामग्र्यां नवकुण्डे तु षोडश ॥१२॥
कुण्डाल्पतायां सामग्र्यामल्पायां [1] चेन्द्रहस्तकः ।
दक्षिणे बहुसामग्र्यां सूर्यहस्तस्तु मण्डपः ॥१३॥
अल्पायां दशहस्तः स्यान्नवहस्तः सदा विशाम् ।
शूद्राणां सप्तहस्तः स्यात् संकराणां तु पञ्च च ॥१४॥
प्रोक्तं मानं मण्डपानां सर्वतन्त्रेषु गोपितम् ॥
प्रोक्ता नानाविधा हस्तास्तन्निर्णयमथ शृणु ॥१५॥
यस्मिन् देशे च काले च समुत्पन्ना यथा यवाः ।
तेषामष्टोदराणां स्यादङ्गुलं तु द्विजन्मनाम् ॥१६॥
समोदरैस्तु शूद्राणां संकरादौ तथा रसैः ।
अवैदिकस्य विप्रादेरेतत्संख्याकशालिभिः ॥१७॥
यत्र कर्ता स्वयं तत्र मानमेतदतोऽन्यथा ।
आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यमम् ॥१८॥
पर्वणोरन्तरं दीर्घमात्राङ्गुलमुदाहृतम् ।
उच्छ्रायः प्रतिमायाश्च प्रासादादेस्तु निर्मितिः ॥१९॥
वेदिका पीठशिविका [2] रथो ह्येतत्प्रमाणतः ।
विनाङ्गुष्ठेन शेषाभिर्मुष्टिरङ्गुलिभिः कृतः ॥२०॥
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलं तु तत् ।
होमाङ्गानि स्रुवादीनि कुण्डस्थण्डिलवेदिका ॥२१॥
यज्ञोपवीतं मौञ्जाद्यं कुर्यान्मुष्ट्यङ्गुलेन तु ।
यं कञ्चित्पौरुषायामं विभज्य दशधा पुनः ॥२२॥
एवं द्वादशभागं तु कृत्वा तेष्वेकमङ्गुलम् ।
देहलब्धाङ्गुलं नाम जानीयात्तस्य तत्पुनः ॥२३॥

---

१ चन्द्रहस्तकः - इति ख.मा.पा. ।
२ रथश्चैतत् - इति ख.मा.पा. ।

एभिश्चतुर्विंशतिभिर्हस्तः स्यादङ्गुलैः पुनः ।
अनेन प्रतिमाङ्गानि शतमुन्मानमेव च ॥२४॥
नराणां चापि नारीणां कुर्याद् गोप्यं प्रकाशितम् ।
चतुर्दशकरं कोटिहोमे संपत्तिसंयुते ॥२५॥
अन्यथा द्वादशकरं लक्षहोमे तु दिक्करम् ।
मण्डपं नवधा कृत्वा मध्यभागेऽस्य वेदिका ॥२६॥
स्तम्भास्तु वेदिकाकोणे मण्डपार्धस्थिता [1] बहिः ।
पञ्चमांशं न्यसेद् भूमौ पुष्टताशांशसूत्रतः ॥२७॥
मस्तके कलशाकारं तद्दशांशेन कारयेत् ।
स्वायामोच्चा भवेद् वेदी नवकाष्ठोत्थसन्धिषु ॥२८॥
मण्डपस्य तृतीयांशदीर्घान् स्तम्भान्सुविन्यसेत् ।
द्वादशैवं तु पञ्चांशो भूमौ कूटं दशांशतः ॥२९॥
मध्यस्तम्भस्थिरं कूटं मृदङ्गाभं प्रकल्पयेत् ।
बाह्यस्तम्भोर्ध्वतो देया बलयो द्वादशैव हि ॥३०॥
दक्षदीक्षाविधौ पद्मनिभं कूटं तु कारयेत् ।
त्रिधारं वामदीक्षायां शङ्खाभं वैष्णवे मखे ॥३१॥
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ।
तडागादिप्रतिष्ठायां [2] पद्मिनी पत्रसन्निभा ॥३२॥
[3] राज्ञां स्यात्सर्वतोभद्रा चतुर्भद्राभिषेचने ।
विवाहे श्रीधरा वेदी विंशत्यस्रसमन्विता ॥३३॥
[4] वाममार्गेण दीक्षायां गुप्ता त्र्यस्रा तु वेदिका ।
स्तम्भानामुपरि स्थाप्यान्यव्रणानि ऋजूनि च ॥३४॥

---

[1] मण्डपार्धोच्छ्रिता - इति ख.मा. पा. ।
[2] गुप्ता त्र्यस्रा तु वेदिका - इति ख.मा पा. ।
[3] ३३ श्लोकः ख. मा. न प्राप्यते ।
[4] श्लो ३४ (क) ख.मा. न प्राप्यते ।

एकजातीनि काष्ठानि वीथ्यास्तम्भगले न्यसेत् ।
नारिकेलदलैर्वंशकटैराच्छादयेत्पुनः ॥३५॥
झञ्झामारुतवृष्ट्यादिशमनं[1] स्याद्यथा तथा ॥३६॥

पूर्वोक्तसंसाधितदिक्षु कुर्याद्
द्वाराणि चत्वारि तु मण्डपस्य ।
पञ्चांशमाना खलु देहली स्याद्
द्विघ्नोच्छ्रिते तत्र कपाटशाखे ॥३७॥

वाममार्गे द्वारमिदं दक्षिणे श्रेष्ठमण्डपे ।
कुर्याद्देहलिकां रम्यां साष्टाङ्गुलकरद्वयाम् ॥३८॥
मध्यमे मण्डपे कुर्यात्साध्याङ्गुलकरद्वयम् ।
हीने करद्वयं तस्योच्चता तु द्विगुणा मता ॥३९॥
पूर्वद्वाराद् बहिर्हस्तमात्रां त्यक्त्वा भुवं ततः ।
श्रेष्ठमध्यकनिष्ठेषु सप्तषट्पञ्चहस्तकम् ॥३०॥
उच्छ्रितं फलकं कुर्याद्विस्तृतं तद्दशाङ्गुलम् ।
तथा पञ्चाङ्गुलस्थूलं विषमं चतुरस्रकम् ॥४१॥
वितस्त्या चोन्नतशिखं द्वारस्योभयपार्श्वयोः ।
स्थापयेत्फलकौ द्वौ तु श्रेष्ठमध्यकनिष्ठके ॥४२॥
मण्डपे तौ दीर्घतया क्रमात्सार्धकरद्वयम् ।
सपादद्वितयं युग्महस्तं पञ्चांशकं भुवि ॥४३॥
निखनेदग्निमीडेति गायत्र्या पार्श्वयोर्द्वयोः ।
तत्सजातीयकाष्ठेन तावद्विस्तारगर्भकम् ॥४४॥
चतुरस्रं तु विषमं द्वयोरुपरि कीलयेत् ।
दर्भमालां च बध्नीयात्पूर्वद्वारे विधिस्त्वयम् ॥४५॥
एवं तु दक्षिणद्वारे तद्द्वारे[2] प्लक्षकाष्ठजम् ।

---

[1] भयं न स्याद् - इति पाठः साधुः ।
[2] कोष्ठजम् -इति ख.मा.पा. ।

ईषेत्वेति न्यसेन्मालां बन्धयेत्पूर्ववत्तथा ॥४६॥
औदुम्बरमयं कुर्यात्पश्चिमद्वारतस्त्विदम् ।
अग्न आयाहि मन्त्रेण प्लक्षजं वैदिके मखे ॥४७॥
प्राग्वदेवं प्रकुर्वीत वटवृक्षमयं तथा ।
शन्नोदेवीति मन्त्रेण सौम्य-दिग्द्वारतो न्यसेत् ॥४८॥
तेषामुपरि तिर्यक्स्थकाष्ठानां मध्यतो विलम् ।
कृत्वा तोरणजातीयकाष्ठेन रचयेच्छुभम् ॥४९॥
श्रेष्ठमध्यजघन्येषु शैवयागे त्रिशूलकम् ।
विघ्नेशे गोङ्गुलं दीर्घं तच्चतुर्थांशविस्तृतम् ॥५०॥
वैष्णवे द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।
युगादिक्रमयोगेन न्यसेत्सौरोऽपि वैष्णवः ॥५१॥
ऋजु वै मध्यमं शृङ्गं किञ्चिद् वक्रं तु पार्श्वयोः ।
एवंभूतो गणपतिः शिवाद्याः शिववन्मताः ॥५२॥
ततस्तु मण्डपस्याग्रे भूम्यूर्ध्वं दशहस्तकः ।
भूमौ करद्वयं वंशः स्वच्छवस्त्रावगुण्ठितः ॥५३॥
विस्तृतश्चैकहस्तेन दीर्घः पञ्चकरैर्ध्वजः ।
मन्त्रदेवं लिखेत्तत्र सायुधं च सवाहनम् ॥५४॥
घण्टाचामरसंयुक्तं देवतावर्णवर्णकम्[1] ।
स्थापयित्वा ध्वजं पश्चाद्दशदिक्षु प्रकल्पयेत् ॥५५॥
दिगीशानां पताकाश्च ध्वजस्यार्धप्रमाणतः ।
वेदोक्ततत्तन्मन्त्रेण तत्तद्वर्णाश्च तद्दिशि ॥५६॥
त्रातारमिन्द्रमिति च पीतवर्णा हरेर्दिशि ।
आग्नेय्यां पिङ्गला त्वन्नो अग्नेर्वरुणमन्त्रतः ॥५७॥
सुगं नः पन्था मनुना कृष्णवर्णा त्वया स्मृता ।

---

[1] देवतावर्णकर्णकम् -इति ख.मा.पा. ।

असुन्वन्तेऽति मनुना नैर्ऋत्यां धूम्रवर्णिका ॥५८॥
तत्त्वायामि वरुणेति वारुण्यां सितवर्णिका ।
आनोनियुद्भिरिति च वायव्यां हरिता भवेत् ॥५९॥
[1] वयं सोमव्रत इति सौम्यानां चन्द्रवर्णिका ।
तमीशानमितीशान्यामतिश्वेता पताकिका ॥६०॥
ईशानपूर्वयोर्मध्ये शेषं रक्तपताकिनम् ।
तोयनैर्ऋत्यमध्ये तु विधिं रक्तपताकिनम् ॥६१॥
वाममार्गे वेदमन्त्रो वज्रपातसमः स्मृतः ।
ब्राह्मणानां वाममार्गो नरकायैव जायते ॥६२॥
मन्त्राभावे नाममन्त्रान्प्रणवाद्यान्हृदन्तकान् ।
पक्षे दक्षिणमार्गे तु वामे प्रणववर्जितान् ॥६३॥
मण्डपोपरि बध्नीयादतिश्वेतं वितानकम् ।
अलङ्कुर्यात्पुष्पमालादिभिरेनं तु वेष्टयेत् ॥६४॥
आम्राश्वत्थदलोत्पन्ना युक्तया दीर्घमालया ।
स्तम्भान्दुकूलैः संवेष्ट्य मध्ये कुर्याच्च वेदिकाम् ॥६५॥
इष्टिकाभिरपक्वाभिर्हस्तविस्तृतपिण्डकाम् ।
मण्डपायामरुद्रांश नवसप्तेषुरामकैः ॥६६॥
अंशैः समुन्नतां वाऽपि मानमस्य विलोक्य च ।
सामग्र्यादेः समावेशो यथा स्यादिति मण्डपः ॥६७॥
अयुताहुतिहोमस्तु विधेयः स्थण्डिलोपरि ।
एकहस्तमितं कुण्डं दशलक्षावधि स्मृतम् ॥६८॥
लक्षाणां दशकेनैकं हस्तहस्तं विवर्धयेत् ।
दशहस्तं कोटिहोमे वैदिकानामितीरितम् ॥६९॥
मद्यमांसादिहोमस्तु कुण्ड एव विधीयते ।

---

[1] हरेर्दिशि - इति ख.मा.पा. ।

पञ्चाशत्प्रमिते होमे प्रकोष्ठकृतमुष्टिकम् ॥७०॥
कुण्डस्य मानं भवति शते रत्निसमं भवेत् ।
सहस्रे हस्तमात्रं स्याद्द्विहस्तमयुते मतम् ॥७१॥
चतुर्हस्तमितं लक्षे षट्करं दशलक्षके ।
कोटिहोमे चाष्टहस्तं कुण्डं वामैर्विधीयते ॥७२॥
एककुण्डविधाने तु चतुरस्रं विधीयते ।
ब्राह्मणानां विशेषेण स्तम्भने चापि पूर्वगम् ॥७३॥
नवकुण्डविधाने तु वह्निभागे भगाकृतिः ।
भोगार्थं वापि पुत्रार्थं वामिनां चतुरस्रवत् ॥७४॥
अर्धचन्द्रनिभं याम्ये वैश्यानां सर्वकर्मणि ।
अन्येषां मारणे प्रोक्तं चतुष्कुण्डे तथेष्यते ॥७५॥
त्रिकोणकुण्डं नैर्ऋत्ये रिपुघातकरं स्मृतम् ।
विद्वेषकारकं चैतच्छूद्राणां च विशिष्यते ॥७६॥
वृत्तं [1] मुख्यं क्षत्रियाणां सर्वेषां शान्तिकर्मणि ।
पश्चिमायां तु तत्कार्यं [2] बौद्धादीनां च सिद्धिदम् ॥७७॥
षट्कोणमुच्चाटयति छेदेषु च विशिष्यते ।
वायव्यां कारयेत्तच्च सङ्कराणां विशेषतः ॥७८॥
उदीच्यां पौष्टिके पद्मं वृष्टिदं तुष्टिदं तथा ।
[3] सर्वप्रयोगेष्वनयोः परं प्रीतिकरं मतम् ॥७९॥

अष्टकोणं मुक्तिकरमैशान्यां तद्विधीयते ।
कारागृहात्तथा रोगाच्चिन्तादेर्मोक्षमाप्नुयात् [4] ॥८०॥

अष्टकुण्डविधाने तु क्रमोऽयं नवकुण्डके ।
नवमं चतुरस्रं स्यात्पूर्वेशानदिगन्तरम् ॥८१॥

---

[1] मुखम् - इति ख.मा.पा. ।
[2] सिद्धादीनाम् - इति ख.मा.पा. ।
[3] अनया - इति ख.मा.पा. ।
[4] दिकन्तरे - इति ख.मा.पा ।

विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेत्।
समकुण्डविधाने तु न खातो वेदिके वहिः ॥८२॥
अन्यदेकं पञ्चकोणमभिचारविनाशनम्।
तथान्यत्सप्तकोणं च कुण्डं भूतनिकृन्तने ॥८३॥
अथादौ चतुरस्रस्य कुण्डस्य विधिरुच्यते।
नाभियोनिसमायुक्तं श्रेष्ठं कुण्डं त्रिमेखलम् ॥८४॥
विमेखलं तु शूद्राणां सङ्कराणां कुमेखलम्।
यावत्कुण्डस्य विस्तारः खननं तावदेव हि ॥८५॥
यावत्कुण्डमिहेष्टं स्यात्तावद् दिक्साधने कृते।
चतुरस्रं समं कुर्यात् समकर्णं च शिल्पवित् ॥८६॥
एकहस्तस्य यः कर्णो भुजास्ते तु करद्वयम्।
द्विहस्तस्य तु कर्णः स्यात्त्रिहस्तभुजसंमितिः ॥८७॥
चतुर्हस्तादिकेऽप्येवं कण्ठः सर्वत्र भूसमः।
जिनभागसमास्तस्य बहिःकार्यास्तु मेखलाः ॥८८॥
द्वादशाङ्गुलविस्ताराद्युत्सेधाच्चतुरङ्गुला।
तदूर्ध्वमपरा दीर्घाष्टाङ्गुला तावदुच्चता ॥८९॥
चतुर्भिरङ्गुलैर्दीर्घा तावदुच्चा तदूर्ध्वतः।
दैर्घ्यात्सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु ॥९०॥
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा।
कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ॥९१॥
अङ्गुष्ठमेखलायुक्ता मध्ये वाज्यधृतिक्षमा।
योन्यास्तु पश्चिमे भागे मेखलात्रितयाद्बहिः ॥९२॥
चतुरस्रं भवेत्पीठं कुण्डं षष्ठांशविस्तृतम्।
तावद्दीर्घं तथोच्चं च नालं तन्मध्यतो नयेत् ॥९३॥
योनिमध्येऽथ तद्वृत्तं कुण्डषष्ठांशमानतः।
प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी ॥९४॥

शेषाः पूर्वमुखा योनिः कुण्डे योनिञ्च वर्जयेत् ।
कुण्डमध्यस्थकेन्द्रात्तु कुर्यात्कर्कटकेन तु ॥९५॥
प्रसारितेन व्यासार्कभागतुल्येन तत्परम् ।
षष्ठांशेन तु वृत्तं स्यात्पूर्ववृत्तं तु कर्णिके[1] ॥९६॥
कर्णिकाग्रे बाह्यवृत्ताभ्यान्तरेऽष्टदलानि तु ।
एवं षडङ्गुलोच्चः स्यान्नाभिर्वेदास्रमीरितम् ॥९७॥
इष्टस्य चतुरस्रस्य जिनांशो भाग उच्यते ।
सपादैः पञ्चभिर्भागैर्मध्यसूत्रं विवर्धयेत् ॥९८॥
प्राच्यामथ प्रकुर्याच्च चतुर्धा चतुरस्रकम् ।
मध्यतो भ्रामयेत्कर्कोटकं पश्चिमसंस्थयोः ॥९९॥
अर्धचापाकृतिं रुद्रवह्निनर्दिश्योस्तदग्रतः ।
चिह्नान्तं पातयेत्सूत्रं द्वयोरपि तदा भवेत् ॥१००॥
अश्वत्थदलसंकाशं योनिकुण्डमुदङ्मुखम् ।
प्राङ्मानाश्चात्र कर्तव्या योनिरूपाः सुमेखलाः ॥१०१॥
चतुरस्रीकृतं क्षेत्रं दशधा विभजेद् बुधः ।
एकमेकं त्यजेदंशमध उर्ध्वं च तन्त्रवित् ॥१०२॥
ज्यासूत्रं पातयेदग्रे तन्मानाद् भ्रामयेत्ततः ।
अर्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत् ॥१०३॥
अत्र तद्याम्यपृष्ठं स्यादेकं तन्मारणाय च ।
सौम्यपृष्ठं ततोऽन्यत्र योनिः पश्चिमदिग्गता ॥१०४॥
अग्रं प्राक्त्रिभुजे कार्यं लम्बास्तुल्यास्त्रयोऽपिच ।
सान्तरं पूर्वतन्त्रेषु प्रोक्तं यत्र निरन्तरम् ॥१०५॥
एकहस्ते तु हस्ताद्या भुजाभूद्वादशाब्धयः ।
[2] द्विहस्ते द्वौ त्रयं पञ्च त्रिहस्ते चार्कभूमयः ॥१०६॥

---

[1] कर्णिका - इति ग.मा.पा. ।
[2] विहस्त - इति ख.मा.पा. ।

चतुर्हस्ते त्रयं चन्द्रः पञ्चहस्ते त्रिगोशराः ।
षड्हस्ते त्र्यब्दरामाश्च नगे ह्याकृतिसागराः ॥१०७॥
अष्टहस्ते कृतागक्ष्मा देवविश्वाग्नयोर्गवि ।
वेदाति १ युग्मानि दशहस्तभुजा इमे ॥१०८॥
व्यासार्धं चतुरस्रस्य स्वस्याष्टादशभागयुक् ।
तावत्कर्कोटकाद्वृत्तं वृत्तकुण्डमिहोच्यते ॥१०९॥
रचयेच्चतुरस्रस्य व्यासार्धं नृपभागयुक् ।
तावत्कर्कटकेनापि कुर्याद् वृत्तं मनोहरम् ॥११०॥
तेन कर्कटमानेव चिह्नषट्कं च पूर्ववत् ।
कृत्वा तत्र भुजान्दत्त्वा कुण्डमेवं षडस्रवत् ॥१११॥
इष्टस्य चतुरस्रस्य चतुर्विंशाङ्ककल्पनाम् ।
कृत्वा तन्मध्यतः सूर्यभागकर्कोटकेन च ॥११२॥
वृत्तं कुर्यात्पुनः सार्धं तिथिभागैर्द्वितीयकम् ।
दिग्विदिक्चान्तरांले च सूत्राण्यष्टौ प्रपातयेत् ॥११३॥
ततोन्तर्वृत्तरेखाया ईशसूत्राग्रसूत्रकः ।
रेखां नयेद्वाह्यवृत्ते पूर्वसूत्रस्य मूर्धनि ॥११४॥
ततो दक्षिणरेखायामन्तर्वृत्तस्य मूर्धनि ।
तामानयेद्दलं तत्स्यादेवमष्टदलानि च ॥११५॥
अंशव्यासार्धकेनापि यद्वृत्तं सा तु कर्णिका ।
ततः षडंशव्यासार्धवृत्ते तत्केसराणि च ॥११६॥
व्यासषष्ठांशमानोच्चकर्णिकाकेसराणि च ।
गुरूक्तयुक्त्या निखनेद्यथा पद्माकृतिर्भवेत् ॥११७॥
पद्माकृतिं प्रकुर्वीत कण्ठं मेखलया सह ।
कार्यं तथा वालुकाभिश्चतुरस्रसमं यथा ॥११८॥

---

[1] वेदातिधृतियुग्मानि - इति ख.मा.पा. ।

अथेष्टचतुरस्रस्य व्यासः स्वद्वादशांशयुक् ।
तेनैव भ्रामयेद्वृत्तं चिह्नान्यत्र दिगष्टके ॥११९॥
क्रमान्न्यसेत्तदुपरि भुजान्दद्यात्समानिति ।
अष्टास्रं जायते कुण्डं तद्वत्कण्ठश्च मेखला ॥१२०॥
इष्टस्य चतुरस्रस्य व्यासार्धं खनगांशयुक् ।
तद्व्यासार्धेन वृत्तं स्यात्तत्र चिह्नानि पञ्च तु ॥१२१॥
समभागेन देयानि तेषु सूत्राणि दापयेत् ।
ज्यारूपाणि धनुर्लोपाकुण्डं पञ्चास्रकं भवेत् ॥१२२॥
इष्टस्य चतुरस्रस्य व्यासार्धं पञ्चमांशयुक् ।
भ्रामयेत्तेन वृत्तं तु सप्तादात्मांकरा तु तत् ॥१२३॥
ख्यातान्येतानि कुण्डानि तान्त्रिके स्मार्तकर्मणि ।
अराधिकान्यकण्ठानि वियोनीति [1] श्रुतेरिति ॥१२४॥
आचार्यकुण्डनवमं चतुरस्रं तु वैदिके ।
अष्टाशक्तौ तु चत्वारि दिक्षु कुण्डानि तान्त्रिके ॥१२५॥
तदशक्तावेकमेवं चतुरस्रं प्रकल्पयेत् ।
शक्त्या उपासने वामपथ्येकं योनिकुण्डकम् ॥१२६॥
अनेकदोषदं कुण्डं मानं न्यूनाधिकं यदि ।
तस्मात्सर्वं परीक्ष्यैवं कर्तव्यं शुभमिच्छता ॥१२७॥
खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥१२८॥
मेखलारहिते शोकोऽप्यधिके वित्तसंक्षयः ।
भार्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ॥१२९॥
अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितम् ।
शृङ्गाररहितं यच्च कुण्डं जर्जरमेखलम् ॥१३०॥

---

[1] श्रुतीरिते - इति ग.मा.पा. ।

यजमानविनाशाय प्रोच्चाटः स्फुटिते भवेत् ।
सूत्राधिके सुहृद्द्वेषः सूत्रहीने दरिद्रता ॥१३१॥
अनाले जठरे रोगश्छिद्रे कुण्डे त्ववाच्यता ।
यथोक्तकुण्डेऽप्युत्पातादेवं जाते फलं त्विदम् ॥१३२॥
षड्वाणाब्धिर्वह्निनेत्रमिताः स्युः पञ्च मेखलाः ।
धर्मभेदे जातिभेदे चाचार्ययजमानयोः ॥१३३॥
षष्ठांशेनाष्टमांशेन मेखलाद्वितयं मतम् ।
कौलिके वाममार्गे च बौद्धे जैने च शावरे ॥१३४॥
कुण्डानां लक्षणं प्रोक्तं स्रुक्स्रुवालक्षणं ततः ।
प्रकल्पयेत्स्रुवं यागे वक्ष्यमाणेन वर्त्मना ॥१३५॥
कारस्करेणामलकीपलाशखदिरैरपि ।
सुवर्णरौप्यताम्रैर्वा ह्ययोभिरपि कारयेत् ॥१३६॥
स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससीसकौ ।
यज्ञदारुमयौ वापि तान्त्रिकौ शिल्पिसम्मतौ ॥१३७॥
पर्णे वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उच्छ्रिते ।
श्रीपर्णीशिंशपाक्षीरशाखिष्वेकतमं गुरुः ॥१३८॥
गृहीत्वा विभजेद्धस्तमात्रां षट्त्रिंशता पुनः ।
विंशत्यंशैर्भवेद्दण्डो वेदिस्तैरष्टभिर्भवेत् ॥१३९॥
एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ।
वेदित्र्यंशेन विस्तारः कण्ठस्य परिकीर्तितः ॥१४०॥
१ अत्र कण्ठःसमानः स्यान्मुखे मार्गं प्रकल्पयेत् ।
कनिष्ठाङ्गुलमानेन सर्पिषो निर्गमाय च ॥१४१॥
वेदिमध्ये विधातव्या भागेनैकेन कर्णिका ।
विदधीत बहिस्तस्या एकांशेनाभितोऽवटम् ॥१४२॥

---

१ अग्रं कण्ठसमानम् - इति पा. अन्यत्र ।

तस्य खातं त्रिभिर्भागैर्वृत्तमर्धांशतो बहिः ॥
अंशेनैकेन परितो दलानि परिकल्पयेत् ॥१४३॥
मेखला मुखवेद्याः स्यान्नेमिरर्धांशमानतः ।
दण्डशूलाग्रयोः कुम्भो गुणवेदाङ्गुलैः क्रमात् ॥१४४॥
दण्डियुगं यमांशैः स्याद्दण्डस्यानाह ईरितः ।
षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत् ॥१४५॥
हंसस्य हस्तिनो वाऽपि पोत्रिणो वा लिखेन्मुखम् ।
मुखस्य पृष्ठभागे तु सम्प्रोक्तं लक्षणं स्रुचः ॥१४६॥
सौवर्णौ स्रुकस्रुचौ स्यातां सौम्यकर्मणि सर्वतः ।
भवेतामायसावेतौ स्तम्भनादिषु कर्मसु ॥१४७॥
तदलाभे पलाशस्य पर्णाभ्यां हूयते हविः ।
पलाशपत्रे निश्छिद्रे रुचिरे स्रुकस्रुवौ मतौ ॥१४८॥
विदध्याद्वाऽश्वत्थपत्रे संक्षिप्तहोमकर्मणि ।

**अथ स्रुचलक्षणम्**

स्रुवश्चतुर्विंशतिभिर्भागैरारचयेत्स्रुचम् ॥१४९॥
द्वाविंशत्या दण्डमानमंशैरेतस्य कीर्तितम् ।
चतुर्भिरंशैरानाहः कर्षाज्यग्राहि तच्छिरः ॥१५०॥
अंशद्वयेन निखनेत्पङ्क्तैर्मृगपदाकृतिः ।
दण्डमूलाग्रयोर्गण्डी भवेत् कङ्कणभूषिता ॥१५१॥
१ स्रुवस्य विधिराख्यातः शास्त्रेऽस्मिन् मन्त्रसंज्ञके ।

**इति श्रीतन्त्रचिन्तामणौ मण्डपकुण्डनिर्णयो नाम अष्टमः प्रकाशः ।**

**(मूलमातृकायाः ५ पत्राणि । श्लोकसंख्या १५१$\frac{1}{2}$ ॥ )**

*****

१ स्रुचो हि पा. उचितः ।

# नवमः प्रकाशः

## अङ्कुरार्पणम् -

प्रतिष्ठायां च दीक्षायां स्नापने चोत्सवे तथा ।
सम्प्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिवन्धने ॥१॥
सर्वमङ्गलकार्येषु कारयेदङ्कुरार्पणम् ।
प्रतिष्ठादिवसात्पूर्वं नवमे सप्तमे दिने ॥२॥
पञ्चमे वा तृतीये वा सद्यो वा चाङ्कुरार्पणम् ।
पुण्याहघोषणां कृत्वा व्राह्मणैः सह देशिकः ॥३॥
वीजारोपणकर्मेदं कर्तव्यं सर्वकामदम् ।
मण्डपोत्तरदिग्भागे शालां पूर्वापरायताम् ॥४॥
तन्मध्ये मण्डपं कुर्याद्दक्षप्राग्वरुणायतम् ।
याम्योदीच्यायतं वामदीक्षायां सम्प्रशस्यते ॥५॥
गोमयेनोपलिप्तायां भूमौ दक्षे च वामके ।
सतैलतण्डुलेनैव सतैलविजयाद्रवैः ॥६॥
तत्र रेखाः पञ्चकरदीर्घाः कार्यास्तु पञ्च च ।
वितस्त्यन्तरिता रुद्ररेखा कार्यास्तथाऽऽयताः ॥७॥
चत्वारिंशत्कोष्ठकाः स्युश्चतुर्विंशतिकोष्ठकैः ।
व्राह्मणैस्तत्र वीथी स्यात्पूरयेद्रक्तचूर्णकैः ॥८॥
पश्चात्कोष्ठचतुष्कं च व्रह्मस्थानं तदीरितम् ।
आग्नेयकोष्ठमारभ्य [1] ईशानान्तं प्रपूरयेत् ॥९॥
पीतरक्तश्वेतकृष्णरजोभिः सृष्टिमार्गतः ।
कोष्ठद्वयं ततो वीथीं रक्तेनैव प्रपूरयेत् ॥१०॥

---

[1] ईशानान्तम् - इति पाठः समुचितः ।

विष्णुस्थानं तदग्रे तु ज्ञेयं कोष्ठचतुष्टयम् ।
प्राग्वद्रजोभिरापूर्यं तदग्रेऽपि च वीथिका: ॥११॥
प्रोक्तं कोष्ठचतुष्कं यद्रुद्रस्थानं तदीरितम् ।
तत्पूर्यं पूर्ववद्रङ्गैरारक्तै: सर्वरेखिका: ॥१२॥
विस्तारान्नतिर्दैर्घ्येण हस्तमात्रास्तु पालिका: ।
कार्या डमरुकाकाराश्चतस्रो विष्णुदेवता: ॥१३॥
दूर्वाम्रपल्लवाश्वत्थदलोपेताश्च वेष्टिता: ।
सूत्रेण विष्णुस्थानस्य चतुष्कोष्ठे निवेशयेत् ॥१४॥
वैरच्य: पञ्च मुख्यास्ता: काष्ठजा: षोडशाङ्गुलै: ।
आयोमोच्छ्रायदैर्घ्याख्यैर्युक्ता: पश्चान्निवेशयेत् ॥१५॥
ब्रह्मस्थाने पल्लवादिसूत्रै: प्रागवच्च योजिता: ।
पात्राणि विविधान्याहुरङ्कुरार्पणकर्मणि ॥१६॥
पालिका: पञ्चमुख्यश्च शरावाश्च चतु: क्रमात् ।
प्रोक्ता: स्यु: सर्वतत्त्वज्ञैर्हरिब्रह्मशिवात्मिका: ॥१७॥
एषामुच्छ्रायमुन्नेयषोडशद्वादशाष्टभि: ।
अङ्गुलै: क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना ॥१८॥
प्रक्षाल्य देशिकस्तेषु [1] प्रदेष्याहितशालिषु ।
सुगन्धिदार्भपुष्पेषु पश्चिमादि निवेशयेत् ॥१९॥
पालिकावक्त्रविस्तार: षोडशाङ्गुल उच्यते ।
भवेत्कण्ठविलम्बा स्यात्तदष्टाङ्गुलविस्तृतम् ॥२०॥
पदे पीठस्य विस्तारं षडङ्गुलमुदाहृतम् ।
चतुरङ्गुल उत्सेधस्तत्सन्धिश्चाङ्गुलं भवेत् ॥२१॥
तत्सन्धेस्तु भवेन्नाभं पदे पीठार्धमेव च ।
भवेत्पञ्चमुखी चैव घटिका सर्वकामदा ॥२२॥

---

[1] पदेष्वाहितशालिषु - इति ख.मा.पा. ।

चतुरङ्गुलविस्ताराप्याहुर्वक्त्राणि पञ्च वै ।
चत्वारि च चतुर्दिक्षु [1] ऊर्ध्वमेकं यथाविधि ॥२३॥
घटिकायामविस्तारो द्वादशाङ्गुल उच्यते ।
आचार्याः कथयन्त्येके षोडाशाङ्गुलमेव च ॥२४॥
द्वादशाङ्गुलविस्तारं शरावस्य मुखं स्मृतम् ।
चतुरङ्गुलविस्तारमधस्तान्मूलमुच्यते ॥२५॥
संभवे कनकरूप्यताम्रतो मार्तिकान्यपि ।
शैवाः शरावाश्चत्वारो तेषु [2] पात्राणि विन्यसेत् ॥२६॥
वह्न्यादीशानपर्यन्तं चतुष्केषु पृथक् पृथक् ।
प्रोक्तेषु तेषु पात्रेषु ब्रह्म-विष्णु-शिवान् यजेत् ॥२७॥
संपूजयेच्छरावेषु रुद्रं चन्दनपुष्पकैः ।
पालिकासु तथा विष्णुं ब्रह्माणं घटिकासु च ॥२८॥
मृद्वालुकाकरीषैश्चोर्ध्वतः पात्राणि पूरयेत् ।
गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ॥२९॥
गुर्वादयो रथारूढा गजारूढास्तथा परे ॥३०॥
गत्वा तीरं तडागस्य नद्याः पुष्पं वनस्य वा ।
तत्र शुद्धैर्भुवो भागं दर्भैः समृज्य चास्त्रतः ॥३१॥
अभ्युक्ष्य [3] चार्धतोयेन तत्तन्मन्त्रमनुस्मरेत् ।
हृदा भूमिं समावाह्य गन्धपुष्पैः समर्चयेत् ॥३२॥
कुद्दालीमस्त्रमन्त्रेण [4] खात्वा भूमिमथो मृदम् ।
गृहीत्वा वामदेवेन पूरयेत्कांस्यपात्रके ॥३३॥

---

[1] त्यूर्ध्वमेकम् - इति पा. साधु ।
[2] मात्राणि - इति ख.मा.पा. ।
[3] चार्घ्यतोयेन - इति पा. साधु ।
[4] खत्वा - इति ख.मा.पा. ।

हृदा मृदं च [1] संमृज्य वस्त्रेणाच्छाद्य धारयेत् ।
पुरं वा निलयं वापि सर्वमङ्गलनिस्वनैः ॥३४॥
गुरुः प्रदक्षिणं कृत्वा मण्डपं त्वानयेत्ततः ।
एतत्कर्म दिवा काले कुर्याद्रात्रौ न बुद्धिमान् ॥३५॥
ततः स्वर्णादिके पात्रे दश बीजानि वापयेत् ।
वँ बीजं प्रजपन्मन्त्री दुग्धेन क्षालयेत्ततः ॥३६॥
तानि प्रियङ्गुश्यामाकतिलसर्षपशालयः ।
मुद्गाढकी सुरिष्पावा खल्या [2] माषाः प्रकीर्तिताः ॥३७॥
मूलमन्त्राभिजातानि पञ्चघोषपुरःसरम् ।
आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम् ॥३८॥
निर्वपेत्तेषु पात्रेषु देशिको यतमानसः ।
बीजं मुख्येन मूलेन प्राङ्मुखो वा उदङ्मुखः ॥३९॥
वापयेत्सर्वबीजानि पालिकादिष्वनुक्रमात् ।
बीजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् ॥४०॥
बीजेभ्यो दैवतेभ्यश्च स रात्रौ कान्तिमान् यतः ।
तस्माद् गुरुस्तु बीजानि निशायामेव दापयेत् ॥४१॥
स्कन्दं प्रियङ्गौ निष्पावे वायुमग्निं कुलुत्थके ।
आढक्यां निर्ऋतिं सोमं मुद्गे वैवस्वतं तिले ॥४२॥
प्रजापतिं शालिबीजे त्वनन्तं सर्षपेऽर्चयेत् ।
इन्द्रं श्यामे तु माषे च वरुणं तु [3] नगात्मजे ॥४३॥
सोमं संपूजयेन्नित्यमधिवासदिनावधि ।
अधिवासदिने प्राप्ते सोममुद्वासयेद् गुरुः ॥४४॥

---

[1] संसृज्य - इतिमा .ख. मा.पा. ।
[2] योपाः - इति ख.मा.पा. ।
[3] नगात्मके - इति ख.मा.पा. ।

त्र्यम्बकाय च शर्वाय शङ्कराय शिवाय च ।
सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥४५॥
विकीर्यानेन मन्त्रेण हरिद्राचूर्णमिश्रितम् ।
तोयं प्रवर्षयेत्तेषु सिञ्चेत्तोयैर्दिनं प्रति ॥४६॥
हरिद्राभिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः ।
वलिं त्रिविधपात्राणां दिक्षु पूर्वादितः क्षिपेत् ॥४७॥
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ।
भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः ॥४८॥
गुरूपदिष्टमार्गेण सम्यक् पात्रत्रयागतः ।
नवाहं तु बलिं दद्यात् तत्तदुद्दिश्य दैवतम् ॥४९॥
सन्ध्ययोरुभयोरर्धरात्रौ चापि बलिं हरेत् ।
शाल्योदनं तिला लाजाः सक्तवः प्रथमे दिने ॥५०॥
हरिद्राचूर्णसंयुक्तो भूतेभ्योऽयं बलिर्मतः ।
एवं द्वितीयदिवसे पितृभ्यस्तिलतण्डुलैः ॥५१॥
तृतीये सक्तवो लाजा यक्षेभ्यो दधिसंयुताः ।
नागेभ्यः सक्तवस्तूर्ये नारिकेलजलप्लुताः ॥५२॥
[1]दद्यात्पुष्पाक्षतवलिं पञ्चमे ब्रह्मणे मुदा ।
षष्ठे शिवाय चापूपयुक्तं भक्तं प्रशस्यते ॥५३॥
गुडौदनं सप्तमेऽह्नि विष्णवे विनिवेदयेत् ।
विष्णोरिव चाष्टदिने दध्योदनबलिः स्मृतः ॥५४॥
कृशरान्नं तु नवमे विष्णोरेव प्रशस्यते ।
वाममार्गे चतुर्दिक्षु मण्डलस्य बलिं चरेत् ॥५५॥
ब्रह्मस्थाने तु वेतालो मेषस्तस्य बलिः सुरा ।
विष्णुस्थाने भैरवी स्यादजस्तस्या बलिर्मतः ॥५६॥

---

[1] दद्याच्च प्राक्षतबलिम् - इति ख.मा.पा. ।

भैरवस्तु शिवस्थाने माहिषं बलिमिच्छति ।
गौडी माध्वी च पैष्टी च सुरास्तत्र क्रमान्मता: ॥५७॥
मत्स्यमांसं मद्ययुक्तं भूतेभ्यो बलिरिष्यते ।
पितृभ्य: सासवपलं यक्षेभ्य: कुक्कुटो मधु ॥५८॥
भेकोन्दुरुबलिर्नागे वाममार्गे बलिस्त्वयम् ।
एवं गतेषु नवसु दिवसेषु विलोकयेत् ॥५९॥
प्ररूढाण्यङ्कुराण्यन्यो न वीक्षेत कदाचन ।
आचार्य एव प्रविशेत्तच्छिष्यो वा तदाज्ञया ॥६०॥
यजमानाभिवृद्ध्यर्थमङ्कुराणि परीक्षयेत् ।
सम्यक्तस्योद्गमो जात: कि. नष्टं मध्यमं च किम् ॥६१॥
सम्पदत्युद्गमे सिद्धि: कुण्ठिते विघ्नमाप्नुयात् ।
कीटभुक्तेऽन्यस्य फलं त्रुटिते सर्वनाशनम् ॥६२॥
धूम्रवर्णान्यपूर्णानि तथा तिर्यग्गतानि च ।
श्यामलानि च कुब्जानि वर्जयेदशुभानि च ॥६३॥
अवृष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा ।
अपूर्णं जननाशं च दुर्भिक्षं श्यामलाङ्कुरम् ॥६४॥
तिर्थग्जाते भवेद्व्याधि: कुब्जे शत्रुभयं भवेत् ।
अशुभे चाङ्कुरे जाते शान्तिहोमं समाचरेत् ॥६५॥
मूलमन्त्रेण जुहुयाद् गुरुमूर्तिधनै:[1] सह: ।
अघोरास्त्रेण वस्त्रेण शतं वाथ सहस्रकम् ॥६६॥
सम्यक् पूर्वं प्ररूढानि कोमलानि सितानि च ।
सिद्धि: प्रियङ्गुभिर्ज्ञेया श्यामाकै: स्त्रीसुखं भवेत् ॥६७॥
तिलै: पूज्यजनोल्लास: सर्षपैर्नाभिचारक: ।
शालिभि: सर्वमान्यत्वं मुद्गे देवकृपा भवेत् ॥६८॥

[1] धरै: सह. - इति ग.मा.पा ।
२ मुद्गे - इति ख.मा.पा ।

चतु: पादास्तथाऽऽढक्यां निष्पावा क्षेत्रमन्दिरे ।
खल्वै: सत्कर्मसिद्धिश्च माषै: शान्तिररं भवेत् ॥६९॥
सर्वै: समुद्गतैर्वामे सिद्धिपातस्त्वतोऽन्यथा ।

इति तन्त्रचिन्तामणौ अङ्कुरार्पणनिर्णयो नाम
नवम: प्रकाश: ।
(मूलमातृकाया: ३ । श्लोकसंख्या ६९$\frac{१}{२}$ । )

*****

# दशमः प्रकाशः

अथ दीक्षाविधिं वक्ष्ये मन्त्रिणां हितकाम्यया ।
विना तया न लभ्येत सर्वमन्त्रफलं यतः ॥१॥
चतुर्विधा समुद्दिष्टा क्रियावत्यादिभेदतः ।
क्रियावती वर्णमयी कलात्मा[1] वेधमय्यपि ॥२॥
तत्र क्रियावती दीक्षा [2] बहुत्वात्तन्निगद्यते ।
दीक्षादानात्पूर्वदिने प्रातःकृत्यं निवर्त्य च ॥३॥
समलङ्कृत्य देहं स्वं स्वगृहे पूजनं चरेत् ।
गणेशस्थ विधानेन पुण्याहं वाचयेत्ततः ॥४॥
नान्दीमुखाँस्तर्पयित्वा [3] पञ्चवादे पुरःसरम् ।
यथोक्तकृतसम्भारो गच्छेद् गुरुगृहं प्रति ॥५॥
आचार्यऋत्विग्वरणसम्भारो दशधा मतः ।
श्रीपर्णीवृक्षपीठानि हस्तमानानि मानतः ॥६॥
अष्टाङ्गुलसमुच्छ्रायसहितानि समानि च ।
सप्तविंशतिदर्भाणां[4] वेल्यग्रे ग्रन्थभूषिताः ॥७॥
विष्टराःसर्वयज्ञेषु लक्षणं परिकीर्तितम् ।
सुखोष्ठोदकसम्भूताः पाद्यार्थे ताम्रगण्डुकाः ॥८॥
शंखा अर्घ्यप्रदानाय गन्धपुष्पा जलान्विताः[5] ।
सुताम्रस्य कमण्डल्वा आचम्योदकपूरिताः ॥९॥

---

[1] वेदमय्यपि - इति ख.मा.पा ।
[2] न निगद्यते - इति ख.मा पा. ।
[3] पञ्चवाद्य - इति ख.मा.पा. ।
[4] वेण्यग्रम् - इति ख.मा.पा । अत्र वेण्यग्रे ग्रन्थिभूषिता इति पाठः समुचितः ।
[5] गन्धपुष्पाञ्जलान्विताः - इति पाठः साधुः ।

तैर्युक्ता मधुपर्कार्थं कांस्या दध्यादिपूरिताः ।
महदर्घ्याणि वस्त्राणि मुद्रिकाद्यं सुभूषणम् ॥१०॥
मयूरपत्रच्छत्राणि चोष्णीषाणि समाहरेत् ।
पादुकाञ्चाहरेत्तत्र चर्माभरणभूषिताः ॥११॥
कृत्वैतत्फलमाप्नोति महायज्ञार्हणोपम् ।
अन्येभ्यो मधुपर्कस्य विप्रेभ्यः पूजनं स्मृतम् ॥१२॥
भक्त्या तद्द्विगुणं दद्यादाचार्याय सुभक्तिमान् ।
अन्यैर्द्विजैः समं यत्र[1] देशिकस्य प्रपूजनम् ॥१३॥
तस्मिन्यज्ञे फलं स्वल्पमनावृष्टौ यथा क्षितौ ।
एवं गुरुगृहं गत्वा प्रणम्य गुरुपादुकाम् ॥१४॥
दत्त्वा वरणसामग्रीं सङ्कल्प्य वृणुयाद् गुरुम् ।
उच्चार्यामुकमन्त्रस्य ग्रहणाय द्विजोत्तम ॥१५॥
गुरुत्वेनेति सम्भाष्य त्वामहं च ततो वृणे ।
इत्युक्त्वा वृणुयाच्छिष्यो वृतोऽस्मीति ततो गुरुः ॥१६॥
यथोचितं गुरोः कर्म कुरुष्वेति वदेच्छिशुः ।
करवाणीति चोच्चार्य गुरोरेवाह्वयेत्ततः ॥१७॥
ब्राह्मणान् वृणुयादष्टौ वेदवेदाङ्गपारगान् ।
तद्देवतोपासकाँश्च ऋत्विक्त्वेनाथवा यदा ॥१८॥
चत्वारि कुण्डानि तदा[2] चत्वार ऋत्विजः स्मृताः ।
ततः शिष्येण सहितो यायाद्यागगृहं गुरुः ॥१९॥
उपविश्य च तद्द्वारे परीक्षामारभेत्ततः ।
गुरुः स्वयं दन्तकाष्ठं क्षीरवृक्षादिसम्भवम् ॥२०॥
अथवा चूतवृक्षस्य द्वादशाङ्गुलमानतः ।
शिष्याय मूलसञ्जातं प्रदद्याद्दन्तधावनम् ॥२१॥

---

[1] गुरोरेवाज्ञया - इति पाठः समुचितः ।
[2] चत्वारः - इति पाठः साधुः ।

दन्तान्विशोध्य पुरतः स्थण्डिले हस्तमात्रके ।
[1] चतुरस्रेऽभ्याजयेत्तं परीक्षेत ततो गुरुः ॥२२॥
तदग्रं यद्दिशा संस्थं तत्रेदं पूर्वतः फलम् ।
मूर्तिर्हृदयसन्तापो बन्धुनाशस्तथा मृतिः ॥२३॥
शोकश्च व्यग्रता सौख्यं ज्ञानलाभः क्रमात् फलम् ।
अमङ्गलस्थानपाते प्रायश्चित्तं समाचरेत् ॥२४॥
अष्टाधिकसहस्रं वा शतं विंशतिरेववा ।
अस्त्रसम्पुटितेनैषां नाम्ना स्वाहान्वितेन च ॥२५॥
दोषान् जहि जहीत्येवं पदं नामावसानकम् ।
केवलाज्येन जुहुयाद् दुःस्वप्ने ऽप्येवमेव हि ॥२६॥
दन्तकाष्ठं पुनर्देयं पुनर्दुष्टे चतुर्गुणम् ।
तृतीयं यदि दुष्टं चेन्न ग्राह्या सा तु देवता ॥२७॥
वाममार्गे सकृदपि गुरुशिष्यौ विनाशयेत् ।

**स्वप्नपरीक्षा -**

ततः स्वप्नपरीक्षाञ्च कुर्यात्तद्विधिरुच्यते ॥२८॥
वैदिकानां दक्षिणानां वैष्णवानां च वामिनाम् ॥२९॥
यज्जाग्रतो दूरमुदैति [2] दैवमातृभ्य मन्त्रान् [3] जपतस्त्रिरेतान् ।
दिवैकभुग्दक्षिणपार्श्वशायी स्वल्पं परीक्षेत यथोपदेशम् ॥३०॥
स्वप्नमानवमाश्रित्य स्वापयेत्पूर्वमस्तकम् ।
गृहस्थान् दर्भशय्यायां पूर्वशीर्षास्त्ररक्षितान् ॥३१॥
हृदा सद्भस्मशय्यायां यतीन् दक्षिणमस्तकान् ।
देवस्य दक्षिणे भागे शिष्ये तमधिवासयेत् ॥३२॥

---

[1] चतुरस्रे पातयेत् - इति पाठः समीचीनः ।
[2] दैवमावृत्य - इति पाठः समुचितः ॥
[3] प्रयता त्रिदेवान् - इति पा मेरौ ।

अहतास्तरणास्तीर्णे सदर्भशयने शुचिः ।
मन्त्रिते च शिवं ध्यायेत् प्राक्शिरस्को निशि स्वपेत् ॥३३ ।
शिखावद्धस्य सूत्रस्य शिखया तच्छिखां गुरुः ।
आवेष्ट्याहतवस्त्रेण तमाच्छाद्य च वर्मणा ॥३४॥
रेखात्रयं च परितो भस्मना तिलसर्षपैः ।
कृत्वास्त्रजप्तैस्तद्‌वाह्ये दिगीशानां वलिं हरेत् ॥३५॥
गुरुपादार्चनं कृत्वा ह्युपवासी जितेन्द्रियः ।
दर्भशय्यां गतो रात्रो दृष्ट्वा स्वप्नं निवेदयेत् ॥३६॥
भगवन् देवदेवेश शूलभृद् वृषवाहन ।
[1] इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य साम्प्रतम् ॥३७॥
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽ शुभम् ।
ॐ हृत्सकललोकाय विष्णवे प्रभविष्णवे ॥३८॥
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ।
[2]स्वप्नमानवमन्त्रोऽयमुपवासी जितेन्द्रियः ॥३९॥
दर्भशय्यां गतो रात्रौ स्वप्नं पश्येद्यथातथम् ।
भुक्त्वा शयीत शयने सुशुद्धे वसुधातले ॥ ४० ॥
अर्धरात्रे समुत्थाय पादशौचं विधाय च ।
आचम्य देवं संस्कृत्य संपूज्य च[3] सपञ्चकैः ॥४१॥
शिवदैवतयोरैक्यं भावयन्प्रजपेदिदम् ।
नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ॥४२॥
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ।
स्वप्ने कथय मे नित्यं सर्वकार्यमशेषतः ॥४३॥

---

1. इष्टानिष्टसमाचक्ष्व - इति ख.मा.पा. ।
2. स्वप्नमानय - इति पा. मेरौ ।
3. समञ्चकैः -- इति ख मा.पा । सपञ्चके - इति पा. मेरौ ।

स्वप्नस्तु प्रथमे यामे १ संवत्सरफलं भवेत् ।
षड्भिर्मासै र्द्वि २ यामोऽतस्त्रिभिर्मासैस्त्रियामकः ॥४४॥

चतुर्थे मासमात्रेण प्रातःकाले तु सत्वरम् ।
३ चिन्तारुग्जाल्पदीर्घं यत् तत्फलं नैव विद्यते ॥४५॥

वाताधिक्याद् भवेत् स्वप्नः ४ साहसोड्डीनपूर्वकम् ।

पित्तात्तेजोऽग्निपित्तादि रक्तं क्रोधादिकं तथा ॥४६॥
५ अध्याशयेतादिशित शयताद्यं वलांसि नः ।

वातैः प्राप्तस्त्वङ्गमर्धः पित्तादाहस्तु नेत्रयोः ॥४७॥
६ कफात्प्रसेकते नित्यं द्वन्द्वं ७ द्वन्दं न किं त्रिषु ।

सिद्धं वा स्वगुरुं देवं प्रसन्नां वा कुमारिकाम् ॥४८॥
८ गङ्गां गां भारतीम् भानुं लिङ्गिनं लिङ्गमैश्वरम् ।

बालं छत्रं रथं दीपं प्रासादं कमलं नदीम् ॥४९॥
कुञ्जरं वृषभं माल्यं समुद्रं फलितद्रुमम् ।
पर्वतं प्रज्ज्वलद्वह्निमाममासं सुराऽऽसवम् ॥५०॥
ग्रहान् भानि विधुं सूर्यं रत्नान्याभरणानि च ।
सिंहासनं विमानं च ध्वजं राज्याभिषेचनम् ॥ ५१ ॥
श्वेतचन्दनवस्त्राणि शालयः कुङ्कुमं मधु ।
९ लाजा सिद्धार्थकं नार्यो नवभाण्डं च पायसम् ॥५२॥

---

१ वत्सरं तत्फलम् - इति पा. मेरौ. ।
२ द्वियामे तु - इति पा. मेरौ ।
३ चिन्ता हृद्‌गा तदीयम् - इति पा. मैरौ ।
४ हीन - इति पा. मेरौ ।
५ श्लेष्मणः श्वेतशीतादि देशताधं बलासनम् - इति पा. मेरौ ।
६ प्रवेपतं - इति पा. मेरौ ।
७ हृद्यं द्वन्द्वे त्रयं त्रिषु - इति पा. मेरौ ।
८ भागीरथीम् - इति पा. मेरौ ।
९ राजा - इति पा. मेरौ ।

अश्वं फलानि सिद्धान्नं दधि वारविलासिनीम् ।
[1] दुग्धं वाद्यानि चापं च मयूरं नकुलं मृदम् ॥५३॥
वद्धमेकं पशुं पुष्पं सद्वाक्यं [2] चेक्षुमञ्जनम् ।
पूर्णकुम्भं दर्पणं च [3] मीनमाज्यं च रोचनाम् ॥५४॥
शवे रोदनहीनं च [4] शस्त्राणि च पताकिका: ।
[5] भारद्वाजनृपालौ च वेदे [6] शव्दं च गायनम् ॥५५॥
कशां माङ्गल्यगीतानि चाङ्कुशं युद्धद: प्रियम् ।
स्वप्ने दृष्टानि चैतानि साधक: सिद्धिमाप्नुयात् ॥५६॥
व्याध्याद्यार्त्ते नास्ति दु:खं सामान्य: सुखमाप्नुयात् ।
यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ॥५७॥
कामयन्तीं नदीं सिन्धुतरणं भ्रमणं च खे ।
भास्करोदयनं चैत्रग्रहणं चन्द्रसूर्ययो: ॥५८॥
हर्म्यं प्रासादनागाश्च वृषशैलाग्निरोहणम् ।
भोजनं दधिभक्तस्य पक्वमांसस्य [7] भक्षणम् ॥५९॥
कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् ।
ताम्वूलभक्षणं मद्यपानं [8] दध्यसिचन्दनम् ॥६०॥
प्रचण्डकिरण: स्वच्छ: कार्यसिद्धेस्तु लक्षणम् ।
कृष्णाम्वरधरा नारी कृष्णगन्धानुलेपना ॥६१॥
[9] अवगूहति यं स्वप्ने सा रात्रिस्तस्य पश्चिमा ।

---

[1] मृगम् - इति पा. मंरौ ।
[2] चक्षुरञ्जनम् - इति पा. मंरौ ।
[3] मद्यं च भोजनम् - इति पा.मंरौ ।
[4] पुण्ड्राणि - इति पा. मंरौ ।
[5] भारद्वाज नृपाणाम् - इति पा. मंरौ ।
[6] वेदशव्दम्- इति पा. मंरौ ।
[7] पक्व - इति पा. मंरौ ।
[8] दध्यभिचन्दम् - इति पा. मंरौ ।
[9] उपगुहात् - इति पा. मंरौ ।

एवं तु रक्तपा व्याधिः शोकोऽरुणसमानया ॥६२॥
चित्रया कलहो हत्या पीतया [1] कीरपानि यत् ।

श्वेताम्बरधरा नारी श्वेतमाल्यानुलेपना ॥६३॥
[2] अवगूहति स्वप्ने यं तस्य श्रीः सर्वतोमुखी ।

आसने शयने याने शरीरे वाहने गृहे ॥६४॥
ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ।
सितोरगस्य दंशश्चेज्जायते दक्षिणे करे ॥ ६५ ॥
दशाहोभिर्भवेल्लाभो रोगी रोगाद्विमुच्यते ।
निगडैर्बाहुपाशेन बध्यते वा [3] सुतो भवेत् ॥६६॥
प्रतिष्ठा वर्धते तस्य[4] दुग्धपानाद्धनात्ययः ।
सुरां रक्तं पिबन् विद्यां लभेद् विप्रो धनं परम् ॥६७॥
दधि दृष्ट्वा भवेत्प्रीतिर्गोधूमैश्च धनागमः ।
[5] सिद्धाविष्टागमं विद्याल्लाभः सिद्धार्थकैस्तथा ॥६८॥
दधिलाभाद् भवेदर्थो घृतलाभाद् ध्रुवं जयः ।
घृताशनाद् धनक्लेशो जयस्तु दधिभक्षणे ॥६९॥
लिङ्गाद्यभ्यर्चनं दृष्ट्वा व्यवहारे जयो भवेत् ।
यस्तु मध्ये तडागादेर्भुञ्जीत घृतपायसम् ॥ ७० ॥
निष्कम्पे पुष्करे पत्रे तं विद्यात्पृथिवीपतिम् ।
देवता लिङ्गिनो गावो पितरो ब्राह्मणा नृपाः ॥७१॥
यद् वदन्ति नरं स्वप्ने तत्तथैव भविष्यति ।
अस्त्रैः संवेष्टयेद्यस्तु ग्रामं वा नगरं तथा ॥७२॥

---

[1] करदो भवेत् - इति पा. मेरौ ।
[2] उपगूहति - इति पा. मेरौ ।
[3] युतो - इति पा. मेरौ ।
[4] दुग्धपानधनात्ययः - इति पा. मेरौ ।
[5] सिद्ध्या विद्यागमम्- इति पा. मेरौ ।

ग्रामे मण्डलराज्यं स्यान्नगरे पार्थिवो भवेत् ।
चन्द्रतारार्कग्रसनं परिमार्गणमेव च ॥७३॥
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ॥
जयो विवाहे [1] ते शत्रूणां च तथा जयः ॥७४॥
बडवा-महिषी-सिंही-गो-हस्तिन्यादिदोहनम् ।
प्रसादो गुरुविप्रेष्टदेवसिद्धादिकाच्छुभम् ॥७५॥
स्नानं राज्याभिषेकश्च स्वशिरश्छेदनं मृतिः ।
तीर्थोदकानां तरणं तथा विषमलङ्घनम् ॥७६॥
गोहस्तिबडवासूतिर्वह्निलाभस्तथैव च ।
परस्त्र्यालिङ्गनं तस्या लाभो रोदनमेवच ॥७७॥
विष्ठालेपः [2] कुन्दजातीबकुलक्ष्मेशदर्शनम् ।
रणविद्युद्विमर्देषु जयो निगडबन्धनम् ॥ ७८ ॥
पशुमर्त्यमृगाणाञ्च लब्धिरध्यासनन्तथा ।
शिखिलाभः श्वेतवस्त्रं पुष्पचन्दनधारणम् ॥ ७९ ॥
मणितारसुवर्णादिपात्रे भोजनकं यदा ।
पश्येत्तस्य साधकस्य ज्ञेया सिद्धिरुपस्थिता ॥ ८० ॥
कार्यार्त्तानां कार्यसिद्धि [3] ऋणार्त्तानां धनागमः ।
वन्ध्या चर्मतुषाग्न्यादिलवणाङ्गारमिन्धनम् ॥ ८१ ॥
विट्क्लीवोन्मत्ततैलानि जटिलादिवसौषधम् ।
[4] रोगात्तृणं च सन्यासी नग्नस्त्यक्तः क्षुधातुरः ॥ ८२ ॥
विमुक्तकेशः[5] पतितो त्वगासृक्शरटः क्षुतम् ।
मार्जारयुद्धं कार्पासो गर्भिणी च रजस्वला ॥ ८३ ॥

---

[1] विवादे - इति पा. भेरौ ।
[2] बकुलानां च दर्शनम् - इति पा. भेरौ ।
[3]. रितग्रणम् - इति पा. भेरौ ।
[4]. रोगी नृणान्तु - इति पा. भेरौ ।
[5] पतितोऽभ्यङ्गसृकशर्रानक्षतः - इति पा. भेरौ ।

गुडस्तक्रं च काषायी १ पङ्करण्डाकलिगृंहे ।
वस्त्रादिकस्य २ स्वपललुलायसमरं तथा ॥ ८४॥

अन्धः कुजो दुर्वचनो बधिरः खञ्जकुब्जकौ ।
वमनं च घटो रिक्तो रजकी मलिनाम्बरा ॥ ८५ ॥
एतैर्दृष्टैर्न कार्यं स्याद् रोगी मृत्युमवाप्नुयात् ।
अशोकं करवीरं च पलाशं वाऽपि पुष्पितम् ॥ ८६ ॥
स्वप्नेऽपि सलिलं दृष्ट्वा नरः शोकमवाप्नुयात् ।
रूपान्तरे प्रवेशश्च दक्षिणाशागतिस्तथा ॥ ८७ ॥
पङ्के निमज्जनं स्नानं पुत्रभार्याविनाशनम् ।
३ गोहस्तिद्विजविप्रादिवर्ज्यं कृष्णं न शोभनम् ॥ ८८ ॥

रक्त गन्धाम्बरः स्रग्वी कृष्णो वा दक्षिणामुखः ।
खरोष्ट्रमहिषारूढस्त्रिमासं न स जीवति ॥ ८९ ॥
४ स्वप्ने वा पक्ने गेहे द्वारं चास्य पिधीयते ।
न चोत्तिष्ठति ५ यस्तस्मात्तदन्तं तस्य जीवितम् ॥ ९० ॥

६ वातं मूत्रं पुरीषं च सन्तानं जननं च्चुतिम् ।
शुक्रञ्च पश्येद्यः स्वप्ने तस्यायुर्दशमासिकम् ७ ॥ ९१ ॥

ताड्यते विकृतैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताड्ते वाऽपि तस्य मृत्युर्न संशयः ॥ ९२ ॥
महिषोष्ट्रखरारूढस्तैलाभ्यक्तश्च मुण्डितः ।
दक्षिणाशां प्रस्थितो यस्तस्य मृत्युर्न संशयः ॥ ९३ ॥

---

[१] पङ्क एरण्डका गृहे - इति पा. मेरौ ।
[२] स्खलनं सुरा पशुमलं तथा - इति पा. मेरौ ।
[३] गोहस्तिद्विजविप्रादौ दृष्टे कृष्णो च शोभनम् - इति पा. मेरौ ।
[४] स्वप्ने वाऽपि मठं गेहं - इति पा. मेरौ ।
[५] यत्तस्य मासान्तं किल जीवितम् - इति पा. मेरौ ।
[६] वान्तिमूत्रपुरीषञ्च - इति पा. मेरौ ।
[७] मासकम् - इति पा. मेरौ ।

पश्येत्प्रासादपतनं १ गृहस्य शशिसूर्ययोः ।
पर्वतानां च वृक्षाणामधिकाराच्च्युतिभर्वेत् । ॥ ९४ ॥
हानिश्चैव स्वगात्राणां २ व्याधिनाभिभवस्तथा ।
गृहसंमार्जनं लेपो गोमयेन मृदाऽपि वा ॥ ९५ ॥
तीर्त्वा नदीं समायातस्तीरेऽन्यद्वसनं धृतम् ।
रोगी रोगाद् विमुच्येत हानिः स्वस्थस्य जायते ॥ ९६ ॥
पुन्नामानो ३ मृगखगाः पोतकी सूकरी तथा ।
पिङ्गला छुच्छुका पल्ली वामाङ्गे कोकिला शिवा ॥ ९७ ॥
स्त्रीनामानो ४ मृगखगाः ५ श्रीकण्ठायामरो रुरुः ।
हिकटः ६ पिपलो भासो दक्षे काकर्क्षकुक्कुराः ॥ ९८ ॥
दृष्टाश्चेद्रोगिणो रोगनाशः साधकसिद्धयः ।
स्वस्थस्य चोद्यमाल्लाभो ७ दिग्व्यत्यासान्न शोभनम् ॥ ९९ ॥

**दुःस्वप्नशान्तिः –**

त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ।
सक्षीराणां घृताक्तानां समिधानां शतं दहेत् ॥ १०० ॥
पलाशानां तु गायत्र्या शुद्धः स्नात्वा हविष्यभुक् ।
दीपं दद्याद् विप्रगृहे विष्णोर्गेहे शिवालये ॥ १०१ ॥
एवं दृष्टा शुभं स्वप्नं गृह्णीयान्मनुमन्यथा ॥
गृहीते हानिरेव स्याद्वान्यं देवं विचिन्तयेद् ॥ १०२ ॥

---

१ ग्रहस्य - इति पा. मेरौ ।
२ याधितोऽभिभवस्तथा - इति पा. मेरौ ।
३ गगाः - इति पा मेरौ ।
४ गण - इति पा. मेरौ ।
५ श्रीकण्ठो वानरो रुरुः - इति पा. मेरौ ।
६ प्रियको - इति पा. मेरौ ।
७ बहुव्यापारशोभनम् - इति पा मेरौ ।

**स्वप्ननिवेदनम् –**

शिष्यस्तु शुचिराचान्तः पुष्पहस्तो गुरूत्तमम् ।
प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत् ॥ १०३ ॥
स्वप्ने वाक्षिसमक्षं वा ह्याश्चर्यमतिहर्षदम् ।
अकस्माद्यदि वा पश्येन्नाख्यातव्यं गुरोर्विना ॥ १०४ ॥
स्वप्नान्निद्रा फलघ्नी स्यात्स्वप्नो वाच्यो न चान्यथा ।
एवं विचार्य सःततो [1] गुरुपूजां समाचरेत् ॥ १०५ ॥
विधायाचमनं तत्र सामान्यार्घ्यं विधाय च ।
अर्घ्योदकेन संप्रोक्ष्य द्वारपूजां समाचरेत् ॥ १०६ ॥
ततश्च देशिको विद्वान्दिव्यानालोकनेन च [2] ।
अन्तरिक्षगतानस्त्रोदकैरुत्सादयेत् क्रमात् [3] ॥ १०७ ॥
पार्थिवान् पार्ष्णिघातैस्तु त्रिभिरुत्सार्य यत्नतः ।
अङ्गं संकोच्य किञ्चित्तु शाखां वामगतां [4] स्पृशन् ॥ १०८ ॥
उत्सारितानां विघ्नानां [5] ददन्वत्वतु दक्षिणे ।
ब्राह्मणं वास्त्वधीशं [6] च नैर्ऋत्यां दिशि पूजयेत् ॥ १०९ ॥
अर्घ्याम्बुना च गव्येन यागस्थाने सुसिञ्चिते [7] ।
वीक्षणाद्यैस्ततः शुद्धिं चतुर्द्वारान् [8] समाचरेत् ॥११०॥
संवीक्ष्य मूलमनुना ह्यस्त्रेण प्रोक्षयेत्ततः ।
कुर्यात्ताडनमन्त्रेण कवचेनावसेचयेत् ॥१११॥

---

१. गुरुपूजाम् - इति पा. मेरौ ।
२ नास्फोटनेन च - इति पा.मेरौ ।
३. नान्तर्मन्त्रैरुत्सारयेत्क्रमात् - इति पा. मेरौ ।
४. स्पृशंत् - इति पा. मेरौ ।
५. ददन्मार्गन्तु - इति पा. मेरौ ।
६. पादेन दक्षिणेनाथ प्रविशेद् यागमण्डपम् ।
वाममर्गेऽथवा शाक्ते वामपादपुरस्सरम् ॥
- इति ख.मा. अधिकः पाठः, मेरौ च तथा ।
७ सुसेचयेत् - इति पा. मेरौ ।
८ चतुर्धा वा - इति पा. मेरौ ।

श्रीखण्डागुरुचन्द्रैश्च [1] धूपितेऽस्त्रेण सप्तधा ।
[2] यवाँश्चन्दनसिद्धार्थदूर्वाभस्माक्षतान् कुशान् ॥११२॥
सलाजान् विकिरेन्मन्त्री प्रत्यूहघ्नान् हि मण्डपे ।
मार्जयेदस्त्रमन्त्रेण तान्मन्त्री दर्भमुष्टिना ॥११३॥
आसनाय तु वर्धन्या ईशाने स्थापयेच्च तान् ।
पुण्याहं वाचयित्वाऽथ विप्रान् सन्तोष्य यत्नतः ॥११४॥
वेदिकायं लिखेत्पश्चात्सर्वतोभद्रमण्डलम् ।
[3] अथ तत्सम्प्रवक्ष्यामि कुर्यात्तान्त्रिककर्मणि ॥११५॥
नृपवर्गसमाः कार्याः कोष्ठकाश्चतुरस्रके ।
मध्ये षड्वर्गकोष्ठानि मार्जयेत् तत्र संलिखेत् ॥११६॥
आयामद्वादशांशं च बहिस्त्यक्त्वाऽथ मध्यतः ।
ततो वृत्तत्रयं मध्ये समं कुर्याद्यथाविधि ॥११७॥
कर्णिकामध्यवृत्तेन द्वितीयेन तु केशरान् ।
अन्र्तवृत्तेन पत्राणि पत्राग्रं त्यक्तभागतः ॥११८॥
किञ्जल्काग्रेषु संस्थाप्य पार्श्वतस्त्वर्धचन्द्रकान् ।
तदग्रे तु त्रिभिः कोष्ठैः पादान् कोशेषु विन्यसेत् ॥११९॥
शेषाणि पीठगात्राणि परतः पङ्क्तियुग्मकम् ।
वीथीं कुर्यान्मार्जयित्वा चतुर्दिक्षु च मध्यतः ॥१२०॥
क्रमाद् द्वाभ्यां चतुर्भिश्च कोष्ठैर्द्वारचतुष्टये ।
कोष्ठत्रयेण चैकेन प्रत्येकं द्वारपार्श्वयोः ॥ १२१ ॥
शोभा भवत्यतः कोष्ठैरेकतस्त्रिभिरेव च ।
उपशोभास्ततः कोष्ठैः षड्भिः [4] कोणानि कल्पयेत् ॥ १२२ ॥

---

[1] मन्त्रैश्च - इति पा. मेरौ ।
[2] जयाचन्दन - इति पा. मेरौ ।
[3] अथान्यत् - इति ख.मा.पा. । तथैव मेरौ ।
[4] कोशानि - इति पा. मेरौ ।

शुक्लतण्डुलचूर्णं स्यादुत्सेधायामतस्तथा ।
अङ्गुलेन समा:कार्या: सीमारेखा दलानि च ॥ १२३ ॥

पीठगात्राणि च द्वारचतुष्कं तेन पूरयेत् ।
[1] अविप्रे पूरंणीयानि रक्तैनैव दलान्यपि ॥ १२४ ॥

कुसुम्भचूर्णमारक्तं पूरणीयास्तु तेन तु ।
द्वारशोभा: [2] पीठपादा: सर्ववर्णैर्विनिश्चयात् ॥ १२५ ॥

पीतं हरिद्राचूर्णं स्यात्पीठगर्भांञ्च कर्णिकाम् ।
उपशोभाश्च [3] विप्रान्य: [4] पीठगर्भं च कृष्णत: ॥ १२६ ॥

विल्वपत्रस्य चूर्णेभ्यो हरितस्तेन पूरयेत् ।
सन्धींश्च कल्पवल्लीश्च पीतरक्तेन केशरात् ॥ १२७ ॥

वीथीचतुष्कमध्ये तु कल्पवल्ली: प्रपूरयेत् ।
[5] पत्रे मूलफलाकारमण्डिता हृदयङ्गमा: ॥ १२८ ॥

नानावर्णरजोभिस्ता रञ्जयेत्कुशली गुरु: ।
कृष्णवर्णेन कोणानि बहिरेखात्रयं तत: ॥ १२९ ॥

शुक्लारुणाख्यकृष्णैस्तु रजोभिर्भूषयेत्क्रमात् ।
सर्वतन्त्रेष्विदं प्रोक्तं सर्वतोभद्रमण्डलम् ॥ १३० ॥

वक्ष्येऽथ देवयोनीनां सर्वतोभद्रमण्डलम् ।
मार्गेऽथ दक्षिणे तत्र कोष्ठाकारविवर्गका: ॥ १३१ ॥

प्रागवदेव तु तन्मध्ये पद्मं [6] षट्त्रिंशता शुभम् ।
एकपङ्क्त्या भवेत्पीठं द्वारं शोभा च पूर्ववत् ॥ १३२ ॥

---

[1] अविप्रै: - इति पा. मेरौ ।

[2] पीतपादा: - इति पा. मेरौ ।

[3] विप्रेण - इति पा. मेरौ ।

[4] पीठगर्भांश्च - इति पा. मेरौ ।

[5] पत्र - इति ग.मा.पाठ: ।

[6] षड्भि: पदै: शुभम् - इति पा. मेरौ ।

षड्भिः कोष्ठैस्तु [1] कोणानि रञ्जितव्यं च पूर्ववत् ।
पीठपादाः परिधयः पद्माद्यं पूर्ववन्मतम् ॥ १३३ ॥
वाममार्गे मण्डलं स्यात्कोष्ठैरष्टकवर्गकैः ।
चतुर्भिः पङ्कजं मध्ये तद्बाह्ये वीथिका [2] भुवा ॥ १३४ ॥
कल्पवल्ली समायुक्ता पद्मं [3] पूर्ववदेव हि ।
दिक्चतुष्के तु पद्मानि चतुर्भिः कोष्ठकैश्चरेत् ॥ १३५ ॥
विदिशासु चतुर्भिः स्युश्चतुष्का वेदसंख्यकाः ।
चतुष्कपद्मवीथीनां मध्ये स्वस्तिकसंन्निभम् ॥ १३६ ॥
जायते तच्चतुष्कोष्ठैर्विदिशासु चतुर्ष्वपि ।
रजोभिः शुक्लहारिद्ररक्तनीलैः प्रपूरयेत् ॥ १३७ ॥
[4] स्वस्तिका नीलरक्ताश्च पूर्ववत् परिकल्पयेत् ।
उदितं मण्डलं ह्येतन्नवपद्मं सुशोभनम् ॥ १३८ ॥
[5] वेद्या उपरि बध्नीयात्फलपुष्पोपशोभितम् ।
वेदिकायामासने स प्राङ्मुखः संविशेदथ ॥ १३९ ॥
वद्धपद्मासनो मौनी ऋजुकायो जितेन्द्रियः ।
देशिकेन्द्रस्तु संस्थाप्य पूजोपकरणानि तु ॥ १४० ॥
दक्षिणे वामभागे तु स्थापयेत् कलशं शुभम् ।
सुगन्धि जलसम्पूर्णं हस्तप्रक्षालनाय च ॥ १४१ ॥
पश्चात्पात्रं निधायाथ दीपान्प्रज्वालयेच्छुभान् ।
व्यजनं मुकुलं छत्रं चामरं दिक्षु मन्त्रवित् ॥ १४२ ॥

---

[1] कोशानि - इति पा. मेरौ ।

[2] तुवा - इति पा. मेरौ ।

[3] सर्वदेव हि.- इति पा. मेरौ ।

[4] स्वस्तिकानां शतञ्चान्यत्- इति ख.मा.पा. तथैव मेरौ ।

[5] एतदेवोक्तमार्गेण मध्येद्वारं विदिक्त्यजन् । एककोष्ठचतुष्काद्यं पञ्चपद्मं प्रचक्ष्यते ॥
पद्मं प्राग्वमितद्वारं स्वस्तिवच्च चतुष्ककाः । वर्णै पूर्या वीथिका तु पीतैस्तत् सुरयोनिपु ॥
- इति ख.मा अधिकः पाठः, तथैव मेरौ ।

संस्कुर्यात्तानि सर्वाणि वक्ष्यमाणविधानतः ।
करशुद्धिं विधायाथ कुर्यात्तालत्रयं ततः ॥ १४३ ॥
शरमन्त्रेण दिग्बन्धं कुर्यान्मन्त्री समाहितः ।
१.महस्तु तत उत्पन्नं २.रक्षयेत्तं हि सर्वतः ॥१४४॥
भूतशुद्धिं ततः कृत्वा प्राणस्थापनमाचरेत् ।
न्यासादिकं ततः कुर्याद्देशिको यतमानसः ॥ १४५ ॥
ऋषिं न्यसेत्ततो मूर्ध्नि छन्दो वक्त्रगतं न्यसेत् ।
देवतां हृदये न्यस्य मूलमन्त्रस्य देशिकः ॥ १४६ ॥
षडङ्गं विन्यसेन्मत्री पञ्चाङ्गं वा यथाविधि ।
यस्य मन्त्रस्य पञ्चाङ्गं नेत्रं तस्य विधीयते ॥ १४७ ॥
अङ्गैर्विहीनस्य मनोरङ्गं तेनैव कल्पयेत् ।
तत्तत्तन्त्रोक्तमार्गेण न्यासानन्यान्समाचरेत् ॥ १४८ ॥
शरीरे स्वस्य मन्त्रज्ञो योगपीठं प्रकल्पयेत् ।
देहात्मके ततः पीठे ध्यायेन्मन्त्रस्य देवताम् ॥ १४९ ॥
दर्शयित्वा ततो मुद्राः स्थापयेदर्घ्यमुत्तमम् ।
जलेन पूरितां दक्षे प्रोक्षणीं स्थापयेत्ततः ॥ १५० ॥
तत्राल्पमल्पं शंखाम्बु तत उत्तरतो न्यसेत् ।
पाद्यमाचमनीयञ्च मधुपर्कं च मन्त्रवित् ॥ १५१ ॥
ततो मूलाम्बुना मन्त्री प्रोक्षण्यद्भिः समाहितः ।
स्वात्मानं मण्डलं चान्यत्पूजोपकरणादिकम् ॥ १५२ ॥
प्रोक्षयेद् गन्धपुष्पाद्यैर्देशे स्वे देशिकोत्तमः ।
योगपीठं समभ्यर्च्य न्यासमार्गेण मन्त्रवित् ॥ १५३ ॥
पीठान्तं च ततस्तत्र पूजयेदिष्टदेवताम् ।
देवतात्मा ततः पञ्च कुर्याच्च सुमनोऽञ्जलीन् ॥ १५४ ॥
शीर्षे हृदि तदाऽऽधारे चरणे सर्वगात्रके ।

---

१. महतस्तु समुत्पन्नम् - इति पा. मेरौ ।
२. वक्ष्ये यत्तर्हि सर्वतः - इति पा. मेरौ ।

पूजयेच्च निवेद्येमं रहितैश्चन्दनादिभिः ॥ १५५ ॥
सर्वोपचारैस्तं वेत्थं गुर्वादिष्टेन वर्त्मना ।
समापयेदिदं सर्वं प्रोक्षण्यद्भिः समाचरेत् ॥ १५६ ॥
पानीयं प्रोक्षणीसंस्थं त्यक्त्वा [१] सम्पूर्य पूर्ववत् ।
उपचारैश्चवन्दनाद्यैर्मण्डलं पूजयेद् गुरु ॥ १५७ ॥
पूरयेत् कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः ।
दर्भान्न्यसेदुपर्येषां [२] साक्षतं कूर्चकं ततः ॥ १५८ ॥
छिन्नमूलाः कुशा दीर्घाः सप्तविंशतिसङ्ख्यकाः ।
ब्रह्मग्रन्थियुतास्त्वग्रदेशे कूर्च इहोच्यते ॥ १५९ ॥
यजेदाधारशक्त्यादिपीठमन्त्रावसानकम् ।
स्वर्णादिरचितं तत्र कलशं छिद्रवर्जितम् ॥ १६० ॥
[३] द्वादशाङ्गुलकं हेम रौप्यं षोडशमेव च ।
मार्त्तिकं ताम्रकुम्भं च षटत्रिंशदङ्गुलं स्मृतम् ॥१६१॥
वित्तशाठ्यं न कुर्वीत कृते निष्फलमाप्नुयात् ।
त्रिगुणात्मकसूत्रेण वेष्टितं सर्वतो बहिः ॥ १६२ ॥
चन्दनागुरुकर्पूरैर्मध्ये सम्यक् [४] सधूपितम् ।
ध्रुवं [५] जयविधानेन स्थापयेद्देशिकोत्तमः ॥ १६३ ।
नवरत्नानि निक्षिप्य कुम्भे कूर्चमथोपरि ।
दूर्वाचन्दनसंयुक्तं विन्यसेदक्षतान्वितम् [६] ॥ १६४ ।
पुष्पं नीलं च वैदूर्यं विद्रुमं मौक्तिकं तथा ।
ततो मरकतं वज्रं गोमेदं पद्मरागकम् ॥ १६५ ॥

---

१ संसेव्य - इति मेरौ पाठः ।
२. साक्षात्तं पूर्वकन्ततः - इति मेरौ पाठः ।
३. १६१ श्लो. मेरौ न प्राप्यते ।
४. प्रपूरितम् - इति मेरौ पाठः ।
५. जपं विना चात्र - इति मेरौ पाठः ।
६. दक्षिणान्वितम् - इति मेरौ पाठः ।

प्रोक्तानि नवरत्नानि देशिकैस्तन्त्रवित्तमैः ।
क्षाद्यन्तं क्रमतो मन्त्रं मातृकां मनसा जपेत् ॥ १६६ ॥
मूलमन्त्रञ्जपन्नन्ते चिन्तयन्नैक्यमात्मनः ।
घटस्य पीठाभेदं च चिन्तयेत्साधकोत्तमः ॥ १६७ ॥
पञ्चाशदोषधीक्वाथैः पूरयेत्तदनन्तरम् ।
एकेन सहितास्ताश्च पर्णौषध्यश्च ता इमाः ॥ १६८ ॥
चन्दनं चापि रक्ताख्यं चन्दनं चागुरुस्तथा ।
कर्पूरोशीरकुष्ठानि बालकं चापि केशरम् ॥ १६९ ॥
कङ्कोलकं जातिफलं जटामांसी मुरा तथा ।
१. ग्रन्थिकं रोचना जातीपत्रं पिप्पलविल्वका ॥ १७० ॥
२. पृश्निपर्णी चित्रकं च लवङ्गकतृणं तथा ।
३. कक्कोलं चापि गुञ्जा स्यादुदुम्बरककाश्मरी ॥ १७१ ॥
४. पद्मकाष्ठं शङ्खपुष्पी मयूरस्य शिखा तथा ।
प्लक्षोऽग्निमन्थश्च तथा मुद्गपर्णी कुशाः पुनः ॥ १७२ ॥
पाषणभेदकं ५. कृष्णशङ्खपुष्पी च रोहिणम् ।
६. स्योनाको बृहती चैत्र पाटलांमुखकर्णिका ॥ १७३ ॥
तुलसी शिखरी इन्द्रवल्ली ७. भृङ्गाभिधो नृपः ।
८. ततोऽपराजिता तालमूली चापि कृताञ्जलिः ॥ १७४ ॥
दूर्वा श्रीदेवी कन्याख्या ९. भारथो भद्रमुस्तकम् ।
लवङ्गरहिताश्चैताः १० पञ्चाशत्संख्यका इति ॥ १७५ ॥

---

१. ग्रथिकम् - इति पा. मूलपुस्तके ।
२. पृष्ठिपर्णी - इति पा. मेरौ ।
३. कट्फलम् - इति पा. मेरौ ।
४. पद्मकोषा - इति पा. मेरौ ।
५. शशिपुष्पी च रोहिणी - इति पा. मेरौ ।
६. स्योना छिन्नरुहा चैव - इति पा. मेरौ ।
७. भृङ्गीमिरा नृपाः - इति पा. मेरौ ।
८. ततो राजितयपातालमूली - इति पा. मेरौ ।
९. भागयो - इति पा. मेरौ ।
१० सामर्थ्याद् देशिकस्य च - इति ख. मा. पाठः ।

१. दुग्धवृक्षत्वचा क्वाथैः २. ब्रह्मभूरुक्त्वगुद्भवैः ।
गन्धपङ्कप्रसूनादिवासितैर्वा शुभैर्जलैः ॥ १७६ ॥
क्वाथादितोयैरापूर्य शङ्खं तस्मिन् विलोडयेत् ।
गन्धाष्टकं तस्य तस्य देवस्याथ विनिक्षिपेत् ॥ १७७ ॥
गन्धाष्टकस्य संयोगात्सामर्थ्याद्देशिकस्य च ।
सशक्तिकजलं कुम्भे भवेदेवं विदुर्बुधाः ॥ १७८ ॥
आदौ कृशानुसम्बन्धि कलादशकमर्चयेत् ।
धूमार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥ १७९ ॥
सुश्रीः सुरूपा कपिला हव्यकव्यवहे उभे ।
कलाद्वादशकं सौरं पूजयेत्तदनन्तरम् ॥ १८० ॥
तपिनी तापिनी शुभ्रा मरीचिर्ज्वालिनी रुचिः
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ १८१
कलाषोडशकं चान्द्रं यजेत्पश्चाद् गुरूत्तमः ।
अमृता मानदा पूषा पुष्टितुष्टी रतिर्धृतिः । १८२ ॥
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता ३ कान्तिदायिन्यः स्वस्वगाः कलाः ॥ १८३ ॥
वेदादिभेदसञ्जाताः कला ४. पञ्चाशदिन्दुयुक् ।
सन्निधाप्य प्रतिष्ठाप्याभ्यर्चयेत् क्रमशस्तु ताः। १८४ ॥
निवृत्तिः प्रतिष्ठा विद्या शान्तिर्ऋद्धिश्च दीपिका ।
रेचिका मोचिका ५. परा सूक्ष्मा सूक्ष्मामृता तदा ॥ १८५ ॥
६. ज्ञानदा ताप्यायनी चाव्यापिनी व्योमरूपका ।
अनन्ता सृष्टिर्ऋद्धिश्च स्मृतिर्मेधा च कान्तिका ॥ १८६ ॥

---

१. श्लो १७६, १७७, ७८ (क) ख. मा. न प्राप्यन्ते ।
२. वृक्षमूलत्वद्गुद्भवैः - इति ग्रन्थान्तरे ।
३. दीपिनाश्वरजाः कलाः - इति पा. मेरौ ।
४. बिन्दुयुक् - इति पा. मेरौ ।
५. पारा - इति पा. मेरौ ।
६. ज्ञानामृताप्यायनी च व्यापिनी व्योमरूपिका - इति पा. मेरौ ।

लक्ष्मीर्द्युतिः स्थिरा [1] स्थितिः सिद्धिर्जरा च पालिनी ।
क्षान्तीश्वर्यौ रतिः कामा वरदा ह्लादिनी तथा ॥ १८७ ॥
[2] प्रीतिर्दीर्घा तीक्ष्णा रौद्री भया निद्रा च तन्द्रिका ।
क्षुत्क्रोधिनी क्रियोत्कारी मृत्युः पीता [3] श्वेतारुणा ॥ १८८ ॥
असिता च तथानन्ता मध्ये मध्ये प्रपूजयेत् ।
हंसः शुचिःषदित्यादि [4] प्रतद्विष्णुस्तवेति च ॥ १८९ ॥
[5] त्रियम्बकं च गायत्री विष्णुर्योनिं तथैव च ।
तारस्य पंञ्चभेदोऽस्ति कलानां पूजने सुधीः ॥ १९० ॥
कलादशकमावाह्य सृष्ट्याद्यं सन्निधाप्य च ।
हंसःशुचिषदित्याद्यामृचं सञ्जप्य पूजयेत् ॥ १९१ ॥
प्राणसंस्थापनं कृत्वा कलानां पूजयेच्च ताः ।
एवं जराद्यास्तीक्ष्णाद्याः पीताद्याश्च विधानवित् ॥ १९२ ॥
निवृत्याद्याश्चापि यजेदुक्तयुक्त्या विचक्षणः
अकारोकारकौ प्रोक्तौ मकारो बिन्दुनादकौ ॥ १९३ ॥
[6] शक्तिःशान्ता त्वमी सप्त ध्रुवभेदाः प्रकीर्तिताः ।
अन्तिमौ द्वाविमौ भेदौ पृथगेव समीरितौ ॥ १९४ ॥
ततो ह्यश्वत्थपनसचूतानां पल्लवान् दृढम् ।
वन्धयेदिन्द्रवारुण्या लतयास्ये घटस्य च ॥ १९५ ॥
कल्पवृक्षधिया तं च भावयेत्कलशोपरि ।
पात्रं तण्डुलसम्पूर्णं नारिकेलफलान्वितम् ॥ १९६ ॥
कल्पवृक्षफलं ह्येतत्स्थापयेदनया धिया ।
पट्टवस्त्रयुगेनापि घटं संवेष्टयेत्ततः ॥ १९७ ॥

---

१. शिद्धत्तिः - इति पा. मंरौ ।
२. दीर्घा तीप्णा च रौद्री च - इनि पा. मंरौ ।
३. सिनारुणा - इति पा. मंरौ ।
४. प्रतिविष्णुस्तवेति च - इति पा. अन्यत्र ।
५. त्र्यम्बकं चैव गायत्री विष्णोर्योनिं तथैव च - इति पा मंरौ ।
६. शक्तिः शान्तिस्त्विमे सप्त ध्रुवं भेदाः प्रकीर्तिताः - इति पा. मंरौ ।

एतत्प्रधानकुम्भस्य स्थापनं परिकीर्तितम् ।
अथ पूर्वादिकाष्ठासु तोरणानां समीपतः ॥१९८॥
यथेच्छया मण्डलानि कुर्याद्वाष्टदलानि च ।
तदूर्ध्वं शालिपुञ्जन्तु प्रतिद्वारं समाचरेत् ॥१९९॥
तदूर्ध्वं पूर्णकलशं तत्र चैतान् प्रपूजयेत् ।
[1] प्राग्ध्रुवं च धरां दक्षे पश्चाद् वाक्पतिमुत्तरे ॥२००॥
विघ्नेशमथ चाग्नेयां दिक्षु कुम्भान् सुविन्यसेत् ।
अमृतं दुर्जयं सिद्धार्थकं मङ्गलमर्चयेत् ॥२०१॥
[2] पुनः पूर्वादिकाष्ठासु क्रमादिन्द्रादिकान् यजेत् ।
लोकपालान् मण्डलेषु कुम्भोपरि च तत्र वा ॥२०२॥
ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ ।
पुष्पदन्तं सार्वभौमं सुप्रतीकं तदग्रतः ॥२०३॥
ततो गुरुः स्ववेद्यां तु गत्वा स्वस्यासने विशेत् ।
सञ्चिन्त्य मूलमन्त्रेण मूर्तिं तस्मिन् गुरूत्तमः ॥२०४॥
तस्यां मूर्तौ समावाह्य पूजयेदिष्टदेवताम् ।
स्मृत्वा मूलमनुं मन्त्री [3] सम्यङ्नाडी यथा ततः ॥२०५॥
निर्गमय्य च चैतन्यं नासिकाग्रविनिर्गतम् ।
अञ्जलौ मातृकापद्मे महःपुष्पान्विते गुरुः ॥२०६॥
मस्तकान्तं समुत्थाप्य तस्यामावाहयेत्ततः ॥
संस्थापनं सन्निधानं सन्निरोधं ततश्चरेत् ॥२०७॥
संमुखीकरणं चापि सकलीकरणं ततः ।
ततोऽवगुण्ठनं कार्यममृतीकरणं ततः ॥२०८॥
परमीकरणं कुर्यात्क्रमतः [4] स्वस्वमुद्रया ।
क्रमाद्विदध्याच्च तत उपचारान् प्रकल्पयेत् ॥२०९॥

---

1. प्राग्ध्रुवं च धराम् - इति पा. मंरी ।
2. पुना स्त्रादिकाष्ठासु क्रमाद्धुद्रादिकान् यजेत् - इति मंरी पाठः ।
3. मातृकासु - इति पा. मंरी ।
4. - तस्य मुद्रिकाः - इति पा. मंरी ।

आसनादिप्रसूनान्तानुपचारान् प्रकल्प्य च ।
तत्तन्मन्त्रविधानेषु प्रोक्ताङ्गावरणान्यपि ॥२१०॥
सर्वान्ते लोकपालानां तदस्त्राणाञ्च पूजनम् ।
विधाय पूजामेवं हि धूपदीपनिवेद्यकैः ॥२११॥
कृते निवेद्य च ततो मण्डलं परितः क्रमात् ।
प्रवालाङ्कुरपत्राणि स्थापनीयानि मन्त्रिणा ॥२१२॥
वेदिकाया दक्षभागे कृत्वा स्थण्डिलमुत्तमम् ।
संस्थाप्य वह्निं संस्कृत्य वैश्वदेवं समारभेत् ॥२१३॥
यथाविधि ततस्तत्र गन्धाद्यैर्देवतां यजेत् ।
तत्र प्रणवपूर्वाभिर्हुत्वा व्याहृतिभिः पुरा ॥२१४॥
जुहूयान्मूलमन्त्रेण पायसेन घृतेन च ।
पञ्चविंशतिभिः पश्चाद् हुत्वा व्याहृतिभिः पुनः ॥२१५॥
संपूज्य तां चन्दनाद्यैः पीठमूर्तौ नियोजयेत् ।
अग्निं विसृज्य शिष्टेन पायसेन वलिं हरेत् ॥२१६॥
पार्षदेभ्यश्चन्दनादिपुष्पाक्षतसमन्वितम् ।
तत उत्थाप्य नैवेद्यं तत्स्थलं शोधयेत् सुधीः ॥२१७॥
पुनर्यजेच्चोपचारैः पञ्चभिर्दर्शयेत्ततः ।
दर्पणं व्यजनं छत्रं चामरं मुखवासकम् ॥२१८॥
सहस्रं च जपेन्मन्त्री मूलमन्त्रं समाहितः ।
देवतायै निवेद्याथ तं जपं संपदे ततः ॥२१९॥
इशानदिशि यः पूर्वं स्थापितो विकिरोऽत्र च ।
सुवर्णवस्त्रसंयुक्तं [2] कलशं जलपूरितम् ॥२२०॥
न्यसेदत्र यजेदस्त्रदेवतां घोररूपिणीम् ।
[3] पश्चिमास्यां खड्गखेटधारिणीं सिंहसंस्थिताम् ॥२२१॥

---

[1] निधापयेत् - इति पा. मंरौ ।

[2] करकञ्जलपूरितम् - इति पा. मंरौ ।

[3] पश्चिमाद्यन्ततः - इति पा. मंरौ ।

तिष्ठन् संपूज्य च ततो गृहीत्वा तां प्रदक्षिणम् ।
१ भ्रमेदन्तस्तु दक्षेति २ लोकेशानामितीरयन् ॥२२२॥
३ नालमुक्तैर्नोदकेन देवाज्ञां श्रावयँस्ततः ।
स्वस्थाने स्थापयेत्तत्तु फण्मन्त्रेण ततोऽर्चयेत् ॥२२३॥

उपविश्य तु भूयोऽस्त्रग्रन्थाद्यैर्मन्त्रवित्तमः ।
प्रोक्तकुण्डेषु विधिवद् वह्नेः संस्थापनं चरेत् ॥२२४॥

**अग्निसंस्कारः -**

**मुनय ऊचुः -**

अग्निः क्व क्व च देवाश्च हूयतेऽग्नौ सुरान् कथम् ।
तत्प्राप्नुवन्ति ते देवा भिन्नाः कस्माद् वदस्व नः ॥२२५॥

**ईश्वर उवाचः-**

न स्वर्गे न च तीर्थेषु नौषधीषु न भेषु च ।
ऋषयो देवताः सन्ति मन्त्रा एव हि देवताः ॥२२६॥
साधकानां फलं दातुं तत्तद्रूपं धृतं सुरैः ।
मुख्यस्वरूपं तेषां तु मन्त्रा एव न चेतरत् ॥२२७॥
तन्मन्त्रैर्यद्धुतं वह्नौ किं तद्दहति पावकः ।
ग्रहश्चिनोति तच्छ्रेयो यथा नाड्योऽन्नजं रसम् ॥२२८॥
निर्दोषा तु यथा नाडी वहेदन्नरसं लघु ।
देवयोग्यो ग्रहस्तद्वच्छ्रेयांशं[4] वहते सुरः ॥२२९॥
सूर्यभात्त्रिषु भेष्वर्कनाड्यां श्रेयोऽभिवर्धते ।
पोषयेद् वैदिकान् मन्त्रानितरान्हन्ति वामवत् ॥ २३०॥
ततस्त्रिभेषु सौम्यस्य नाडी वृद्धिविलासकृत् ।
तस्मात्त्रिषु सितस्यापि वामिनामतिपुष्टिदा ॥ २३१ ॥

---

१ लोकेशानि त्वितीरयंत् - इति पा. मेरौ ।
२ एतदन्तं - इति पा. मेरौ ।
३ तारमुक्तैर्नोदकेन देवतास्तारयंस्ततः - इति पा. मेरौ ।
४ छ्रेयः संवहते सुरः - इति पा. मेरौ ।

१. ततस्त्रिषु शनेः सर्वं नाशयेन्मन्त्रसंचयम् ।
चन्द्रस्य सर्वमन्त्राणां पुष्टिकर्त्री ततस्त्रिषु ॥ २३२ ॥
ततस्त्रिष्वारनाडी स्यात्फलानान्तु विनाशकृत् ।
तस्मात्त्रिषु गुरोर्नाडी सत्वरं मन्त्रसिद्धिदा ॥ २३३ ॥
राहुनाडी त्रिषु ततो २. न सत्यैषा च केतरे ।
त्रिष्वतः केतुनाडी तु सद् भूते देवमन्त्रहृत् ॥ २३४ ॥
तिथिवासरसंयोगात्कृतशेषाद्धुतासनः ।
३. स्वस्थे कौ कुतले नेत्रे प्रत्यक्षेऽग्नौ स्वरूपके ॥२३५॥
मारयेत्साधकं खस्थो हरते भूतले धनम् ।
प्रत्यक्षोऽग्निः फलं दत्ते ४. शुभमेव स्वरूपगः ॥ २३६ ॥
नित्यनैमित्तिके दुर्गाहोमादौ न विचारयेत् ।
वह्नेस्तु स्थापनं कुर्याद्वैदिकः कल्पमार्गतः ॥ २३७ ॥
तान्त्रिकः कुण्डसंस्कारानष्टादश समाचरेत् ।
मूलमन्त्रेण संपश्येत्प्रोक्षयेदस्त्रमन्त्रतः ॥२३८॥
कुशैः सन्ताडयेत्कुण्डं ह्यस्त्रमन्त्रं ५. पठन् त्रिधा ।
ततः कवचमन्त्रेण कुण्डस्याऽभ्युक्षणं मतम् ॥ २३९ ॥
अस्त्रमन्त्रेण खननं कुण्डस्याङ्गुलमानतः ।
अङ्गुष्ठानामिकाभ्यां तां ६. मृदं शस्त्रेण चोद्धरेत् ॥ २४० ॥
पुनः शुद्धमृदा तं च पूरयेद् हृदयाणुना ।
समीकुर्यात्ततोऽस्त्रेण सेचयेत्कवचेन च ॥ २४१ ॥
काष्ठादिना ७ कुट्टयेत्तमस्त्रेण स्याद्यथा दृढम् ।
कुशैः संमार्जयेत्कुण्डं ततश्च कवचाणुना ॥ २४२ ॥

१. ततस्त्रिभेषु सौरस्य कुर्यान्मन्त्रे तु संशयम् - इति पा. मेरौ ।
२. नसत्यैंह्यकरं चरे - इति पा. मेरौ ।
३. कौ स्वर्गे कुतले तन्त्रे प्रत्यक्षाग्निस्वरूपकम् - इति पा. मेरौ ।
४. भूमौ वै विश्वरूपकः - इति पा. मेरौ ।
५. पठन् त्रिधा - इति पा. उचितः ।
६. मृदमस्त्रेण - इति पा. मेरौ ।
७ तत्तन्मन्त्रेण - इति पा. मेरौ ।

विलेपनं गोमयाद्भिः कवचेनैव कारयेत् ।
कवचेनाग्निसूर्येन्दुकलाः कुण्डे विचिन्तयेत् ॥ २४३ ॥
त्रिसूत्रीकृतसूत्रेण वेष्टयेत्प्रतिमेखलम् ।
त्रिवारं वर्ममन्त्रेण कुण्डपूजां ततश्चरेत् ॥ २४४ ॥
तारश्चामुककुण्डाय आसनं ते [1] नम इति ।
एषोऽर्घ्य इत्याद्यूहैश्च सकलं पूजनं चरेत् ॥ २४५ ॥
नाभेश्च मेखलानां च कुर्यादेवं प्रपूजनम् ।
सञ्चित्तयेत्ततोऽस्त्रेण तत्कुण्डं वज्रवद् दृढम् ॥ २४६ ॥
वह्नेर्ज्वालानिरासाय हृन्मन्त्रेण कुशैस्ततः ।
कुण्डस्य तु चतुर्दिक्षु कुर्यान्मार्गचतुष्टयम् ॥ २४७ ॥
अच्छिन्नाग्रैः कुशैरस्त्रमन्त्रितैः कुण्डभित्तिषु ।
भूतप्रेतादिदृष्टीनामशुचीनां [2] समाचरेत् ॥ २४८ ॥
[3] उच्चाटनमिमे प्रोक्ताः संस्कारा धृतिसंमिताः ।
भवेदनेन विधिना कुण्डस्याध्यक्षपाटनम् ॥ २४९ ॥
वामहोमे तु संस्कारा आद्याश्चत्वार एव हि ।
[4] तिस्रस्तिस्रो लिखेद्रेखाः प्रागुदग्रा हृदाणुना ॥ २५० ॥
स्मृताश्च प्राङ्मुखाग्राणां देवा विष्ण्वीशवासवाः ।
उदङ्मुखाग्ररेखाणां ब्रह्मसूर्येन्दवः क्रमात् ॥ २५१ ॥
विलिखेद्दर्भकाण्डेन वाममार्गेऽस्त्रमन्त्रतः ।
त्रिकोणोपरि षट्कोणं त्रिकोणद्वितयस्य तु ॥ २५२ ॥
विष्ण्वीशवासवादीनां षण्णां तत्र तु पूजनम् ।
वाममार्गे त्विष्टदेव्याः त्रिकोणे पूजनं भवेत् ॥ २५३ ॥
संप्रोक्ष्य प्रणवेनाथ योगपीठं समर्चयेत् ।
तद्विधिं सम्प्रवक्ष्यामि मण्डूकं चिन्तयेत्तले ॥ २५४ ॥

---

[1] नमस्त्विति - इति पा. मेरौ ।
[2] मस्त्वादीनाम् - इति पा. मेरौ ।
[3] उच्चानन - इति पा. मेरौ ।
[4] त्र्यस्रां त्र्यसा - इति पा. मेरौ ।

कालाग्निरुद्रं तस्योर्ध्वं शक्तियुक्तं विचिन्तयेत् ।
तदूर्ध्वे चिन्तयेत्कूर्मं तस्य पृष्ठे वसुन्धराम् ॥ २५५ ॥
श्वेतद्वीपं तत्र चिन्त्यं सुधासिन्धुसुवेष्टितम् ।
मन्दरान् पारिजाताँश्च सन्तानान्हरिचन्दनान् ॥ २५६ ॥
कल्पवृक्षाँश्च तत्रैव चिन्तयेत्पूजयेदपि ।
एतादृशगृहे चिन्त्यं रम्यं मणिमयं गृहम् ॥ २५७ ॥
स्वर्णपीठन्तु तन्मध्ये तस्य पादान्विचिन्तयेत् ।
पुरुषार्थांस्तु धर्मादीन् [1] धर्मो ज्ञानं विरागता ॥ २५८ ॥
ऐश्वर्यमिति चाङ्गानि पीठस्योक्तानि तत्र तु ।
मध्येऽनन्तं तत्र पद्ममानन्दमयकन्दकम् ॥ २५९ ।
संविन्नालं तस्य चोक्ता विकारमयकेसराः ।
प्रकृत्यात्मकपत्राणि पञ्चाशद्वर्णकर्णिकाः २६० ॥
सूर्यस्येन्दोः पावकस्य मण्डलत्रितयं ततः ।
ततः पूर्वादिकाष्ठासु सत्त्वं रजस्तमस्ततः ॥ २६१ ॥
अन्तरात्मा पुनश्चात्मा परमात्मा ततः परम् ।
[2] मायातत्त्वं च ज्ञानात्मा कलातत्त्वं प्रतिष्ठितम् ॥ २६२ ॥
विद्यातत्त्वं परं तत्त्वं योगपीठमितीरितम् ।
स्वाग्रादिप्रादक्षिण्येन तत्पद्मकेशरेषु तु ॥ २६३ ॥
मध्यान्तं पूजयेदेता जयाञ्च विजयां तथा ।
अजिताख्यां [3] चापराजितां नित्यां च विलासिनीम् ॥२६४॥
दोग्ध्रीमघोराञ्च तथा मङ्गलामथ तत्र तु ।
ह्रीं सर्वशक्तिकमलासनाय नम [4] उच्चरन् ॥ २६५ ॥
दत्त्वा पुष्पाञ्जलिं कुण्डे पूजयेद् भुवनेश्वरीम् ।
आवाहनादिपरमीकरणान्तं च पूजयेत् ॥ २६६ ॥

---

१. धर्मज्ञानं विरागताम् - इति ख. मा. पा. ।
२. मायातत्त्वेऽथ ज्ञानात्मा कलात्त्वे प्रतिष्ठितः - इति पा. मेरौ ।
३ चापराञ्च जितां नित्यां विलासिनीम् - इति पा. मेरौ ।
४ उच्यते - इति पा. मेरौ ।

[1] कामोन्मत्तं शिवं तत्र देवीं ऋतुमतीं तथा ।
गाणेश-शैव-शाक्तेषु ध्यायेत्संपूजयेदिति ॥ २६७ ॥
वैष्णवे च तथा सौरे लक्ष्मीं ऋतुमतीं स्मरेत् ।
नारायणस्य संयोगाज्जातमग्निं विचिन्तयेत् ॥ २६८ ॥
[2] आरण्यान्मणितो विप्रगेहाद्वह्निं कुमारिका ।
सुवासिनी [3] वा सद्वस्त्रा कृतशौचा समाहरेत् ॥ २६९ ॥
[4] पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्याच्छरावे वाऽथ नूतने ॥ २७० ॥
दद्यादस्त्रेण पात्रेऽग्निं कवचेन पिधाय च ।
जीर्णे शरावे कापाले भिन्नपात्रे तथोल्मुके ॥ २७१ ॥
नाग्निप्रणयनं कुर्याद् व्याधिहानिभयावहम् ।
क्रव्यादांशं च नैर्ऋत्ये त्यजेदस्त्रेण वह्नितः ॥ २७२ ॥
देवांशं मूलमन्त्रेण स्थापयेदग्रतः सुधीः ।
पश्चात्तमग्निं संस्कारैः संस्कुर्याद् वीक्षणादिभिः ॥ २७३ ॥
प्रदीपकलिकाकारं तेज आवाहयेत्ततः ।
ऐक्यं [5] जाठरवैन्दव्यवह्निभ्यां पार्थिवस्य च ॥ २७४ ॥
स्मृत्वाग्निवीजकेनाथ चैतन्यं योजयेदथ ।
ॐ कारेणाभिमन्त्र्याथ धेनुमुद्रामृतीकृतम् ॥ २७५ ॥
संरक्ष्य च शरेणाथ कवचेनावगुण्ठयेत् ।
ततः संपूज्य कुण्डस्य भ्रामयेत्त्रिप्रदक्षिणम् ॥ २७६ ॥
प्रणवेन ततः स्वस्य संमुखं स्वीयकुण्डके ।
देव्या योनौ तत्र [6] जानुस्पृष्टभूमौ च देशिकः ॥ २७७ ॥

---

[1] कामोन्मत्तां शिवाम् - इति पा. मेरौ ।
[2] आरण्यं विप्रगेहाद् वा दद्यादग्निं कुमारिका - इति पा. मेरौ ।
[3] वामहस्तात् - इति पा. मेरौ । .
[4] · पात्रान्तरं चापिहिते - इति पा. मेरौ ।
[5] ऐक्यं चाथ स्वेष्टदेववह्निभ्याम् - इति पा. मेरौ ।
[6] जानन् स्पृष्टभूमिश्च - इति पा. मेरौ ।

शिवबीजमिति ध्यात्वा निःक्षिपेदाशुशुक्षणिम् ।
देवदेव्योराचमनं मैथुनान्तधिया चरेत् ॥ २७८ ॥
चित्पिङ्गल हन हन पच पच दह दह ।
[1] सर्वज्ञा ज्ञापय स्वाहा तारादिर्जिनवर्णकः ॥ २७९ ॥
अमुं मनुं प्रभाष्यैव कृशानुं ज्वालयेत्ततः ।
मणिबन्धौ समौ कृत्वा करौ तु प्रसृताङ्गुली ॥ २८० ॥
मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ।
इयं सा परमा मुद्रा ज्वालिनी होमकर्मणि ॥ २८१ ॥
अग्निं प्रज्वलितं बन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं सर्वतोमुखम् ॥ २८२ ॥
अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्धुताशनम् ।
मुखेनैव धमेदग्निं मुखादेषोऽभ्यजायत ।। २८३ ॥
प्रादेशमात्रं समिधं मुलाग्रघृतसंप्लुतम् ।
तुष्टिं वह्नौ समुत्क्षिप्य जिह्वायां देवतां न्यसेत् ॥ २८४ ॥
विन्यसेदात्मनो देहे मन्त्री जिह्वा हविर्भुजः ।
लिङ्गपायुःशिरोवक्त्रघ्राणनेत्रेषु सर्वतः ॥ २८५ ॥
वह्निनरार्धीशसंयुक्ताः सादियान्ताः सबिन्दवः ।
वर्णा मन्त्राः समुद्दिष्टा जिह्वानां सप्त देशिकैः ॥ २८६ ॥
कुशैः पलाशादिपर्णैर्वा पवित्रेण केनचित् ।
ततः प्रविन्यसेज्जिह्वां देहे [2] मन्त्री विभावसोः ॥ २८७ ॥
[3] सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ।
सर्वाङ्गेषु च जिह्वास्ता वक्ष्यन्ते त्रिविधात्मिकाः ॥ २८८ ॥
हिरण्या [4] गगना रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपा चातिरक्ता जिह्वा सप्तेति शाक्तिकाः ॥ २८९ ॥

---

[1] सर्वं ज्ञापय स्वाहेति - इति पा. मेरौ ।
[2] मन्त्रैः - इति पा. मेरौ ।
[3] भाललिङ्गा तु मूर्धास्य - इति पा. मेरौ ।
[4] कनका - इति पा. मेरौ ।

पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ।
लोहितानन्तरं श्वेता धूमिनी च करालिका ॥ २९० ॥
रजस्योरसना वह्नेर्विहिता काम्यकर्मसु ।
विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥ २९१ ॥
लोहितान्या करालाख्या काली तामस्य ईरिता: ।
एता: सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभि: ॥ २९२ ॥
स्वस्वनामसमाभा: स्युर्जिह्वा: कल्याणरेतस: ।
अमर्त्यपितृगन्धर्वयक्षनागपिशाचका: ॥ २९३ ॥
राक्षसा: सप्तजिह्वानामीरिता अधिदेवता: ।
जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये ॥ २९४ ॥
जुहूयाद्वाञ्छितां सिद्धिं दद्युस्ता देवता मता: ।
आनलैरर्चिविन्द्वन्ता: सादियान्ताक्षरान्विता: ॥ २९५ ॥
मन्त्री प्रविन्यसेद् भूयो वह्नेरङ्गानि वै क्रमात् ।
सहस्रार्चि: स्वस्तिपूर्ण उत्तिष्ठन् पुरुषस्तथा ॥ २९६ ॥
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरित: ।
न्यसेत्प्रदक्षिणे देहे वह्निमूर्त्यष्टकं क्रमात् ॥ २९७ ॥
१. मूर्धाङ्गपार्श्वकट्यन्धूकटिपार्श्वांशकेषु च ।
प्रणवादिनमोऽन्तास्तु अग्नये पदपूर्वका: ॥ २९८ ॥
जातवेदा: सप्तजिह्वो हव्यवाहस्तृतीयक: ।
अश्वोदरजवैश्वानराख्यकौमारतेजस: ॥ २९९ ॥
विश्वमुखो देवमुखो मूर्तयोऽष्टौ प्रकीर्तिता: ।
प्रदक्षिणक्रमेणैव संसिच्य च ततो जलै: ॥ ३०० ॥
मेखलोपरि संशुद्धै: पुनर्दर्भचतुष्टयै: ।
प्रागग्रैरुदगग्रैश्च हित्वा पूर्वा: परिस्तरेत् ॥ ३०१ ॥

---

१. मूर्धांस्यपार्श्वकट्यंघि - इति पा. भेदै ।

एकमेखलके कुण्डे मेखलाधः परिस्तरेत् ।
द्विमेखले द्वितीयायां मध्यमायां त्रिमेखले ॥ ३०२ ॥
स्थण्डिले सिकतानां तु १ वास्तुभूमौ परिस्तरेत् ।
२ नालमेखलयोर्मध्ये परिधिस्थापनाय च ॥ ३०३ ॥
रन्ध्रं कुर्यात्तथा विद्वान् मध्यमामेखलोपरि ।
पलाशकाश्मरीबिल्वविकङ्कतसमुद्भवान् ॥ ३०४ ॥
एकवृक्षोद्भवानार्द्रान् परिधीन् बाहुमात्रकान् ।
प्राणानायम्य विधिवत् परिस्तीर्य कुशान्तरैः ॥ ३०५ ॥
स्वगृह्योक्तविधानेन वायुदेशाच्च पूर्वतः ।
सुक्स्रुवौ च प्रणीताञ्च प्रोक्षणीपात्रयुग्मकम् ॥ ३८६ ॥
आज्यस्थालीञ्च ३ परिधीनिध्मं च कुशमुष्टयः ।
अधोमुखानि पात्राणि होमद्रव्यं बलिं तथा ॥ ३०७ ॥
गन्धपुष्पाक्षतादीनि सर्वाण्यासादयेदथ ।
तान्यभ्युक्ष्य पवित्रेण ४ चोत्तानानि निधाय च ॥ ३०८ ॥
प्रोक्षणीपात्रयुगलं परिपूर्य शुभाम्बुना ।
दत्त्वाक्षतान् ५ पवित्रञ्च तदुत्पूर्य निधापयेत् ॥ ३०९ ॥
दिश्युत्तरस्यां तत्पात्रं ६ प्रणीता पूर्यते बुधैः ।
ततः किञ्चित्प्रणीताम्बु प्रोक्षण्याधाय तज्जलैः ॥ ३१० ॥
यज्ञसाधनसम्भारं प्रोक्षयेन्मूलमन्त्रतः ।
वृणुयाद् ब्राह्मणं शाक्तं देवतामन्त्रदीक्षितम् ॥ ३११ ॥
कुण्डस्य दक्षिणे भागे वेशयेत्तं कुशासने ।
अमुकामुकगोत्रोऽहममुकामुकगोत्रिणम् ॥ ३१२ ॥

---

१ बाह्यभूमौ - इति पा. मेरौ ।
२ आत्ममेखलयोः - इति पा. मेरौ ।
३ परिधींस्तथैव - इति पा. मेरौ ।
४ चासनानि - इति पाठः मेरौ ।
५ पवित्रांश्च - इति पाठः मेरौ ।
६ प्रणीतेत्युच्यते - इति पाठः मेरौ ।

दीक्षाङ्गभूतहोमेऽस्मिन् ब्रह्माणं त्वां वृणे[१] इति ।
वस्त्रालङ्कारादिकेन वृत्वा तं परिपूजयेत् ॥ ३१३ ॥
कुर्यात्कुशबटुं वाऽपि लभ्यते ब्राह्मणो न चेत् ।
कुण्डमध्ये तु षट्कोणगर्भितं स्वर्णकर्णिकम् ॥ ३१४ ॥
नानाकेशरसंयुक्तं चतुर्द्वारसमावृतम्[२] ॥
चिन्तयेदष्टदलकं चतुरस्रत्रयावृतम् ॥ ३१५ ॥
पूजापीठन्तु तद्वह्नेस्तत्र[३] मण्डूककादिकान् ।
ज्ञानात्मानं योगपीठं सम्पूज्याऽष्टदलेषु च ॥ ३१६ ॥
प्रादक्षिण्येन मध्यान्तं पीतां श्वेतां तथाऽरुणाम् ।
कृष्णां धूम्रां च तीव्रां च पूजयेद् विस्फुलिङ्गिनीम् ॥ ३१७ ॥
रुचिरां ज्वालिनीं चेति सर्वं पीठं प्रपूजयेत् ।
सर्वशक्तिकमलासनाय हृद्द्वादशाक्षरः ॥ ३१८ ॥
समस्तपीठपूजायां वह्नेर्मन्त्र उदाहृतः ।
ततो हुताशनं ध्यायेद्वरस्वस्तिकशक्तिभिः ॥ ३१९ ॥
अभयेन च संयुक्तैर्भुजैः सम्यग्विराजितम् ।
सिन्दूरवर्णपद्मस्थं[४] स्वर्णालङ्कारभूषितम् ॥ ३२० ॥
त्रिनेत्रं च जटामौलिपीतवस्त्रारुणस्रजम् ।
ध्यात्वैवं मनुनानेन पूजयेदुपचारकैः ॥ ३२१ ॥
वैश्वानर जातवेद इहावह लोहिताक्ष ।
सर्वकर्माणि[५] साधये स्वाहान्तः[६] प्रणवादिकः ॥ ३२२ ॥
सप्तविंशत्यक्षरोऽयं मन्त्रः स्याद् वह्निपूजने ।
ततः षट्कोणमध्ये च जिह्वाध्यानं च पूजनम् ॥ ३२३ ॥

---

[१] वृणे त्विति पाठ उचितः ।
[२] तयावृतम् - इति पाठः मेरौ ।
[३] ·मण्डलकादिना - इति पाठः मेरौ ।
[४] बकगस्थगितताम्बरम् - इति ग. मा. पाठः ।
[५] साधय - इति पा. मेरौ
[६] प्रणवादितः - इति पा. मेरौ ।

जिह्वाज्वालारुच: सर्वा वराभयकरास्तथा।
ऐश्यां हिरण्यां स्वर्णाभा शान्तिपौष्टिकसिद्धिदा [1] ॥ ३२४ ॥
वैडूर्यवर्णा कनका प्राच्यां स्तम्भनकार्यकृत्।
विद्वेषे तरुणादित्यनिभा रक्ताग्निकोणगा ॥ ३२५ ॥
कृष्णाञ्जनचयप्रख्या नैर्ऋत्यां मारणक्षमा।
सुप्रभा पद्मरागाभा वारुण्यां [2] धनदा यथा ॥ ३२६ ॥
अतिरक्ता [3] जपाभासोच्चाटे [4] वायुर्दिशागता।
वहुरूपा तु षट्कोणमध्ये षड्वर्णसंयुता ॥ ३२७ ॥
अनेककार्यसंसिद्धिनाशकर्त्री च सा मता।
यथाकार्यं तथा जिह्वा दृश्यते चेत्स्वदिग्गता ॥ ३२८ ॥
ज्वालारूपा तदा सिद्धिर्विषये तु विपर्यय:।
अग्नीशासुरवायव्यदेवाग्रे चापि दिक्षु च ॥ ३२९ ॥
पूजयेच्च षडङ्गानि पत्रे व्यावृत्तिदेवता:।
इन्द्रादीन्सायुधान् पश्चात्सम्पूज्याग्निं [5] पुनर्यजेत् ॥ ३३० ॥
ततश्चाधोमुखौ कृत्वा स्रुक्स्रुवौ तु प्रतापयेत्।
कुशाग्रैस्तु तयोरग्रं मध्यं मध्यैश्च मार्जयेत् ॥ ३३१ ॥
मूलं मूलैस्त्रिधा चैव मार्जयित्वा प्रतापयेत्।
धृत्वा तौ वामहस्तेन प्रोक्षयेत्प्रोक्षणीजलै: ॥ ३३२ ॥
दक्षिणेन कराग्रेण पुन: सन्तापयेच्च तौ।
कुशान् क्षिप्त्वा ततो वह्नौ स्वदक्षे [6] तौ कुशास्तरे ॥ ३३३ ॥
संस्थाप्य स्रुक्स्रुवौ पश्चात् घृतसंस्कारमाचरेत्।
समादाय [7] घृतस्थालीमस्त्रमन्त्रेण सेचयेत् ॥ ३३४ ॥

---

[1] शास्ते पौष्टिकसिद्धिदा - इति ख. ग. मा. पाठ:।
[2] धनदायिका - इति पाठो मेरौ।
[3] · जयाभासा वश्यं - इति पा. मेरौ।
[4] वायुदिशङ्गता - इति पा. मेरौ।
[5] सम्पूर्णाग्निम् - इति पाठ: मेरौ।
[6] तु - इति पा. मेरौ।
[7] मन्त्रेण सेचयेत्तत: - इति पा. मेरौ।

घृतं तत्र समापूर्य वीक्षणादिसुसंस्कृतम् ।
वायव्ये बाह्यतोऽङ्गारान्कृत्वा तेषु हृदा न्यसेत् ॥ ३३५ ॥
तापनन्तु समुद्दिष्टं कुशद्वयमतः क्षिपेत् ।
आज्यप्रज्वलिते वह्नौ विन्यसेत्तद् घृतान्वितम् ॥ ३३६ ॥
पवित्रीकरणं दर्भद्वयेन ज्वालिते हृदा ।
वर्मणाज्यं च नीराज्यवह्नौ दर्भद्वयं क्षिपेत् ॥ ३३७ ॥
अभिद्योतनमेतत्स्यादुद्योतनमथोच्यते ।
कुशं प्रज्वलितं [1] चाज्यं [2] दर्शयेत्तद्हृदा क्षिपेत् ॥३३८॥
वह्नावुद्वास्य च घृतमङ्गारानग्निषु क्षिपेत् ।
अपः संस्पृश्य मन्त्रज्ञः कुर्यादुत्प्लवनं ततः ॥ ३३९ ॥
अस्त्रमन्त्रं जपन्मन्त्री कुशौ प्रादेशमात्रकौ ।
अङ्गुष्ठानामिकाभ्याञ्च गृहीत्वा घृतमुत्प्लवेत् ॥ ३४० ॥
ततो दृढं कुशाभ्यान्तु स्वाभिमुख्येन संप्लवेत् ।
घृतं तत्स्यात्संप्लवनं षट् संस्कारा इतीरिताः ॥ ३४१ ॥
उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवम् ।
अधमं छागलीजातं निषिद्धं त्वेडकादिजम् ॥३४२॥
क्रीतं यदापणे चाज्यं स्वादु चेत् तत्तु गव्यवत् ।
कुशद्वयं घृते न्यस्य ततः प्रादेशसम्मितम् ॥ ३४३ ॥
सग्रन्थी कृत्वा साग्नी द्वौ शुक्लकृष्णौ विचिन्तयेत् ।
पक्षौ वाम इडां दक्षे पिङ्गलां मध्यत स्वतः ॥ ३४४ ॥
सुषुम्णां संस्मरेन्मन्त्री ततो होमं समाचरेत् ।
दक्षभागात्स्रुवेणाज्यं प्रगृह्णीयाद् हृदाणुना ॥ ३४५ ॥
दक्षनेत्रे हुताशस्याग्नये स्वाहेति होमयेत् ।
गृहीत्वाऽऽज्यं वामभागाद्धृदा वामेऽग्निलोचने ॥ ३४६ ॥

[1] चोद्दय - इति मेरौ पाठः, चाचे - इति ग. मा पाठः ।
[2] दर्शयन् - इति ग. मा. पाठः ।

हुनेत् सोमाय स्वाहेति त्यागः [1] सर्वत्र संमतः ।
हृन्मन्त्रेण गृहीत्वाऽऽज्यं मध्यतो मध्यलोचने ॥ ३४७ ।
हुनेत्तस्याग्निसोमाभ्यां स्वाहेति च तृतीयकाम् ।
दक्षभागात्पुनस्त्वाज्यं हृन्मन्त्रेण समाहरेत् ॥३४८॥
अग्निवक्त्रेऽग्नये स्विष्टकृते स्वाहेति होमयेत् ।
सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः ॥ ३४९ ॥
जुहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः ।
गर्भाधानादिका वह्नेः समुद्वाहावसानिकाः ॥ ३५०॥
शुभे कर्मणि कर्तव्या आज्याहुत्यष्टकैः[2] क्रियाः ।
प्रणवं पूर्वमुच्चार्य कर्मनाम समुच्चरेत् ॥ ३५१ ॥
सम्पादयामि स्वाहेति सर्वकर्मस्वयं विधिः ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं चरेत् ॥ ३५२ ॥
जातं वागेश्वरीगर्भात्प्राग्वद् ध्यायेद्धुताशनम् ।
जातकर्म ततः कृत्वा नालच्छेदं समाचरेत् ॥ ३५३ ॥
सूतकं शोधयित्वाऽथ कुर्यान्नाम यथाविधि ।
तृप्तये यस्य यदेतस्याग्निस्तन्नामपूर्वकः ॥ ३५४ ॥
चौलोपनयनं वह्नेर्महानामव्रतं[3] तथा ।
महाव्रतं चोपनिषद्व्रतं गोदानमेव च ॥ ३५५ ॥
समावर्तनमुद्वाहः शाक्ते वाग्भवपूर्वकाः ॥
ततश्च वह्नेः पितरौ देवदेव्यादिकौ तथा ॥ ३५६ ॥
पूजयित्वा विसृज्याथ मूलाग्रेषु घृतप्लुताः ।
समिधो निक्षिपेत् पञ्च वह्नावथ च पूर्ववत् ॥ ३५७ ॥
[4] सबीजरसनानाम्ना चैकैकामाहुतिं हुनेत् ।
ततश्चाङ्गानि जुहुयाद् वह्नेर्मूर्त्यष्टकं तथा ॥ ३५८ ॥

---

१. सर्वव्रतो मम - इति पा. मेरौ ।
२ प्रिया - इति पा. मेरौ ।
३ महानाम्नीव्रतम् - इति ख. मा. पाठः ।
४ सबीजस्वस्वनाम्ना - इति मेरौ पाठः ।

इन्द्रादिलोकपालाश्च आयुधानि ततः परम्।
मन्त्रेणोङ्कारपूर्वेण स्वाहान्तेन विचक्षणः ॥ ३५९ ॥
स्वाहावसाने जुहुयात् ध्यायन्वै मन्त्रदेवताम्।
चतुर्वारं स्रुवेणाज्यं गृहीत्वा स्रुचि निक्षिपेत् ॥ ३६० ॥
तेनैव तां विधायाग्नौ हुनेत्तिष्ठन् गुरुः स्वयम्।
वौषडन्तेन वह्नेस्तु मनुना संपदे ततः ॥ ३६१ ॥
जिह्वायां मध्यसंख्यायां मन्त्री ज्वालावली ततः।
ताराद्यैर्दशभिर्भेदैः पूर्व-पूर्वसमन्वितैः ॥३६२॥
मनुना गाणपत्येन हुनेत् पूर्वं दशाहुतीः।
जुहुयाच्च चतुर्वारं समस्तेनैव तेन तु ॥३६३॥
सम्पूज्य देवतापीठं वह्नौ सम्यक् ततो गुरुः।
अग्निरूपधरां तत्र पूजयेदिष्टदेवताम् ॥३६४॥
आज्येन चाग्निमनुना पञ्चविंशतिसंख्यकम्।
हुनेन्मन्त्री चाग्निमुखे वक्त्रैकीकरणं त्विदम् ॥३६५॥
आत्माग्निदेवतानाञ्च चिन्तयन्नैक्यमात्मवित्।
एकादशाथ मूलेन हुनेदाऽऽज्येन चाहुतीः ॥३६६॥
नाडीसन्धानमेतद्धि प्रोक्तं देशिकसत्तमैः।
अङ्गप्रभृत्या वृत्तीनामेकैकामाहुतिं हुनेत् ॥३६७॥
पूर्वादिदिक्षु कुण्डेषु सर्वेष्वपि यथाविधि।
एवं वह्निं सुसंस्कृत्य चरुं गोपयसा पचेत् ॥३६८॥
न वै ताम्रादिके पात्रे क्षालिते च शराणुना।
मूलाणुनाभिमन्त्र्याथ तण्डुलान् शालिसंभवान् ॥३६९॥
तिथिप्रसृतिमानेन शराणुं प्रजपन् क्षिपेत्।
प्रक्षालितेन पात्रेण यावद्वक्त्रं पिधाय च ॥३७०॥
हूंमन्त्रेण ततो मूलमनुना देशिकोत्तमः।
पचेद् गुरुः प्राङ्मुखस्तस्मिन्नेतमभिधारयेत् ॥३७१॥
मूलेन स्रुवसंस्थेन घृतेनाथावतारयेत्।
हूंमन्त्रेणास्त्रसंजप्ते कुशास्तीर्णे विभज्य तम् ॥३७२॥

त्रेधा त्वेकं देवतायै परं वह्नौ निवेदयेत् ।
शिष्टं शिष्येण सहितो गुरुर्भुञ्जीत मन्त्रवित् ॥३७३॥
प्रादेशमात्रं द्विर्जप्तं यथोक्तं दन्तधावनम् ॥
शिष्याय दद्यात् स रदान् विशोध्य क्षालितं त्यजेत् ॥३७४॥
आचान्तमत्र च यथाविधि तं शिखायां
वन्धैः सुरक्षितममुं प्रविधाय मन्त्री ।
वेद्यां शयीत कुशसंस्तरणे रजन्यां
शिष्येण सार्धममुनागदितोऽधिवासः ॥३७५॥

## दीक्षादिनकृत्यम्

समुत्थायोषसि पुनः स्नानसन्ध्यादिकं चरेत् ।
गुरुः शिष्यो ऋत्विजश्च गच्छेद्यागगृहं प्रति ॥३७६॥
सर्वे ते स्वस्वकुण्डेषु जुहुयुः सघृतैस्तिलैः ।
पुनः साध्येन मनुना ह्यष्टोत्तरसहस्रकम् ॥३७७॥
अप्रदीप्ते न होतव्यं मध्यमेनाप्यनिन्दिते ।
प्रदीप्ते लेलिहानेऽग्नौ होतव्यं कर्मसिद्धये ॥३७८॥
अधोमुखः सधूमे तु जुहुयाद् यो हुताशने ।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥३७९॥
योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥३८०॥
अग्नेः कर्णे होमतो व्याधिवाधा
नेत्रेऽन्धत्वं नासिकायामथाधिः ।
द्रव्यच्छेदो मस्तके स्यान्मुखान्त-
र्होमं कुर्यात् तेन नित्यं विपश्चित् ॥३८१॥
यत्र काष्ठं तत्र श्रोत्रे यत्र धूमस्तु नासिके ।
यत्राल्पज्वलनं नेत्रे यत्र भस्म तु तच्छिरः ॥३८२॥
यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्तिता ।
वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु देशिकः ॥३८३॥
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ।

स्वर्ण-सिन्दूर-वालार्ककुङ्कुमक्षौद्रसन्निभः ॥३८४॥
सुवर्णैरेव सौवर्णः शोभनः परिकीर्तितः ।
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥३८५॥
नागचम्पकपुन्नागपाटलायूथिकानिभः ।
पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलुसन्निभः ॥३८६॥
पावकस्य शुभो गन्ध इत्युक्तस्तत्त्ववेदिभिः ।
प्रदक्षिणास्त्यक्तकम्पाश्छत्राभाः शिखिनः शिखाः ॥३८७॥
शुभदा य ञ्जमानस्य राज्यस्यापि विशेषतः ।
कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ॥३८८॥
कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् ।
श्वेतो राज्यं निहन्त्याशु वायसस्वरसन्निभः ॥३८९॥
खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् ।
पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ॥३९०॥
छिन्नवृत्ता शिखा कुर्यान्मृत्युं धनपरिक्षयम् ।
शुकपक्षनिभो धूमः पारावातसमप्रभः ॥३९१॥
हानिन्तुरगजातीनां गवाञ्च कुरुतेऽचिरात् ।
एवं विधेषु दोषेषु प्रायश्चित्ताय देशिकः ॥३९२॥
मूलेनाज्येन जुहुयात्पञ्चविंशतिमाहुतीः ।
शिष्यं स्नातं पञ्चगव्यं पाययेन्मन्त्रवित्तमः ॥३९३॥
कुण्डस्याभ्यासमानीय दिव्यदृष्ट्या विलोकयेत् ।
हृत्पुण्डरीकाच्चैतन्यं तस्यात्मनि नियोजयेत् ॥३९४॥
आचार्यस्तत्र चाह्वानं षड्विधं शोधयेत् क्रमात् ।
शोधनं नाम तत्त्वानां कारणैकत्वचिन्तनम् ॥३९५॥
वर्णादीनां कलानाञ्च तासां चिदैक्यचिन्तनम् ।
[1] गुरुर्वह्निः प्रविहरेत् [2] संस्कृतेपूक्तवर्त्मना ॥३९६॥

---

[1] गुर्व्वाह्नम् - इति पा भेरी ।
[2] संस्कृत तूक्तवर्त्मना - इति पा. भेरी ।

सर्वर्त्विजश्चन्दनाद्यैः संपूज्य प्रोक्तदेवताम् ।
सर्वावरणसंयुक्तां मूलेन जुहुयुस्ततः ॥३९७॥
पञ्चविंशतिधा सर्पिःसंयुतेन पयोऽन्धसा ।
स्रुवेणाज्यं समित्पाण्या स्रुचा शेषं करेण तु ॥३९८॥
तत्र दिव्येन होतव्यं [1] तीर्थेनाज्येन वा तथा ।
दद्याद्बलिं गन्धपुष्पधूपपूर्वकमादरात् ॥३९९॥
नक्षत्राणां सवाराणां राशीनाञ्च पृथक् पृथक् ।
देवताभ्यः पदं प्रोक्तं दिवानक्तं वदेत्तथा ॥४००॥
[2] चारिभ्यश्चाथ सर्वेभ्यो भूतेभ्यश्च नमो वदेत् ।
हुनेन्महाव्याहृतिभिस्ततो देशिकसत्तमः ॥४०१॥
अङ्गप्रभृत्या वृत्तीनां हुनेद् भूयो घृतेन वै ।
ब्रह्मार्पणाख्यमन्त्रेण सर्वकर्मच्छिदे सुधीः ॥४०२॥
जुहुयादाहुतीरष्टौ केवलाज्येन मन्त्रवित् ।
हुत्वा पूर्णाहुतिं मन्त्री स्तुत्वा मूलाणुना ततः ॥४०३॥
अग्निं संप्रार्थ्याग्निसाङ्गमन्त्रेणैकाहुतिं हुनेत् ।
सर्पिषा स्रुवमापूर्य पुष्पं चोपर्यधोमुखम् ॥४०४॥
स्रुगुपरि स्रुवं दत्वा पुष्पं तत्र प्रपातयेत् ।
सव्योत्तरकराभ्यां च सम्पुटाभ्यां च [3] शेषवत् ॥४०५॥
सङ्गृह्योत्थाय संलग्नौ नाभौ तिर्यङ्निधाय च ।
पूर्णादर्वीतिमन्त्रेण मूलेन [4] वसुसंयतः ॥४०६॥
दद्यात्पूर्णाहुतीस्तिस्रः सर्वकामप्रपूरणीः ।
श्रोत्रियस्यैतदुद्दिष्टमन्यः पूर्णाहुतिं चरेत् ॥४०७॥

---

[1] तीर्थेणार्येण - इति पा. मेरौ ।
[2] वारंभ्यश्चाथ - इति पा. मेरौ ।
[3] च सुसंयतः - इति पा. मेरौ ।
[4] शङ्कय्यतः - इति पा. मेरौ ।

मूलेन वौषडन्तेन स्वाहान्तेन तु वामगः ।
होमन्तु १ मांसमद्याभ्यां २ तीर्थाज्याभ्यां च पूर्णताम् ॥४०८॥
कुर्यात्स्वाहान्तं मूलेन फलाज्येन तु वैदिकः ।
दक्षपादं पुरस्कृत्य दक्षः पूर्णाहुतिं चरेत् ॥४०९॥
शक्तिहोमे वामपादं वाममार्गी च सर्वतः ।
पुनः सम्पूज्य गन्धाद्यैर्मूलमन्त्रेण मन्त्रवित् ॥४१०॥
कुण्डादुद्वास्य चाचार्यो देवतां कलशे न्यसेत् ।
साङ्गां सावरणां तत्र पूजयेच्च यथाविधि ॥४११॥
सप्तव्याहृत्यग्निजिह्वाङ्गमूर्तीनामथैकिकाम् ।
दुग्धेन परिषिच्याग्निं प्रार्थयीत ततो गुरुः ॥४१२॥
भो भो वह्ने महाशक्ते सर्वकामप्रदायक ।
कर्मान्तरेऽपि संप्राप्ते सान्निध्यं कुरु सादरम् ॥४१३॥
इति मन्त्रेण संप्रार्थ्य वह्निमुद्वासयेदपि ।
ततो ब्राह्मणमुद्वास्य ब्राह्मणाय ३ प्रदापयेत् ॥४१४॥
द्वात्रिंशत्पलमात्रेण निर्मितं ताम्रपात्रकम् ।
तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम् ॥४१५॥
दद्याद् विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम् ।
ततः परिस्तरानग्नौ परिधीन् ४ निक्षिपेदिति ॥४१६॥
नित्यनैमित्तिके तांस्तु क्षिपेद्देशिकसत्तमः ।
वस्त्रेण नेत्रमन्त्रेण शिष्यनेत्रं निवध्यते ॥४१७॥
कुण्डाद्धस्तं समादाय नयेन्मण्डलसन्निधौ ।
सुमनोभिः प्रपूर्यास्य ह्यञ्जलीः ५ क्षेपयेत्पदे ॥४१८॥

---

१ मद्याभ्याम् - इति पा. मंरौ ।
२ तीर्थांह्स्वाभ्याम् - इति पा. मंरौ ।
३ प्रपादयेत् - इति पा. मंरौ ।
४ प्रक्षिपेत् तु - इति ख. ग. मा पा. ।
५ घटे - इति ख. मा. पा. । घट - इति पा. मंरौ ।

मूलमन्त्रोच्चारपूर्वं देवताप्रीतये गुरुः ।
नेत्रवन्धमपास्योपवेशयेत्कुशसंस्तरे ॥४१९॥
ततश्च पाठयेच्छिष्यं मन्त्रमेनं गुरूत्तमः ।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥४२०॥
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।
अन्ते पूजाविधानेन [1] संहरेज्जनयेच्चतम् ॥४२१॥
शिष्योऽथ [2] तस्य मन्त्रस्य न्यासान् देहे परिन्यसेत् ।
पञ्चोपचारैरभ्यर्च्य [3] कलशस्थेष्टदेवताम् ॥४२२॥
यथोक्तवर्त्मना तत्र [4] सकलीकृतिमाचरेत् ।
अथोपवेशयेच्छिष्यं भूषितं मण्डलान्तरे ॥४२३॥
कुम्भास्यस्थसुरद्रूँश्च मूर्ध्नि न्यस्य शिशो गुरुः ।
अथ पञ्चनिनादैश्च विप्राणां वचनैः सह ॥४२४॥
सुस्थितं नियतात्मानं सिञ्चेत्कलशपुष्पकैः ।
येन प्रकारेण पुरा योजितश्च सुधामयैः ॥४२५॥
तोयैरक्षरसंयुक्तैः [5] घटस्थेनैव वर्त्मना ।
अथ शिष्यञ्चाभिषिञ्चेदाशु संपदवाप्तये ॥४२६॥
गृहीत्वाभ्यर्चितं पूर्वं [6] करकं ह्यस्त्ररूपिणम् ॥
तत्तोयैरभिषिञ्चेत्तं रक्षायै देशिकोत्तमः ॥४२७॥
जलेन शिष्टेन शिशुं गुरुराचामयेत्ततः ।
[7] तद्देवतास्वरूपेण विदध्यात्सकलीकृतिम् ॥४२८॥

---

[1] हरेत् - इति पा. मेरौ ।

[2] दत्तस्य - इति पा. मेरौ ।

[3] कलशे स्वेष्टदेवताम् - इति पा. मेरौ ।

[4] सकलाकृतिमाचरेत् - इति पा. मेरौ । सकलाकृतमाचरेत् - इति ग. मा. पा. ।

[5] घटैस्तैनैव - इति पा. मेरौ ।

[6] मन्त्ररूपिणम् - इति पा. मेरौ ।

[7] तद्देवतास्वरूपम् - इति च मेरा. ।

वाससी विमले रम्ये परिधायाऽऽज्ञया गुरोः ।
आचम्य निकटे १ तस्य सम्यक्तस्य मनुं त्रिशः ॥४२९॥
दक्षकर्णे वदेद्विद्वान्विप्रायोङ्कारपूर्वकम् ।
२ अन्येभ्यस्तु वदेदेवमेव मन्त्रं विचक्षणः ॥४३०॥
दक्षकर्णे त्रिशो विद्यामेकोच्चारेण चोच्चरेत् ।
एष विधिर्द्विजातीनां स्त्रीशूद्राणाञ्च वामतः ॥४३१॥
स्वयं ज्योतिर्मयीं विद्यां गच्छन्तीं भावयेद् गुरुः ।
आगतां भावयेच्छिष्यो ३ नऽसोस्मीति विशेषतः ॥४३२॥
अष्टोत्तरशतं शिष्यः प्रजपेद् गुरुणोदितम् ।
अष्टाविंशतिवारं वा ह्यष्टकृत्वोऽथ वा जपेत् ॥४३३॥
गुरुदेवात्ममन्त्राणामैक्यं शिष्यो विभावयेत् ।
प्रणामं गुरवे कुर्यात्साधको भक्तिमान् मुहुः ॥४३४॥
साष्टाङ्गश्चाथ पञ्चाङ्गः पूजाकर्मसु संयतः ।
४ हस्ताभ्यां चरणाभ्याञ्च जानुभ्यां वक्षसा तथा ॥४३५॥
मूर्ध्ना दृष्ट्या तथा ५ वाचा चित्तेनाष्टाङ्ग ईरितः ।
६ हस्तजानुशिरोवाग्वक्षोभिः पञ्चाङ्ग ईरितः ॥४३६॥
आचार्याज्ञां ततः कुर्यात्सद्यः शिष्यो ७ विचार्यते ।
अलङ्कारांश्च वासांसि दद्यादृत्विग्भ्य आदरात् ॥४३७॥
ईश्वरार्पणवुद्धया तु द्विजाशीर्भिश्च नन्दितः ।
प्रदद्याद् गुरवे शिष्यः स्वधनार्धं तदर्धकम् ॥४३८॥
दशांशं वा प्रदद्याच्च वित्तशाठ्यविवर्जितः ।
गोभूहिरण्यविपिनगृहक्षेत्रादिकं तथा ॥४३९॥

---

[१] तस्या गच्छंन्त्सम्यड्मनुं ततः - इति पा. मंरौ ।
[२] अन्येयान्तु - इति पा. मंरौ ।
[३] देवोऽस्मीति - इति पा मंरौ ।
[४] हस्ताभ्यां चैव जानुभ्यां प्रणामो वक्षसा तथा - इति पा. मंरौ ।
[५] चैव - इति पा. मंरौ ।
[६] दृष्ट्या - इति पा. मंरौ ।
[७] विचार्यं च - इति पा. मंरौ ।

अक्लेशादन्नवस्त्रादि दद्याद् वित्तानुसारत: ।
प्रकारान्तरमालम्ब्य गुरुं यत्नेन तोषयेत् ॥४४०॥
तदधीनमना नित्यं तच्चिन्तनपरायण: ।
तत्पादाब्जरजोभूषो भवेत्साधकसत्तम: ॥४४१॥
ततो नानाविधैर्भक्ष्यैर्लेह्यचोष्यैस्तथा परै: ।
ब्राह्मणान् भोजयेत्सम्यक् प्रदद्याद् भूरिदक्षिणाम् ॥४४२॥
एवं क्रियामयी दीक्षा सम्पद्दात्री निरूपिता ।
राज्ञां धनाढ्यवैश्यानां विप्राणां व्यवसायिनाम् ॥४४३॥

**वीराणां विशेष: –**

कुलद्रव्यै: समभ्यर्च्य कुलचक्रं विधानत: ।
शिष्याय दर्शयेत्सम्यग् दीक्षेयं कौलिकी मता ॥४४४॥
ऋष्यादिसंहितामेनां लिखित्वा भूमिमध्यगाम् ।
पुष्पादिना समभ्यर्च्य शिष्यायाथ प्रदर्शयेत् ॥४४५॥
यदि शिष्ये महाप्रीतिस्तदा कर्णे वदेद् गुरु: ।
ततोऽप्यतितरां शिष्यो गुरोश्चेद् भक्तिभाजन: ॥४४६॥
तदा गण्डूषपूर्वां हि दद्यादेनां गुरूत्तम: ।
निर्विकल्पोऽपि शिष्यस्तद्गृह्णीयाद्धृष्टमानस: ॥४४७॥
तदभावे न सिद्धि: स्याद्देवता-शापमाप्नुयात् ।
सिद्धिद्रव्यं मुखे पूर्य पञ्चव्योमामृतान्वितम् ॥४४८॥
अभिषिञ्चेत् प्रियं शिष्यं गण्डूषाख्योऽयमीरित: ।
अयं दीक्षाक्रम: प्रोक्तो भोगयुक्सिद्धिमिच्छताम् ॥४४९॥

**कुलस्त्रीणां विशेष: –**

वीरकान्तां समानीय सुशीलां सुयशस्विनीम् ।
कुलभक्तं गुरुं प्राप्य दीक्षयेत् कुलदीक्षया ॥४५०॥
परानन्दरसाघूर्णलोचनां कुलजां सतीम् ।
ताम्बूलपूगपूर्णास्यां गुरुवाक्यरत: सुखी ॥४५१॥
निजपुत्रीवदाचार्यस्तद्भालपट्टके लिखेत् ।
शक्तिचित्रं त्रिधाऽऽवृत्य लिखेत्कामकलां तत: ॥४५२॥

तन्मध्ये देयमन्त्रेण दर्भितं नाम लाञ्छनम् ।
तत्र देवीं समावाह्य धृत्वा तत्र प्रपूज्य च ॥४५३॥
ततस्तत्पुत्रिकाकर्णे ऋषिच्छन्दः समन्वितम् ।
मूलमन्त्रं त्रिधाऽऽवृत्य कथयेद् वामकर्णके ॥४५४॥
अद्यप्रभृति पुत्रि त्वं कुलदीक्षार्चने रता ।
यथोपदिश्य विधिना सामरस्यं समानयेत् ॥४५५॥
इत्यनुज्ञां गुरोर्लब्ध्वा दण्डवत्प्रणमेद् भुवि ।
त्राहि नाथ कुलाचार पद्मिनीपद्मनायक ॥४५६॥
त्वत्पादाम्भोरुहच्छायां मूर्ध्नि देहि यशोधन ।
गुरवे दक्षिणां दद्यात्ताम्बूलारुणलोचना ॥४५७॥
स्वकुलं परमीकृत्य यथोद्दिष्टं समर्चयेत् ।
अङ्गावरणपूजादौ यदि न क्रमते कुलम् ।४५८॥
तदा मूर्ध्नि गुरुं ध्यात्वा कुलामृतरसेन तु ।
तर्पयित्वा कुलं ध्यात्वा जपेन्मन्त्रं निराकुलम् ॥४५९॥

**वर्णमयी दीक्षा –**

अथ वर्णमयीं दीक्षां शृण्वन्तु ज्ञानदायिनीम् ।
[1] पुंप्रकृत्यात्मकत्वं च वर्णानां समुदीरितम् ॥४६०॥
[2] तादृक्त्वं च शरीरस्य प्रोक्तमेवास्ति देशिकैः ।
ततस्तनौ शिशोर्न्यस्येद्वर्णान्देशिकसत्तमः ॥४६१॥
संहरेद्वैपरीत्येन [3] वर्णान्तस्थानसंस्थितान् ।
देशिकेन्द्रः स्वसामर्थ्यादाज्ञया [4] देवतात्मनः ॥४६२॥
देवतात्मा भवेच्छिष्यस्तदा संलीनतत्त्वकः ।
ततस्तु शिष्यचैतन्यं परमात्मनि योजयेत् ॥४६३॥

---

[1] यत्प्रकृत्यात्मतत्त्वं च - इति पा. भेरौ ।
[2] तादृक्तत्त्वम् - इति पा. भेरौ ।
[3] स्वस्थान - इति पा. भेरौ ।
[4] दापयेद्देवतात्मनाम् - इति पा. भेरौ ।

तान्वर्णांस्तत उत्पाद्य न्यसेच्छिष्यशरीरके ।
तस्मिंश्च सृष्टिक्रमतस्तच्चैतन्यं पुनर्न्यसेत् ॥४६४॥
भवेच्छिष्यो देवतात्मा नित्यानन्दात्मकः शिवः ।
ज्ञानदार्णमयी दीक्षा कथिता सर्वसिद्धिदा । ४६५॥
अथ वक्ष्ये कलादीक्षामणिमाद्यष्टसिद्धिदाम् ।
वेदे पञ्चकला दीक्षा दक्षेष्टत्रिकला मता ॥४६६॥
कुपञ्चाशत्कला वामे सिद्धमन्त्रगुरोस्तु सा ।
ग्राह्या द्रुतं सिद्धिकर्त्री [1] विपरीते विपर्ययः ॥४६७॥
कलानिवृत्तिप्रमुखा भूतानां पञ्च चेरिताः ।
शिष्यकाये भूतमये वेधयेत्ताः क्रमात्सुधीः ॥४६८॥
पादादिजानुपर्यन्तं निवृत्तिः संस्थिता कला ।
जान्वोः सकाशादानाभि प्रतिष्ठाख्या कला स्थिता ॥४६९॥
नाभितः कण्ठपर्यन्तं विद्याख्या संस्थिता कला ।
कण्ठतो ह्यालललाटान्तं शान्त्याख्या संस्थिता कला ॥४७०॥
भालाच्छिरोऽवधि प्रोक्ता शान्त्यतीता कला तथा ।
संहृतिक्रमतो विद्वान्वेधयेत् स्थानतोऽन्यतः ॥४७१॥
स्थाने स्वीया तया चैव दीक्षा पञ्चकला स्मृता ।
अष्टत्रिंशत्कला दीक्षा युक्तिं शृण्वन्तु देवताः ॥४७२॥
क्रमेण कादिका वर्णा यत्र द्वादश संस्थिताः ।
विलोमा मादिका यत्र तत्र स्थानद्वये कलाः ॥४७३॥
भावनीयास्तु सूर्यस्य षोडशाशु विधोस्तथा ।
यकारादिस्थले वह्नेर्भावनीयाः कला दश ॥४७४॥
ततो वर्णकलानान्तु वर्णस्थानाच्च संहृतिः ।
पुनश्च जनयेच्छिष्यं कलादीक्षाविधिस्त्वयम् ॥४७५॥

---
[1] विपरीता (विपर्यया) - इति पा. मेरौ ।

## वेधमयी दीक्षा -

कौलिके वाममार्गे च [1] वेधदीक्षा फलप्रदा ।
अन्यास्ता दक्षिणे मार्गेऽन्यथा तु पतितो भवेत् ॥४७६॥
दीक्षां [2] वेधमयीं वक्ष्ये यां लब्ध्वा [3] त्यजते जनः ।
तत्कालमेव संसारं जीवन्मुक्तोऽभिजायते ॥४७७॥
मूलाधारे तु शिष्यस्य ध्यायेत्कञ्जं चतुर्दलम् ॥
तस्या मध्ये त्रिकोणं तु तन्मध्ये चापि कुण्डलीम् ॥४७८॥
[4] त्रिरावर्त्तमयीं देवीं विद्युत्पुञ्जस्वरूपिणीम् ।
महादेवमयीं [5] साक्षाज्ज्ञानमात्रशरीरिणीम् ॥४७९॥
अणोरणीयसीं देवीं चक्रषट्कप्रभेदिनीम् ।
सुषुम्णावर्त्मना दिव्यां यान्तीं शिवगृहं प्रति ॥४८०॥
सान्तवादिदलस्थार्णान् पद्मस्थाने समाहरेत् ।
षड्दले कमले तन्तु लान्तवाद्यर्णयुग्दले ॥४८१॥
स्वाधिष्ठाने गुरुः सम्यग्योजयित्वा तु वेधयेत् ।
तदर्णानानयेद् [6] विष्णौ विष्णुं तन्नाभिपङ्कजे ॥४८२॥
फान्तडाद्यर्णसंयुक्ते दिग्दले वेधयेत्स्वयम् ।
वर्णान् तान्योजयेद् रुदे रुद्रं तं हृत्सरोरुहे ॥४८३॥
कान्तठाद्यर्णपत्राब्जैर्वेधयेदीश्वरे स्वयम् ।
वर्णान्तानाहरेदस्मिन् कण्ठपद्मे च तं तथा ॥४८४॥
कलादलमये पद्मे स्वरान्संयोज्य यत्नतः ।
सदाशिवेऽथ संयोज्य ताँस्तद्भूमध्यपद्मके ॥ ४८५ ॥

---

[1] वेददीक्षा - इति पा. मेरौ ।
[2] वेदमयीम् - इति पा. मेरौ ।
[3] सुखदाञ्जनः - इति पा. मेरौ ।
[4] त्रिरावर्णमयीम् - इति पा. मेरौ ।
[5] ज्ञानमात्रेण रूपिणीम् - इति पा. मेरौ ।
[6] बिन्दौ बिन्दुम् - इति पा. मेरौ ।

द्विदले हक्षसंयुक्ते वेधयित्वाऽथ देशिकः ।
शक्त्या सहैवमात्मानं नयेत्परशिवावधि ॥४८६॥
देशिकाज्ञावशाच्छिष्यो दग्धाज्ञानस्तदा क्षितौ ।
पतेदवाप्तविज्ञानः सर्वज्ञो जायते ततः ॥४८७॥
सदाशिवः स्वयं भूयात्सत्यमेव न संशयः ।
इयं ज्ञानप्रदा प्रोक्ता दीक्षा वेधात्मिका शुभा ॥४८८॥

**स्पर्शमयी दीक्षा –**

गुरुः स्वस्य गुरुं ध्यायेत्स्वहस्ते शिवरूपिणम् ।
मूलविद्यां षडङ्गं च मातृकादिमनुं[1] जपेत् ॥४८९॥
शिष्यस्य मस्तके दत्त्वा कृपया दक्षिणं करम् ।
पश्चादुपदिशेत्प्रोक्ता स्पर्शदीक्षाऽतिसिद्धिदा ॥४९०॥
सदाशिवे तु चिद्रूपे गुरुश्चित्तं निधापयेत् ।
मन्त्रान्समस्तान्तज्जातान्[2] ध्यायन् रूपं तदात्मकः ॥४९१॥
जातो गुरोश्च कृपया केवलोऽहं सदाशिवः ।
इति ध्यायन्नुपदिशेद्वाग्दीक्षा त्वियमीरिता ॥४९२॥
निमील्य नयने ध्यात्वा परमात्मनि देवताम् ।
तद्दर्शनानन्दपूर्णनेत्राभ्यां वीक्षयेद् गुरुः ॥४९३॥
शिष्यं प्रसन्नचित्तः सन्पश्चादुपदिशेदिति ।
मन्त्रासिद्धस्य सिध्यै स्याद्दृग्दीक्षैयं फलप्रदा ॥४९४॥
गुरोरालोकमात्रेण भाषणात्स्पर्शनादपि ।
सद्यः सञ्जायते ज्ञानं सा दीक्षा शाम्भवी स्मृता ॥४९५॥
भुक्तिमुक्तिप्रसिद्ध्यर्थं परीक्ष्य विधिवद्गुरुम् ।
पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत् ॥४९६॥

---

[1] जपन् - इति ग. मा. पा. ।
[2] स्वयं ध्यायेत् - इति पा. उचितः ।

**उपदेशः -**

महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
युगे कृतादौ कर्तव्या उपदेशाः कलौ युगे ॥४९७॥
चन्द्र-सूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥४९८॥

**कौलिकोपदेशः -**

न्यासजालं विधायादौ शङ्खपात्रादिस्थापनम् ।
कृत्वा देवीं समभ्यर्च्य मकारपञ्चकैः प्लुतः ॥४९९॥
कारणं तन्मुखे दत्त्वा पश्चाद्विद्यां समुच्चरेत् ।
कथितोऽयं महेशानि उपदेशस्तु कौलिकः ॥५००॥
अन्यायेन च यो दद्याद् गृह्णात्यन्यायतश्च यः ।
ददतो गृह्णतो वाऽपि कुलशापो भविष्यति ॥५०१॥
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ।
अशास्त्रीयोपदेशं तु यो गृह्णाति ददाति च ॥५०२॥
भुञ्जाते तावुभौ घोरान्नरकानेकविंशतिः ।
असंस्कृत्योपदेशन्तु यः करोति विमूढधीः ॥५०३॥
विनश्यन्ति च तन्मन्त्राः सैकते शालिबीजवत् ।
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन ॥५०४॥
तस्मात्परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत् ।
सच्छिष्यायातिभक्ताय तज्ज्ञानमुपदिश्यते ॥५०५॥
तत्प्राप्नोति [1] व्रती नित्यं गोक्षीरात्तु यथा घृतम् ।
धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ॥५०६॥
देवताशापमाप्नोति कृतं च विकृतं भवेत् ।

**स्वप्नलब्धमन्त्रोपासनाक्रमनिरूपणम् -**

स्वप्नमन्त्रा महादेवि त्रिधा वै परिनिष्ठिताः ॥५०७॥

---
[1] ब्रवीमि त्वाङ्गोक्षीरान्ते यथा घृतम् - इति पा. भेरौ ।

पाताले तु विराटचक्रं स्वर्गे ताण्डवचक्रकम् ।
स्वर्गे चक्रद्वयं देवि त्रिपुराख्यं द्वितीयकम् ॥५०८॥
आदौ विराट् ततो देवि शिवताण्डवमेव च ।
तृतीयं त्रिपुराख्यं तु स्वप्नमन्त्रास्त्रिधा स्थिताः ॥५०९॥
तत्रैव तु हृदत्ता ये ते विराट्चक्रगोचराः ।
अस्तान्तास्तु महेशानि शिवताण्डवगोचराः ॥५१०॥
त्रिपुरचक्रमध्यस्था [1] वह्निजायान्तका मताः ।
एते मन्त्रास्त्वौत्सुक्येन भुवि स्वप्नेन गोचराः ॥५११॥
स्वप्नमार्गेण देवेशि ह्युपदिष्टाः शिवेन तु ।
तेषान्तु लक्षणं देवि शृणु यत्नेन साम्प्रतम् ॥५१२॥
पातालचक्रमन्त्राणां लक्षणं शृणु साम्प्रतम् ।
अञ्जनं गुटिका गुप्तिश्चाज्ञासिद्धिस्तथैव च ॥५१३॥
शिवताण्डवचक्रस्य लक्षणं शृणु पार्वति ।
खड्गवेतालसिद्धिश्च परकायप्रवेशनम् ॥५१४॥
चराचरगतित्वं च ह्यणिमाद्यष्टकं तथा ।
त्रिपुराचक्रमन्त्राणां लक्षणं शृणु पार्वति ॥५१५॥
मनोरथस्य चाक्लेशः त्रिपुराचक्रमण्डले ।
षष्ठिसिद्धीश्वरो भूत्वा भुवि स्वर्गे च भूतले ॥५१६॥
तत्र किं वा प्रकर्तव्यं किन्तत्र मण्डलं भवेत् ।
ऋषिच्छन्दादिकं ध्यानं पीठन्यासादिकं शिवे ॥५१७॥
यत्र नोक्तं महादेव तत्रतस्तत्कथं भवेत् ।
स्वप्नलब्धस्य मन्त्रस्य ऋषिः शिव इतीरितः ॥५१८॥
गायत्रीच्छन्दश्चिद्रूपा देवता परिकीर्तिता ।
कादि बीजं स्वराः शक्तिरव्यक्तं कीलकं मतम् ॥५१९॥
पीठन्तु मातृकापीठं ध्यानादि मातृकोक्तवत् ।

---

[1] वह्निजायान्तिका मताः - इति ग मा. पा. ।

मूलमन्त्रा षडावृत्या षडङ्गन्यासमाचरेत् ॥५२०॥
स्वप्नलब्धं महादेवि दक्षमूर्तिपरम्परा ।
पूजयेद्दक्षिणामूर्तिं गुरुत्वेन महेश्वरि ॥५२१॥
तद्गुरुश्च भवेद्विष्णुस्तदगुरुश्चतुराननः ।
तद्गुरुः शङ्करः प्रोक्त एवं गुरुक्रमो मतः ॥५२२॥
जातसूतकदोषस्य वारणं केन वा भवेत् ।
तन्मे वद महादेव लिखेदष्टदलं शुभम् ॥५२३॥
तन्मध्ये कलशं स्थाप्यं तत्र वै वैपरीत्यकम् ।
वटपत्रे कुङ्कुमेन लिखित्वा मन्त्रमेव तु ॥५२४॥
कलशं पुरतः स्थाप्य गुरोः प्राणान्निवेशयेत् ।
गुरोः सकाशाद् ग्रहणाज्जातसूतकवारणम् ॥५२५॥
विना पुरस्क्रियां देवि मन्त्रो मृत इतीरितः ।
तस्मात्कुर्यात्पुरश्चर्यां मृतसूतकशान्तये ॥५२६॥
यो मन्त्रश्चेतनायुक्तः स मन्त्रः सिद्धिदायकः ।
चैतन्यं तु पुरश्चर्या चैतन्यं गुरुरेव च ॥५२७॥
यन्त्रचैतन्यकं देवि मन्त्रचैतन्यकं तथा ।
गुरुचैतन्यकं चैव चैतन्यत्रितये नमः ॥५२८॥
चैतन्यत्रयहीनो यः स मन्त्रः सिद्धिदो न हि ।
पुरश्चर्याद्यनुक्ते तु दिक्सहस्रं जपं चरेत् ॥५२९॥
द्वाविंशाक्षरपर्यन्तं दिक्सहस्रं प्रकीर्तितम् ।
तदुत्तरं महादेवि गजान्तकसहस्रकम् ॥५३०॥
स्वप्नलब्धा महेशानि त्र्यङ्गात्पुरस्क्रिया मता ।
जपहोमौ ब्राह्मणानां भोजनं त्रितयं मतम् ॥५३१॥

**स्वप्नादिलब्धरिपुमन्त्रादीनां परित्यागविधिः –**

**श्रीदेव्युवाच –**

भगवन् देवदेवेश गुरुणा ज्ञानिना यदा ।
लोभेन दत्तो मन्त्रश्चेत्तेन दुःखमवाप्यते ॥५३२॥

तदा किं देव कर्तव्यं सौख्यं येनोपजायते ।
इह लोके परत्रापि येन संलभ्यते सुखम् ॥५३३॥

**ईश्वर उवाच -**

प्रायः कलियुगे देवि गुरवो लोभसंयुताः ।
शिष्याः सुखेप्सवस्तेन न तयोर्लभ्यते क्वचित् ॥५३४॥
प्रायो मन्त्रग्रहस्तेन दुःखायैवोपजायते ।
तदर्थं संप्रवक्ष्यमि सर्वतन्त्रेषु गोपितम् ॥५३५॥
विक्षिप्तता मन्त्रदोषे गुरुदोषे कदर्थता ।
आधिर्व्याधिर्दैवदोषे तस्मात्तं परिवर्जयेत् ॥५३६॥
मन्त्रत्यागविधिं वक्ष्ये येन सज्जायते सुखम् ।
विद्वांसं ब्राह्मणं ज्ञात्वा तन्त्रेषु परिनिष्ठितम् ॥५३७॥
प्रातस्तस्य गृहं गत्वा स्वयं दुःखं निवेदयेत् ।
ततस्तेन प्रकर्तव्यो मन्त्रत्यागविधिः परः ॥५३८॥
शुचिः समाहितो भूत्वा प्रारभेत् प्रवरे दिने ।
अशेषदुःखनाशाय देशिकः प्रवरं विधिम् ॥५३९॥
तत्रादौ रम्यभवने कुम्भं दीक्षाविधिक्रमात् ।
मण्डपे स्थापयेद्विद्वान् पूरयेत्तज्जलैः शुभैः ॥५४०॥
विलोममन्त्रपाठेन तत्राऽऽवाह्येष्टदेवताम् ।
सकलीकृत्य संपूज्यावरणानि प्रपूजयेत् ॥५४१॥
एवं सावरणमिष्ट्वा मन्त्री मन्त्रस्य देवताम् ।
हुनेद्विलोममन्त्रेण गोघृतेन सहस्रकम् ॥५४२॥
अष्टान्वितं शतं वाऽपि ततः सन्तर्पयेत्प्रभुम् ।
ब्रह्मार्पणेन मनुना देवताभ्यो बलिं ततः ॥५४३॥
यवान्नैश्चापि दुग्धान्नैर्दिग्विदिक्ष्वध ऊर्ध्वतः ।
आयाहीन्द्र सुराधीश शतमन्यो शचीपते ॥५४४॥
नमस्तुभ्यं गृहाणेमं पुष्पधूपादिकं बलिम् ।
आयाहि तेजसां नाथ हव्यवाह बलप्रद ॥५४५॥

गृहाण पुष्पदीपादिवलिमेनं प्रयोजितम् ।
प्रेतनाथ त्वमायाहि भिन्नाञ्जनसमद्युते ॥५४६॥
वलिं दत्तं गृहीत्वेमं सुप्रीतो वरदो भव ।
नमस्ते रक्षसां नाथ निर्ऋते त्वमिहागतः ॥५४७॥
गृहाण वलिपूजादि मया भक्त्या निवेदितम् ।
परिपश्चिमदिक्पाल जलनाथ नमोऽस्तुते ॥५४८॥
भक्त्या निवेदितां पूजां गृहीत्वा सुखमाप्नुहि ।
प्रभञ्जन प्राणपते त्वमेहि सपरिच्छदः ॥५४९॥
मया प्रयुक्तं विधिवद् गृहाण वलिमादरात् ।
कुवेरतारकाधीशावगच्छैतां सुरोत्तमौ ॥५५०॥
पुष्पधूपादिभिः प्रीतौ भवेतां वरदौ मम ।
ईश त्वमेहि भगवन् सर्वविद्याऽऽश्रय प्रभो ॥५५१॥
पूजितः पुष्पधूपाद्यैः प्रीतो भव विभूतये ।
आयाहि सर्वलोकानां नाथ व्रह्मन् समर्चनम् ॥५५२॥
गृहाण सर्वविघ्नान् मे निवर्तय नमोऽस्तुते ।
आगच्छ वरदाव्यक्त विष्णो विश्वस्य नायक ॥५५३॥
पूजितः परया भक्त्या भवेस्त्वं सुखदो मम ।
ततः सपरिवाराणां च पूजयेन्मन्त्रदेवताम् ॥५५४॥
मन्त्रेण विपरीतेन पुष्पधूपोपचारकैः ।
ततस्तु प्रार्थयेद् विद्वान् पूजितां मन्त्रदेवताम् ॥५५५॥
आनुकूल्याद्यनालोच्य मया तरलबुद्धिना ।
उपान्तो दुःखदो मन्त्रस्तद्दोषं विनिवर्त्तय ॥५५६॥
पापं प्रतिहतं मेऽस्तु भूयाच्छ्रेयः सनातनम् ।
तनोतु मम कल्याणं पावनी भक्तिरेव च ॥५५७॥
इति संप्रार्थ्य मन्त्रेशं मन्त्र-यन्त्रे विलोमतः ।
लिखित्वाऽमलकर्पूरचन्दनेन समर्चयेत् ॥५५८॥
कलशोपरि संस्थाप्य भक्त्या परमया युतः ।
तद्यन्त्रं स्वस्य शिरसि वद्ध्वा स्नायाद् घटोदकैः ॥५५९॥

मन्त्रपूतैः पुनश्चान्यं कुम्भं तोयैः प्रपूरयेत् ।
तन्मध्ये यन्त्र-मन्त्रञ्च निक्षिप्याथ प्रपूरयेत् ॥५६०॥
तं कुम्भं निम्नगातीरे शुद्धे वाऽन्यजलाशये ।
विसृजेदथ विप्राँश्च यथाशक्त्या प्रतोषयेत् ॥५६१॥
इत्थंकृतविधानस्य दुर्लभस्य मनोरुजः ।
विनक्ष्यन्ति न सन्देहः क्रमाच्चित्तप्रसन्नता ॥५६२॥
जायेतऽतीव सम्पन्नो वर्धते तत्कुलं क्रमात् ।
एवमुक्तो मनुत्यागो गुरुत्यागस्तथोच्यते ॥५६३॥
मन्त्रो यद्देवतायाः स्यात्तिथौ तस्या भवेद्व्रती ।
गुरुत्यागस्य सङ्कल्पं कुर्यात्तद्दोषपूर्वकम् ॥५६४॥
गुर्वन्तरं च संचिन्त्य नरं वा देवमेव वा ।
राशिकूटेन संशुध्दं देवताऽष्टकमध्यतः ॥५६५॥
कुर्यादेकं गुरुं तत्र पूर्वाभावे परं परम् ।
आदौ तु दक्षिणामूर्तिः सूर्यश्चन्द्रो हुताशनः ॥५६६॥
मन्त्रावरणदेवश्च ज्ञातिदेवः कुलेश्वरः ।
दश देवा इमे त्वष्टौ नरो वा लक्षणान्वितः ॥५६७॥
गुरोर्युग्मं पूजयित्वा वा सन्ततगुरुद्वयम् ।
देवताम्नायसंप्रोक्तं द्रव्यं तन्नामतो यजेत् ॥५६८॥
त्रिपर्णस्य पलाशस्य प्राग्रमुष्टिस्तु दक्षिणे ।
प्रादेशप्रमितानाञ्च [1] कुशानामूर्ध्ववर्त्मनि ॥५६९॥
तोयपूर्णं घटं प्राच्यां दुग्धपूर्णं च पश्चिमे ।
उत्तरे तु सुरापूर्णमाग्नाय द्रव्यमीरितम् ॥५७०॥
प्राग्गुरोश्चाऽपि चैतन्यं प्रविष्टं नूतने गुरौ ।
इति सञ्चिन्त्य मन्त्रस्तु तस्माल्लब्धो विचिन्तयेत् ॥५७१॥

---

[1] कुशानामूर्ध्ववर्त्मनि – इति ग. मा. पा. ।

अष्टोत्तरसहस्रञ्च मनुञ्जप्त्वा समापयेत् ।
मन्त्रस्य वर्णसंख्याकान्देवताप्रीतिकारकैः ॥५७२॥
द्रव्यैस्तु भोजयेद् विप्रान्देवताऽऽराधनक्षमान् ।
तदभावे वैदिकाँश्च मन्त्रा वेदमया यतः ॥५७३॥
तदाम्नायप्रवृत्तान्वा तदभावे तु भोजयेत् ।
एवं त्यागो गुरोरुक्तः सर्वतन्त्रेषु गोपितः ॥५७४॥
असिद्धो यः स्वयं शिष्यं कथं स तारयिष्यति ।
देवत्यागं प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ॥५७५॥
कृतनित्यक्रियः पूजां देवतायाः समाचरेत् ।
संकल्पं च ततः कुर्याद्धेतुत्यागादिपूर्वकम् ॥५७६॥
परोक्षं वा समक्षं वा गुरोः संप्रार्थयेत्सुरम् ॥५७७॥
त्रैलोक्यनाथ जगदीश महेश्वरस्त्वम्
ब्रह्माण्डकोटिजठराद्भुतशान्त्यचिन्त्यः ।
यस्त्वं मयाऽल्पमतिना द्विभुजादिदेही
ध्यातोऽपराधशतकं मम तत्क्षमस्व ॥५७८॥
त्वं सूर्यचन्द्रदहनेशगणेशविष्णु-
ब्रह्मेन्द्रशक्तिनरयागनगस्वरूपः ।
ध्यातोऽसि बाल्यविषये परिपूजितोऽसि
तन्मेऽपराधशतकं भगवन् क्षमस्व ॥५७९॥
वेदोऽपि नैव मुनयो न च भारती त्वाम्
जानाति मन्दमतिना स्वगुरूक्तरीत्या ।
ध्यातस्त्वमेव अपराधकृता मयेदं
दुःखं प्रलब्धमधुना शरणागतोऽस्म्यम् ॥५८०॥
ध्यानं करोमि मनसा न च ते ह्यनन्त
मन्त्राक्षरात्मकमिदं परिभावयामि ॥
रूपं त्वदीयमिति यत्प्रवदन्ति वेदाः
सिद्धिर्जपान्न च बहिः कृतपूजनाद्यैः ॥५८१॥

एवं संप्रार्थ्य देवेशं प्रणमेद्दण्डवत्पुनः ।
मन्त्रमूर्त्यादिकं सर्वं गुरवे तत्समर्पयेत् ॥५८२॥
तदभावे पूजकाय तद्भक्ताय प्रदापयेत् ।
कुर्याज्जपं द्विगुणितं सर्वत्रापि च तद्धितान् ॥५८३॥
प्राग्वच्च भोजयेद् विप्रान् गुर्वादींश्चापि तोषयेत् ।
एवं तु देवतात्यागो मया तुभ्यं निवेदितः ॥५८४॥
दीक्षान्तरं महेशानि प्रत्यहं प्रजपन्मनुम् ।
प्राणान्तेऽपि न वै त्याज्यस्त्यागाच्छापमवाप्नुयात् ॥५८५॥
जपं पूजा ततो जापं कुर्याद्यत्नेन नित्यशः ।
पूजान्ते प्रजपेन्मन्त्रं न मन्त्रं केवलं जपेत् ॥५८६॥
पूर्णाभिषेकहीनस्य पूजा पञ्चोपचारिका ।

**इति तन्त्रचिन्तामणौ**
**दीक्षाविधिनिर्णयनामा दशमः प्रकाशः ।**

*****

# एकादशः प्रकाशः

**पूर्णाभिषेकदीक्षा –**

पूर्णाभिषेकदीक्षा तु चन्द्रसूर्यग्रहे भवेत् ।
सुन्दरी तारिणी काली क्रमदीक्षा त्रिगामिनी ॥१॥
क्रमपूर्णा महेशानि क्रमाच्छम्भुर्भविष्यति ।
चन्द्राग्निपक्षषोढाख्यपरा निर्वाणतत्परा ॥२॥
षट् शाम्भवं ततो देवि चक्रसंभेदनेन च ।
स्वचक्रदेहविज्ञानं परकायप्रवेशनम् ॥३॥
एतज्ज्ञानाद् भवेन्मेधा दीक्षा प्रोक्ता मया तव ।
हादाविदं निगदितं शृणु कादौ महेश्वरि ॥४॥
चन्द्राली रसराज्ञी च महाराज्ञी ततः शिवे ।
महाकामकलाकाली गुह्यकाली ततः शिवे ॥५॥
गुह्यकाली द्विधा प्रोक्ता सकला निष्कला क्रमात् ।
दशवक्त्रा तु सकला प्रोक्ता वा सृष्टिका कला ॥६॥
उग्रा सौम्या महाक्रूरा त्रिधा साऽपि प्रकीर्तिता ।
निष्कला गुह्यसंगन्त्री कालीभेदेन कीर्तिता ॥७॥
केवलेयं भवेन्मेधाह्वयी साम्राज्यरूपिणी ।
चन्द्राग्निवेदपञ्चार्णा तथा नीला क्रमेणच ॥८॥
हंसतारा महानीला तदन्ते[1] चीनशाम्भवी ।
केवला तु भवेन्मेधा सिद्धिऋद्धिक्रिया द्विधा ॥९॥
त्रितया दिव्यसाम्राज्ये मेधादीक्षा प्रकीर्तिता ।
देवरूपा दिव्यरूपा मन्त्ररूपा महापरा ॥१०॥
सर्वरूपा सर्वपूर्वा महासाम्राज्यमेधया ।
सिद्धिऋद्धिक्रमेणैव भेदवाहुल्यमीरितम् ॥११॥

---

[1] चीनसम्भवी - इति पा. उचितः ।

[1] विद्याराज्यभिधा दीक्षा छिन्नमस्ताविधौ स्मृता ।
चन्द्रवह्निनरसारक्त-श्यामा च षोडशी तथा ॥१२॥
परषोढा सप्तदशी [2] तदजाता परा भवेत् ।
दीपिनी मालिनी कुल्ला क्रमाद् विद्यादिराज्यदा ॥१३॥
बगला या महेशानि साम्राज्ये पारमेश्यता [3] ।
चन्द्रवेदसूक्ष्ममेरुमन्त्रहीनं शिवाक्षरम् ॥१४॥
हृदयं च शतार्णञ्च पञ्चास्त्रं कुल्लुका तथा ।
गायत्री क्रमयोगेन साम्राज्यपारमेष्ठ्यधृक् ॥१५॥
एतत्पञ्चकसंयुक्तः सर्वसाम्राज्यबुद्धिधृक् ।
श्रीदिव्यसर्वसाम्राज्यदीक्षा सर्वोत्तरा भवेत् ॥१६॥
ततोऽपि दीक्षा देवेशि नास्ति ब्रह्माण्डगोलके ।
दशविद्याप्रभेदाश्च महाविद्याप्रभेदजाः ॥१७॥
सिद्धिविद्याप्रभेदाश्च महामन्त्रास्तथैव च ।
तदङ्गमन्त्रा देवेशि शावरं दश [4] शावरम् ॥१८॥
कालशावरकं देवि तथैव सिद्धशावरम् ।
त्रिधा दर्शनमन्त्राश्च तथाम्नायक्रमोद्भवाः ॥१९॥
[5] कादिहादिकहत्वेन ऊर्ध्वाम्नायात्कलौ शिवे ।
तथाऽऽयतनमन्त्राश्च यत्किञ्चिन्मन्त्रजालकम् ॥२०॥
सर्वाधिकारो देवेशि एतद्दीक्षाविधौ भवेत् ।
एतद्दीक्षासमायुक्तस्साक्षाच्छ्रीकालिका स्वयम् ॥२१॥
प्रहराष्टक्रमेणैव दशविद्यास्वरूपधृक् ।
कामकलाभिधा विद्या सभेदावृत्तिदेवता ॥२२॥

---

[1] विद्याराज्याभिधा - इति ख. मा. पा. ।
[2] तदा जाता उद् पुर - इति ख.मा.पाठः ।
[3] स्थिता - इति पा. साधुः ।
[4] देशशावरम् - इति पा. अन्यत्र ।
[5] कादिहादिक्रमत्वेन ऊर्ध्वांनाये -इति पाठोऽन्यत्र ।

अङ्गमन्त्रास्तथाऽन्येऽपि तस्य चास्त्रगताः सदा ।
क्रमदीक्षा महेशानि पञ्चविद्यासु भेदतः ॥२३॥
तदङ्गमन्त्रगायत्री कुल्लुकापञ्चकं शिवे ।
अन्यविद्याविधौ प्रोक्तं रहस्यातिरहस्यकम् ॥२४॥
क्रमदीक्षां विना देवि यो जपेत् साधकोऽधमः ।
स दरिद्रो महापापी सुतहारी प्रजायते ॥२५॥
श्रीविद्यायां कालिकायां तारायां परमेश्वरि ।
क्रमदीक्षां विना देवि यो जपेत् साधकाधमः ॥२६॥
स दरिद्रो महाघोरी लक्ष्मीहीनस्तु निन्दितः ।
अन्धः काणः कृशः कुब्जः पङ्गुः षण्डस्तु कुष्ठयुक् ॥२७॥
सर्वरोगयुतो भूयादाधिचिन्तासमाकुलः ।
सुतहारी च स्त्रीहारी कन्याराज्यविनाशकः ॥२८॥
अथवा वातुलो भूयान्मन्त्रः क्षोभमवाप्नुयात् ।
देवताशापमाप्नोति दारिद्र्यं तद्गृहे सदा ॥२९॥
विशेषात् देवदेवेशि स्त्रीहारी विकलः सदा ।
क्रमदीक्षासमायुक्तो राजा भवति निश्चितम् ॥३०॥
महाविभवसंयुक्तस्सर्वसिद्धिसमन्वितः ।
विजयी विनयी साधुः [1] सिद्धश्च सिद्धिद शुभः ॥३१॥
प्रहृष्टात्मा सर्ववेत्ता त्रिकालज्ञः कविः सुखी ।
कोटिसिध्दीश्वरः शूरः सुन्दरः काममोहनः ॥३२॥
आनन्दात्मा परात्मा च पराजितगुणोत्तरः ।
राजराजेश्वरः साक्षान्महाकालसमः कलौ ॥३३॥
[2] एतद्विद्योपासकस्य दारिद्र्यं दीनता क्वचित् ।
गुरुहीनात्क्रमत्यागात्सम्प्रदायवियोगतः ॥३४॥

---

[1] सिद्धिश्च-इति ख.मा.पाठः ।

[2] नैतद् विद्योपासकस्य - इति पा. अन्यत्र स एव उचितः ।

दारिद्र्यं प्रथमं भूयान्नात्र कार्या विचारणा।
चिन्तामणिगृहं यत्र यत्र रत्नस्य मन्दिरम् ॥३५॥
नवरत्नात्मसोपानं सर्वैश्वर्यास्पदं गृहम्।
कल्पवृक्षवनं यत्र पारिजातवनं तथा ॥३६॥
स्पर्शमणेस्तु प्राकारो दारिद्र्यं तत्र कुत्र वै।
तस्मात्क्रमविहीनस्य दारिद्र्यं तु पदे पदे ॥३७॥
क्रमयुक्तं गुरुं प्राप्य क्रमं सम्प्रार्थयेत्सुधीः।
अन्यथा गुरुमौढ्येन दरिद्रत्वमवाप्नुयात् ॥३८॥
अल्पायुर्वा भवेद्देवि नात्र कार्या विचारणा।
विधेर्लिपिं तु संमार्ज्य तस्याः प्रक्षीणतां व्रजेत् ॥३९॥
एवं दत्त्वा गुरोर्दीक्षां कुर्यात्पूर्णाभिषेचनम्।
विना येनाभिषेकेण सार्थकः पूर्णबोधताम् ॥४०॥
आचार्यत्वं न चाप्नोति सद्‌गतिं च समीहिताम्।
[1] तस्माद् गुरुः प्रियं शिष्यं बोधयित्वाऽभिषेचयेत् ॥ ४१॥
विना पूर्णाभिषेकेण पशुरूपः शिवोऽपि च।
विना पूर्णाभिषेकेण देवता न प्रसीदति ॥४२॥
विना पूर्णाभिषेकेण कालीं ताराञ्च यो जपेत्।
तस्य क्रियां हरिष्यामि वातुलो जायते नरः ॥४३॥
विना पूर्णाभिषेकेण गुरुधर्मेण पार्वति।
नजपो न तथा होमो न पूजा पूर्णता क्वचित् ॥४४॥
पूर्णाभिषेकहीनस्तु कौलिको म्रियते यदि।
पिशाचत्वमवाप्नोति यावदाभूतसंप्लवम् ॥४५॥
पूर्णाभिषेको देवेशि दशविद्याविधौ स्मृतः।
पूर्वोक्तमण्डपे स्थित्वा गुरुध्यानपरायणः ॥४६॥

---

[1] होमादिकं सूतकान्ते मार्जनप्रविधिः स्मृतः।
अभिषेकाद् भवेच्छुद्धः सर्वरूपः सनातनः॥
अभिषेकः पूर्णकृतः सर्वसिद्धिफलप्रदः।
अनेन क्रमयोगेन त्वभिषेकः प्रकीर्तितः॥ - इति अधिकः पाठः।

अङ्कुरारोपणं वास्तुयागं कुर्यात्परेऽह्नि ।
कुण्डं निर्माय यत्नेन यथाविहितमादरात् ॥४७॥
होमं कृत्वा गुरुकुले मान्यः पूज्यो यथादरात् ।
वेदिकायामिष्टदेवं गुरुत्रितयमादरात् ॥४८॥
वस्त्रालङ्करणैः पूज्या गुरुशक्तय एव च
तथा दिव्यौघचरणं सिद्धौघचरणं शिवे ॥ ४९॥
मानवौघं महेशानि स्वगुरूणां चतुष्टयम् ।
अभिषेकक्रियाभिज्ञस्तूद्वर्तनपुरस्सरम् ॥५०॥
स्नानद्वयं यथोक्तेन कृत्वा यत्नेन पार्वति ।
पञ्चपल्लवयोगेन दूर्वाविल्वफलैस्तथा ॥५१॥
वैदिकैस्तान्त्रिकैर्मन्त्रैः सेचयेच्छिष्यमादरात् ।
अयमेव महेशानि पूर्णदीक्षाक्रमः स्मृत ॥५२॥
अन्यत्सर्वं महेशानि दीक्षापटलगोचरम् ।
विरच्य विपुलं चक्रं मण्डपेऽतिमनोहरम् ॥५३॥
खारीतोयभृतं कुम्भं स्थापयेच्चक्रमध्यतः ।
अन्येषु कलशान् रत्नवस्त्र-हेमसमन्वितान् ॥५४॥
दलेषु विधिवत्स्थाप्य तथाऽऽवाह्येष्टदेवताम् ।
अभ्यर्च्य मध्ये चान्तेषु साङ्गावरणदेवताः ॥५५॥
स्पृशँश्च मध्यकलशमाचार्यः प्रपठेदिति ।
साङ्गाँश्च चतुरो वेदान्ततस्तेन जलेन तु ॥५६॥
अभिषिञ्चेद् गुरुः शिष्यमिति पूर्णाभिषेचनम् ।
[1] वेदेभ्यः सर्वतन्त्राणि तन्त्रेभ्यो मनवस्तथा ॥ ५७॥
यतो जातास्ततः शिष्यः सर्वमन्त्रैकभाजनम् ।
भवेदाचार्यनामा च कुर्यान्नामान्तरं गुरुः ॥५८॥

---

[1] देवेभ्यः - इति पाठः मेरौ।

एतादृशस्य यो दीक्षां गृह्णीयात्स तु सिद्धिभाक् ।
सर्वमन्त्रप्रदानेषु समर्थः स तु जायते ॥५९॥
सर्वे देवा वशास्तस्य वेदपन्थास्तु सात्त्विकः ।
एष एव विधिस्तन्त्रमार्गे स्याद्दक्षिणाभिधे ॥ ६०॥
विशेषात्तत्र तोयानि तीर्थानामाहरेत्सुधीः ।
गङ्गाया यमुनायाश्च सरस्वत्या महोदधेः ॥ ६१॥
सिन्धु-गोदावरीरेवाकावेरीभ्यः पृथूदकात् ।
महेन्द्रजायाः सरयूचर्मण्वत्योश्च पुष्करात् ॥६२॥
महानद्या वेदिकायाःशिप्रावेत्रवतीजलम् ।
कुरुक्षेत्रस्य गण्डक्याः पूर्णाया मानसस्य च ॥ ६३॥
घटे दत्त्वा जपेन्मन्त्रान्नानातन्त्रागतानपि ।
[1]अभिषेकस्तु तैस्तोयैःसिद्धास्ते मनवोऽस्य तु ॥६४॥
प्रयोगार्थं तथाऽन्यस्य दानार्थमथ वामके ।
मध्ये तीर्थघटः स्थाप्यः शेषास्तोयघटा मता ॥६५॥
ये ये आवाहिता देवा गुरुणा तु सुराघटे ।
ते ते कुर्वन्ति सान्निध्यं मन्त्ररूपाश्च तन्मुखे ॥६६॥
स्वयं सिध्यति वागस्य मूर्धानं नैव नामयेत् ।
यदर्थं नामितो मूर्धा तस्य मृत्युर्न संशयः ॥६७॥
वाममार्गे गुरुर्यस्य [2] दृष्टिसिद्धो यदा भवेत् ।
शिष्यश्च निरहङ्कारः सदा दैवततत्परः ॥६८॥
देवतार्थं यस्य मादित्रयं भोगे मनो न च ।
स एव सिद्धो वामे स्यादन्यो निरयभाजनम् ॥६९॥
दरिद्रो दुःखितो मूर्ख इह लोके परत्र च ।
क्रियादीक्षाविधिं कुर्याद्यथाशक्त्या गुरूक्तितः ॥ ७०॥

---

[1] अभिषिक्तस्तु - इति पा. भेरौ ।
[2] ईदृक्सिद्धो - इति भेरौ पाठः ।

सजीवमीनयुक्तेन सुरया पूरितेन च ।
पञ्चामृतैः सुसम्पूर्णशङ्खेन कलशेन वा ॥ ७१॥
अभिषेकं ततः कुर्यात्कुलवृक्षोत्थपल्लवैः ।
अयं पूर्णाभिषेकोऽत्र कुलमार्गे प्रकीर्तितः ॥ ७२॥
१ अभिषिञ्चेद् गुरुः शिष्यं नामास्मै प्रदिशेत्स्वयम् ।
आनन्दनाथशब्दादिद्व्यक्षरं चतुरक्षरम् ॥ ७३॥
नियोज्यैवामुकोऽसीति गुरुरादौ समाह्वयेत् ।
यथा नारी पितुर्गोत्रात् पत्युर्गोत्रं समाश्रयेत् ॥ ७४॥
तथा शक्त्युपदेशेन कौलो गोत्रान्तरं व्रजेत् ।
अथोच्यते महेशानि कौलानां गोत्रमुत्तमम् ॥ ७५॥
दुर्लभं सर्वतन्त्रेषु शाम्भवं तत्प्रकीर्तितम् ।
उपपातकलक्षाणि महापातककोटयः ॥७६॥
क्षणाद्दहति दीक्षेयं विधिना गुरुणा कृता ।
रसेन्द्रेण यथा विद्धमयः सौवर्णतां व्रजेत् ॥७७॥
दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ।
गतं शूद्रस्य शूद्रत्वं गता विप्रस्य विप्रता ॥७८॥
दीक्षासंत्कारसम्पन्ने जातिभेदो न विद्यते ।
दार्वश्मलोहमृद्रत्नजातिलिङ्गप्रतिष्ठितम् ॥७९॥
यथोच्यते महादेवस्तथा वर्णास्तु दीक्षिताः ।
पूर्णाभिषेकं कृत्वा तु यत्र कुत्र कृतोऽपि चेत् ॥८०॥
स एव देवीरूपःस्यात्स देवो धन्यतामियात् ।
पूर्णभिपेकयुक्तस्य यत्किञ्चिदमृतं २ भवेत् ॥८१॥

१ ततोऽप्यतितरां शिष्यो गुरोश्चेत् प्रीतिभाजनम् ।
तदा गण्डूषपूर्वां हि दद्यादेतां गुरूत्तमः ॥
निर्विकल्पोऽपि शिष्यस्तद गृह्णीयाज्जपमानसः ।
तदभावे न सिद्धिः स्याद् देवता शापमाप्नुयात् ॥
सिद्धिद्रव्यं मुखे पूर्वं पञ्चव्योमामृतान्वितम् ।
- इति ख.मा. अधिकः पाठः ।
२ अनृतम् - इति पाठोऽन्यत्र ।

तस्य क्रिया च सकला देवता सुप्रसीदति ।
पूर्णाभिषेकयुक्तो हि मन्त्रान् दृष्ट्वा जपेच्छिवे ॥८२॥
तत्क्षणात्सिद्धिमाप्नोति नात्र कार्या विचारणा ।
गुरुं विनाऽपि देवेशि त्वभिषेकी तु यं जपेत् ॥८३॥
तं सभेदं साधयित्वा सिद्धिं दातुमथार्हति ।
कौलावधूतमार्गेषु तीर्थयात्रां न च व्रजेत् ॥८४॥
तीर्थाटनं च सन्यासव्रतधारणमेव च ।
उपवासं मुण्डनं च सर्वथा परिवर्जयेत् ॥८५॥
पूर्णाभिषेके शिरसि तेन तत्र न मुण्डनम् ।
पूर्णाभिषेकसंयुक्तश्चाण्डालोऽपि भवेद्यदि ॥ ८६॥
स ब्रह्मर्षिर्महेशानि नात्र कार्या विचारणा ।
पूर्णाभिषेकहीनो य ऋषिवर्योऽपि पार्वति ॥ ८७॥
स ब्राहणाधमः प्रोक्तस्त्वभिषेकी द्विजोत्तमः ।
पूर्णाभिषेकी देवेशि यस्मिन् देशे विराजते ॥८८॥
स देशो धन्यतां याति समन्तात्कोटियोजनम् ।
न व्याधिर्न च वै मृत्युर्न शत्रूणां भयं क्वचित् ॥ ८९॥
पूर्णरूपः शिवः प्रोक्तः शिव एव न संशयः ।
को वा देही कस्य देहः सुखं दुःखं च कस्य च ॥ ९०॥
को जातः को मृतो देवि सर्वं ब्रह्मस्वरूपकम् ।
यस्मिन् काले भवेद्देवि मन्त्रदेवस्य विस्मृतिः ॥ ९१॥
तदेव मरणं प्रोक्तं मरणं मरणं नहि ।
पूर्णाभिषेकयुक्तानामधिकारो हि सर्वतः ॥९२॥
पूर्णाभिषेकसंयुक्तस्त्यजेदेतत्त्रयं शिवे ।
अहन्ताममतात्यागः प्रथमं बुद्धिलक्षणम् ॥९३॥
अहमिति महेशानि प्रथमोऽध्यास ईरितः ।
ममेति च महेशानि द्वितीयोऽध्यास ईरितः ॥९४॥
अहन्ताममताहीनः पूर्णदीक्षायुतो भवेत् ।
कुल्लुकाया जपेनाऽपि पूर्णदीक्षाफलं लभेत् ॥९५॥

विद्यानां कुलपूज्यत्वात्कुल्लुका तेन कीर्तिता ।
विद्यासम्बन्धिदोषाणां भक्षयित्री यत:शिवे ॥ ९६॥
विख्याता कुल्लुका तेन सर्वदोषहरा परा ।
कुल्लुकाजपयुक्तानां विद्यासिद्धिर्भवेद् ध्रुवम् ॥९७॥

इति तन्त्रचिन्तामणौ पूर्णाभिषेकनिर्णयनामा
एकादश: प्रकाश: ।

*****

# द्वादशः प्रकाशः

## गुरुभक्तिः –

कुलागमस्त्वयं मार्गो गुरुणा संप्रदर्शितः ।
सम्यगाचरितश्चेत् स्याद् भुक्तिमुक्त्योः प्रसाधनम् ॥१॥
विप्रोऽपि गुणयुक्तोऽपि न भक्तश्चेन्न शस्यते ।
म्लेच्छोऽपि गुणहीनोऽपि भक्तिमान् शिष्य उच्यते ॥२॥
गुरुभक्तिविहीनस्य तपो विद्या व्रतं कुलम् ।
व्यर्थं सर्वं शवस्येव नानाऽलङ्कारभूषणम् ॥३॥
नारायणे महादेवे मातापित्रोश्च राजनि ।
यथा भक्तिर्भवेद्देवि तथा कार्या निजे गुरौ ॥४॥
एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ।
एकक्रोशस्थितश्चापि गुरुं प्रतिदिनं नमेत् ॥५॥
अर्धयोजनगः शिष्यः प्रणमेत्पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधि ॥६॥
तत्तत्योजनसंख्याते मार्गे गत्वा नमेद् गुरुम् ।
दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः ॥७॥
तत्तद्योजनसंख्यातं मासेषु प्रणमेद् गुरुम् ।
अतिदूरस्थितः शिष्यो यदेच्छा स्यात्तदा व्रजेत् ॥८॥
रिक्तहस्तस्तु नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बरादीनि [1] यथाशक्त्या समर्पयेत् ॥९॥
गुर्वग्रे न तपःकुर्यान्न स्नायादात्मशुद्धये ।
न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत्तथा ॥१०॥
अप्रियं च तथा काले कामक्रोधौ विशेषतः ।
नाप्रच्छन्नमुखो ब्रूयाद् गुरोरग्रे कदाचन ॥११॥

---

[1] यथाशक्ति – इति पा. समीचीनः ।

अद्वैतं देवपूजां च गुरोरग्रे परित्यजेत् ।
पादुकायोगपट्टादिगुरुचिह्नानि सादरम् ॥१२॥
न लङ्घयेत्स्पृशेन्नैव तत्समक्षं न धारयेत् ।
पर्यङ्कशयनं तद्वत्तथा पादप्रसर्पणम् ॥१३॥
अङ्गभङ्गं च लीलां च न कुर्याद् गुरुसन्निधौ ।
छायां न लङ्घयेत्तस्य गच्छेन्न पुरतो गुरोः ॥१४॥
न कुर्वीत गुरोरग्रे प्रभावं शिष्यसङ्ग्रहम् ।
अहङ्कारं न कुर्वीत नोल्वणं धारयेद्वपुः ॥१५॥
जातायामापदि भ्रंशे शपथं गुरुसंज्ञितम् ।
न कुर्याच्छिवसंज्ञं वा प्रमादेन क्रियते चेत् ॥१६॥
तदर्थं निर्वहेद् यत्नादन्ते पूजाजपाऽऽहुतीः ।
अनिर्वाहे तु कार्यस्य यदर्थं शपथः कृतः॥ १७॥
प्रायश्चित्तं मनोः कुर्यान्मूलाख्यस्य सहस्रकम् ।
न नियोगं गुरोर्दद्याद् युष्मदा नाभिभाषयेत् ॥१८॥
श्रीनाथदेवस्वामीति बोधने भाषणे वदेत् ।
ऋणाशनं तथा दानं वस्तूनां क्रयविक्रयौ ॥१९॥
न कुर्याद्गुरुभिः सार्धं शिष्यो भूष्णुः कदाचन ।
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ॥२०॥
स याति नरकं घोरं पूजा सा विफला भवेत् ।
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेच्च तत् ॥२१॥
अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया ।
अलभ्यं हि गुरोर्द्रव्यमदत्तं स्वीकरोति यः ॥२२॥
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये ।
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ॥२३॥
पतितः स्यान्न सन्देहः प्रायश्चित्तन्न विद्यते ।
गुरुस्थानं सम्प्रदायं तद्धर्मं यो निवारयेत् ॥२४॥
गुरुभिः स बहिष्कार्यो दण्ड्यो वध्यश्च पातकी ।
पादुकामासनं वस्त्रं वाहनं छत्रचामरौ ॥२५॥

दृष्ट्वा गुरोर्नमस्कुर्यान्न तद्भोगाय कल्पयेत् ।
उक्तानुक्तेषु कार्येषु नोपेक्षां कारयेत् प्रिये ॥ २६॥
सदसद् यद् गुरुर्ब्रूयात् तत्कार्यमविशङ्कया ।
ब्रह्महत्याशतं कृत्वा गुर्वाज्ञां परिपालयेत् ॥२७॥
निग्रहेऽनुग्रहे वाऽपि गुरुः सर्वस्य कारणम् ।
निर्गतं यद् गुरोर्वक्त्रात् तत्सर्वं शास्त्रमुच्यते ॥२८॥
आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियवर्तनम् ।
गुरुद्रोहमिमं प्राहुर्यः कुर्यात् स तु पातकी ॥२९॥
न विशेदासने देवि देवतागुरुसन्निधौ ।
जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं मुदा ॥३०॥
अभिमानो न कर्तव्यो जातिविद्याधनादिभिः ।
तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥३१॥
गोब्राहणवधं कृत्वा न तत्पापमवाप्नुयात् ।
दण्डप्रणामं कृत्वैकं त्रिप्रदक्षिणमाचरेत् ॥३२॥
गुरतद्गुरुयोगे तु वन्देत प्रगुरुं प्रिये ।
ततो नमेद् गुरुं सोऽपि गुर्वग्रे तन्निवारयेत् ॥३३॥
प्रगुरोः सन्निधौ शिष्यः स्वगुरुं मनसा नमेत् ।
गुरूक्तं परुषं वाक्यमाशीषं चिन्तयेद् हृदि ॥३४॥
तेन सन्ताडितो वापि [1] प्रसादमिति संस्मरेत् ।
भोग्ययोग्यानि वस्तूनि गुरवे सर्वमर्पयेत् ॥३५॥
तच्छेषमिति सञ्चिन्त्य ग्राह्यं तस्याज्ञया मुदा ।
एकाक्षरप्रदातारं यो गुरुं त्ववमन्यते ॥३६॥
स श्वयोनिशतं गत्वा चाण्डालत्वमवाप्नुयात् ।
गुरौ मनुष्यबुद्धिश्च मन्त्रे चाक्षरशेमुषीम् ॥३७॥

---

[1] प्रसादः - इति पाठः साधुः ।

प्रतिमायां शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ।
गुरुशक्तिश्च तत्पुत्रो तज्ज्येष्ठश्च गुरोः समः ॥३८॥
आत्मवच्च कनीयांसः पुत्रवत्परिपालकाः ।

**दक्षिणाचारः**

**श्रीदेव्युवाच –**

अस्मिन् घोरे कलियुगे स्वल्पसिद्ध्याऽतिदर्पिताः ॥३९॥
भविष्यन्ति जनास्तेषां स्थिरा सिद्धिः कथं भवेत् ।
अग्रे वंशादिवृद्धिश्च वंशे देवकृपा तथा ॥ ४०॥
मोक्षः कथं साधकस्य तथा वद कृपानिधे ।

**ईश्वर उवाच –**

अहङ्कारपरित्यागात्काम्यकर्मविवर्जनात् ॥४१॥
[1] स्वधर्माचरणात्सर्वमनायासेन जायते ।
एतत्कर्तुमशक्तश्चेत् निषिद्धं तु परित्यजेत् ॥४२॥
विहितं कर्म कुर्वीत सिद्धिः स्यात् पुत्रपौत्रिकी ।
तत्रादौ कथयिष्यामि निषिद्धं विधिना सह ॥४३॥
देवस्थाने गुरुस्थाने श्मशाने च चतुष्पथे ।
पादुकासनविण्मूत्रमैथुनानि विवर्जयेत् ॥४४॥
प्रमत्तामन्त्यजां कन्यां पुष्पितां पतितस्तनीम् ।
विरूपां वा मुक्तकेशीं कार्मातां च न निन्दयेत् ॥४५॥
कन्यायोनिं पशुक्रीडां दिग्वस्त्रां प्रकटस्तनीम् ।
नालोकयेत्परद्रव्यं परदारांश्च वर्जयेत् ॥४६॥
धान्यगोगुरुदेवाग्निकोशपुस्तकसम्मुखम् ।
नैव प्रसारयेत्पादौ न चैतानि विलङ्घयेत् ॥४७॥
आलस्यमदसम्मोहशापपैशुन्यविग्रहान् ।
असूयामात्मसम्मानं परनिन्दाञ्च वर्जयेत् ॥४८॥

---

[1] स्वधर्माचरणात् – इति ग. मा. पाठः ।

लिङ्गिनं व्रतिनं विप्रं वेदवेदाङ्गसंहिताः ।
पुराणाऽऽगमशास्त्राणि कल्पाँश्चापि न दूषयेत् ॥४९॥
युगं मुशलमश्मानं दाम चुल्लीमुलूखलम् ।
सूर्यं संमार्जनीं दण्डं ध्वजं [1] वैडूर्यमायुधम् ॥५०॥
कलशं चामरं छत्रं दर्पणं भूषणं तथा ।
भोगयोग्यानि चान्यानि यागद्रव्याणि यानि च ॥५१॥
महास्थानेषु वस्तूनि यानि वा देवतालये ।
दिव्योक्तानि पदार्थानि भूताविष्टानि यानि वै ॥५२॥
लङ्घयेज्जातु नैतानि न चैतानि पदा स्पृशेत् ।
या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ॥५३॥
परहिंसात्मिका या च न तामवतरेत् क्वचित् ।
प्रतिग्रहं न गृह्णीयादात्मभोगविधित्सया [2] ॥५४॥
देवताऽतिथिपूजार्थं यत्नतोऽप्यर्जयेद्धनम् ।
विभीतककरञ्जार्कस्नुहीछायां न संश्रयेत् ॥५५॥
स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा ।
नखाग्रकेशनिर्धूतस्नानवस्त्रपटोदकम् ॥५६॥
एतत्पर्शं त्यजेद् दूरं खरश्वाजलजस्तथा ।
लिङ्गस्थानं च निर्माल्यं नाद्यान्नैव च लङ्घयेत् ॥५७॥
नद्यां प्रवाहयेत्सर्वं दद्याद् वा शिवदीक्षिते ।
लोकोद्वेगकरी या च या च मर्मनिकृन्तनी ॥ ५८॥
स्थित्युद्वेगकरी या च तां गिरं नैव भाषयेत् ।
रम्यमप्युज्वलमपि मनसोऽपि समीप्सितम् ॥५९॥
लोकविद्वेषणं वेषं न गृह्णीयात् कदाचन ।
तन्त्रोक्तान् समयाचारानैहिकामुष्मिकोचितान् ॥६०॥

---

[1] वैदूर्य - इति ख.मा. पाठः ।
[2] विधित्सया - इति ख. मा. पाठः ।

आचरन्नादरात्सिद्धिं दीक्षितः सोऽधिगच्छति ।
सामान्यसिद्धौ रक्षार्थं परेषां न कदाचन ॥६१॥
प्रयोक्तव्यः स्वस्य मन्त्रो महापद्यपि साधकैः ।
यत्र यत्र परीवादो मात्सर्याच्छ्रूयते गुरोः ॥६२॥
तत्र तत्र न वस्तव्यं प्रमादात् संस्मरेद् हरिम् ।
विष्णोः शिवस्य शास्त्रस्य वेदस्यार्कगणेशयोः ॥६३॥
भवान्या वा यत्र निन्दा तस्मिन्स्थाने[1] वसेन्न च ।
कर्मणा मनसा वाचा न हिंसेत्परदारकान् ॥६४॥
सुदीक्षितेन नो कार्ये शापातुग्रहकर्मणी ।
न तेन मन्त्रो वक्तव्यो मुद्रा वा समया अपि ॥६५॥
सिद्धमन्त्रस्य कर्तव्यं त्रिविधं परिकीर्तित् ।
नित्यं नैमित्तिकं काम्यं तत्रादौ नित्यमुच्यते ॥६६॥
देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताः ।
सिद्धान् सिद्धाधिवासाँश्च श्रीपूर्वं समुदीरयेत् ॥६७॥
धारयेदार्जवं सत्यं सौशील्यं समतां धृतिम् ।
शान्तिं दयामवस्थां च दिव्यां शक्तिं च सर्वदा ॥६८॥
गमनागमने कुर्यात्प्रणम्य गुरुपादुके ।
पश्चात्पादेन निर्गच्छेत् प्रणम्य च गुरोर्गृहात् ॥ ६९॥
मलयूकादिरहितः केशश्मश्रुविलुञ्चनात् ।
सोमसूर्यान्तरस्थां च गवाश्वत्थादिमध्यगाम् ॥७०॥
भावयेद्देवतां विष्णुगुरुविप्रशरीरगाम् ।
मन्त्रगुप्तिश्च कर्तव्या सततं मन्त्रसिद्धये ॥७१॥
गुरोर्नाम न गृह्णीयाद्वदेदावश्यके त्विति ।
ॐ श्रीपूर्वं गुरोर्नाम देवनाम तदुत्तरम् ॥ ७२॥

---

[1] वसेद् न - इति ग.मा. पाठः ।

पादशब्दसमेतोऽयं नतमूर्धाञ्जलीयुत:।
जपन्तं च वदेन्नाम तिर्थ्यणञ्च हरेर्मम ॥७३॥
अयं च दक्षिणाचार: कथित: परमेश्वरि ।

**कुलाचार: -**

अथ वक्ष्ये कुलाचारमार्गे शास्त्रार्थनिर्णयम् ॥ ७४॥
कौलिकानां कुले जातो ज्येष्ठो यदि न दीक्षित: ।
कनिष्ठो दीक्षितश्चेत्स्यात् स कुर्यात्कुलपूजनम् ॥ ७५ ॥
पूजान्ते शेषमादाय ज्येष्ठं नत्वा निवेदयेत् ।
तस्योच्छिष्टं तु गृह्णीयात्कनिष्ठ इति निर्णय: ॥७६॥
पूजामध्ये गुरौ ज्यैष्ठे पूज्ये वाऽपि समागते ।
नत्वा ब्रूयात्स्थितिं शेषमाचरेत्तदनुज्ञया ॥७७॥
नित्यार्चनं दिवाकुर्याद्रात्रौ नैमित्तिकार्चनम् ।
काम्यार्चनं प्रोक्तकाले बहवो यत्र संगता: ॥७८॥
नत्वा स्वस्वगुरुं तत्र स्वस्वमार्गेण तर्पयेत् ।
विनाऽशनं विना स्नानं गन्धपुष्पाक्षतान्विना ॥७९॥
विना मद्यं विना मांसं कुलपूजां न कारयेत् ।
न कुर्यात्प्रजपं भुक्त्वा विना मन्त्रेण पूजनम् ॥८०॥
शक्त्या विना तथा पानमेकहस्तेन नार्चयेत् ।
श्रीचक्रमेको नो कुर्यादेकपात्रे च नार्चयेत् ॥८१॥
न पिबेदेकहस्तेन चक्रे निष्ठीवनं न च ।
प्रणम्य प्रविशेच्चक्रं विनिर्गच्छेत्प्रणम्य च ॥८२॥
श्रीचक्रे नासनं तिष्ठेन्न च वीरासनं क्वचित् ।
श्रीचक्रदर्शनं नृणां नेत्रयो: पापनाशनम् ॥८३॥
तन्नास्ति चेद् व्रणीद्वन्द्वं कौलिकस्याक्षियुग्मकम् ।
अनाचारान्सदाचारांश्चक्रस्थान् शक्तिकौलिकान् ॥८४॥
शिवगौरीधिया सर्वान् भावयन्नावमानयेत् ।
कुलाचार्यगृहं गत्वा भक्त्या पापविशुद्धये ॥८५॥

याचयेदमृतं चान्नं तदभावे जलं पिबेत् ।
कुलाचार्येण चेच्छक्त्या दत्तं पात्रं तु भक्तितः ॥८६॥
नमस्कृत्य प्रगृह्णीयादन्यथा नरकं व्रजेत् ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशश्च ह्युक्तवान् ॥८७॥ (?)
अस्नातो नातिभक्तश्च विवादी च पराङ्मुखः ।
नेदं यस्य कुले जातं यश्च संस्कारवान् द्विजः ॥८८॥
वेदाध्यायी कुलद्रव्यसेवनान्निर्धनो भवेत् ।
योगामृतस्य निष्ठीवान् मद्यभाण्डपरिभ्रमात् ॥८९॥
१ उर्ध्दनालेन पाताच्च देवताशापमाप्नुयात् ।
एकासने निविष्टा ये भुञ्जानाश्चैकभाजने ॥९०॥
एकपात्रे पिबन्तो ये ते यान्ति नरकं सदा ।
ये सेवन्ते कुलद्रव्यमेकग्रामस्थिते गुरौ ॥९१॥
तत्कुलज्ञे च तत्पुत्रे स्वज्येष्ठे कुलदेशिके ।
विनाऽनुज्ञां स पापात्मा रौरवं निरयं व्रजेत् ॥९२॥
पठनं धर्मशास्त्रस्य ह्यकुलस्त्रीनिषेवणम् ।
२ श्रौतधर्मस्याचरणं श्रोत्रियाणां च सङ्गतिः ॥९३॥
कामार्थायुर्यशोलाभज्ञानसौख्यादिनाशकः ।
रिपुणाऽपि न कर्तव्यो वाग्वादश्चक्रमध्यतः ॥९४॥
पितृमातृसमं पश्येत्तेनोक्तं पुरुषं सहेत् ।
श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि च ॥९५॥
भक्त्या श्रीपूर्वकं विद्वान्प्रणम्य परिकीर्तयेत् ।
पारम्पर्यागमाम्नायमन्त्राचारादिकं तथा ॥९६॥
सर्वंगुरुकुलाल्लब्धं सफलं स्यान्न चान्यथा ।
श्रीशास्त्रं पूजयेन्नित्यं पशुगेहे न निःक्षिपेत् ॥९७॥

---

१ श्रौतकार्यस्याचरणम् - इति पा. साधुः ।
२ ऊर्ध्वनालेन पाताच्च - इति ग. मा. पाठः ।

स्वदारवन्निषेवेत कुलशास्त्राणि तान्त्रिकः ।
कुलशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ॥९८॥
संस्कारार्थं छिन्नभिन्नान् व्यस्तवर्णांश्च वैदिकान् ।
मन्त्रान् पठेत् सम्प्रदायात्तैः स्यादत्र व्यवस्थितिः ॥९९॥
धर्मशास्त्रविरुध्दो य आचारः स तु कौलिकः ।
चक्रे नाकारयेदेता दैवात्प्राप्ताः प्रपूजयेत् ॥१००॥
गमनं नैव कुर्वीत कृत्वा निरयमाप्नुयात् ।
मातरं गुरुपत्नीं १ च भगिनीं भगिनीसुताम् ॥१०१॥
भ्रातृजायां वीरभार्यां कुमारीव्रतधारिणीम् ।
व्यङ्गाङ्गीं विकृताङ्गीञ्च क्षुब्धां प्रीतां समाहृताम् ॥१०२॥
स्नुषां सकृत्कामगतां वृद्धां नैवामनोहराम् ।
मनोहरां यौवनस्थां सुवेषां चारुहासिनीम् ॥१०३॥
रक्तान्तनयनां श्यामां पूजयेत्कौलिकाङ्गनाम् ।
अकस्माच्च न सेवेत बलेन कुलयोगिनीम् ॥१०४॥
चक्रमध्ये स्वयं क्षुब्धां वा स्वतः प्रार्थिनीं भवेत् ।
आममांसं सुराकुम्भं मत्तेभं सिद्धदर्शनम् ॥१०५ ॥
सहकारमशोकञ्च क्रीडालुब्धां कुमारिकाम् ।
एकवृक्षं श्मशानञ्च समूहं योषितामपि ॥१०६॥
नारीं च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ।
गुरुशक्तिसुतज्येष्ठकनिष्ठकुलदेशिकान् ॥१०७॥
कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ।
प्रेरकान्सूचकाँश्चापि वाचकान्दर्शकाँस्तथा ॥१०८॥
शिष्यकान्बोधकान्योगियोगिनीसिद्धपूरुषान् ।
कन्याकुमारिका नग्ना उन्मता अपि योषितः ॥१०९॥
न निन्देन्न जुगुप्सेत न हसेन्नावमानयेत् ।
नाप्रियं नामृतं ब्रूयात् कस्यापि कुलयोगिनः ॥११०॥
कुरूपेऽसति कृष्णेति न निन्देत्कुलयोषितम् ।
परीक्षेन्न च भक्तानां वीराणाञ्च कृताकृते ॥१११॥

न पश्येत् पतितां नग्नामुन्मत्तां प्रकटस्तनीम् ।
न दिवा सेवयेन्नारीं तद्योनिं न निरीक्षयेत् ॥११२॥
स्त्रियं शतापराधां वा पुष्पेणापि न ताड़येत् ।
दोषान्नगणयेत्स्त्रीणां गुणानेव प्रकाशयेत् ॥११३॥
तिष्ठन्ति कुलयोगिन्य: कुलवृक्षेषु सर्वदा
तत्पत्रेषु न भोक्तव्यमर्कपत्रे विशेषत: ॥११४॥
न स्वपेत्कुलवृक्षाधो नचोपद्रवमाचरेत् ।
दृष्ट्या भक्त्या नमस्कुर्याच्छेदयेन्न कदाचन ॥११५॥
श्लेष्मान्तककरञ्जाक्षनिम्बाश्वत्थकदम्बका: ।
विल्वो बटोदुम्बरौ च चिञ्चा चेति दश स्मृता: ॥११६॥
प्रायश्चित्तं भृगो: पातं सन्यासं व्रतधारणम् ।
तीर्थयात्रादिगमनं कौले पञ्च विवर्जयेत् ॥११७॥
अन्त:कौलं वहि:शैवं जनमध्ये तु वैष्णवम् ।
कौलं तु गोपयेद्देवि नारिकेलफलाम्बुवत् ॥११८॥
गुरुं प्रकाशयेद् धीमान् मन्त्रं यत्नेन गोपयेत् ।
१ अप्रकाशप्रकाशाभ्यां क्षीयन्ते सम्पदायुषम् ॥११९॥
सर्वाचारपरिभ्रष्ट: कुलाचारं समाश्रयेत् ।
कुलाचारपरिभ्रष्टो रौरवं नरकं व्रजेत् ॥१२०॥
वामाचारं तु कथयेदकुली नामसद्गुरु: ।
आचारात्पतिते शिष्ये पातकी स गुरुर्भवेत् ॥१२१॥
सर्वभूतहिते रक्त: समयाचारपालक: ।
अनित्यकर्मसन्त्यागी नित्यानुष्ठानतत्पर: ॥१२२॥
परस्यां देवतायान्तु सर्वकर्मनिवेदक:।
अन्यमन्त्रार्चनश्रद्धामन्यमन्त्रस्य पूजनम् ॥१२३॥

१ अप्रकाश्यप्रकाशेन क्षीयेते सम्पदायुषी - इति पाठ उचित: ।

कुलस्त्रीवीरनिन्दाञ्च तद्द्रव्यस्यापहारणम् ।
स्त्रीमयञ्च जगत्सर्वं स्वयं तावत्तथा भवेत् ॥१२४॥
पेयं चर्व्यं तथा चोष्यं भक्ष्यं लेह्यं गृहं सुखम् ।
सर्वं च युवतीरूपं भावयेद्यतमानसः ॥१२५॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ।
स्त्रीसङ्गिना सदा भाव्यं नान्यथा स्वस्त्रियामपि ॥१२६॥
तद्धस्तावचितं पुष्पं तद्धस्तगृहीतं जलम् ।
तद्धस्तरचितं भोज्यं देवताभ्यो निवेदयेत् ॥१२७॥
कुलजां युवतिं वीक्ष्य नमस्कुर्यात् समाहितः ।
यदि भाग्यवशेनैव कुलदृष्टिस्तु जायते ॥१२८॥
तदैव मानसीं पूजां तदा तासां प्रकल्पयेत् ।
बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा ॥१२९॥
कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत् ।
तासां प्रहारो निन्दा च कौटिल्यमप्रियंतथा ॥१३०॥
सर्वथा न च कर्तव्यमन्यथा सिद्धिरोधकृत् ।
गोचर्मस्थं यथा क्षीरं न पेयं स्याद् द्विजोत्तमैः ॥१३१॥
तथा पशुमुखाद् धर्मो न श्रोतव्यस्तु कौलिकैः ।
असंस्कारं पिबेद्द्रव्यं बलात्कारेण मैथुनम् ॥१३२॥
स्वहस्तेन पशुं हत्वा रौरवं नरकं व्रजेत् ।
वीरहत्या वृथापानं वीरद्रव्यापहारणम् ॥१३३॥
वीरस्त्रीगमनञ्चैव तत्संयोगस्तु पञ्चमः ।
महापातकमित्युक्तं कौलिकानां कुलागमे ॥१३४॥
शृणु पुत्र रहस्यं मे समयाचारसम्भवम् ।
येन हीना न सिध्यन्ति जन्मकोटिसहस्रशः ॥१३५॥
मनवः कुलशास्त्राणां कुलचर्यानुयायिनाम् ।
उदारचित्तः सर्वत्र वैष्णवाचारतत्परः ॥१३६॥
परनिन्दासहिष्णुः स्यादुपकाररतः सदा ।
पर्वते विपिने वाऽपि निर्जने शून्यमण्डपे ॥१३७॥

चतुष्पथे जले शून्ये यदि दैवाद् गतिर्भवेत् ।
क्षणं ध्यात्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम् ॥१३८॥
गृध्रं वीक्ष्य महाकालीं नमस्कुर्यादलक्षितः ।
क्षेमङ्करीन्तथा वीक्ष्य जम्बुकीं यमदूतिकाम् ॥१३९॥
कुरङ्गश्येनभूकाकान् कृष्णमार्जारमेव च ।
कृशोदरि महाचण्डे मुक्तकेशि वलिप्रिये ॥१४०॥
कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये ।
श्मशानस्थं शवं दृष्ट्वा प्रदक्षिणमनुस्मरन् ॥१४१॥
प्रणम्यानेन मन्त्रेण मन्त्री सुखमवाप्नुयात् ।
घोरदंष्ट्रे करालास्ये किटिशब्दप्रणादिनि ॥१४२॥
घोरे घोररवास्फारे नमस्ते चितिवासिनि ।
रक्तवस्त्रं तथा पुष्पं राजानं राजपुत्रकम् ॥१४३॥
हस्त्यश्वरथशस्त्राणि फलकान्वीरपूरुषान् ।
महिषं कुलनाथञ्च दृष्ट्वा महिषमर्दिनीम् ॥ १४४॥
प्रणम्य जयदुर्गाम्वां स च विघ्नैर्न लिप्यते ।
जय देवि जगद्धात्रि त्रिपुरे च त्रिदैवते ॥१४५॥
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ।
मद्यभाण्डं समालोक्य मत्स्यं मांसं वरस्त्रियम् ॥१४६॥
दृष्ट्वा च भैरवीं देवीं प्रणम्य विमृषेन्मनुम् ।
घोरविघ्नविनाशाय कुलाचारसमृद्धये ॥१४७॥
नमामि वरदे देवि मुण्डमालाविभूषिते ।
रक्तधारासमाकीर्णे वरदे त्वां नमाम्यहम् ॥१४८॥
सर्वविघ्नहरे देवि नमस्ते वरवल्लभे ।
एतेषां दर्शनेनैव यदि दैवान्न कुर्वते ॥१४९॥
शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते ।
वेदशास्त्रपुराणानि स्पष्टा वेश्याङ्गना इव ॥१५०॥
इयं तु शाम्भवी विद्या गुप्ता कुलवधूरिव ।
सुगुप्तं कौलिकाचारमनुगृह्णन्ति देवताः ॥१५१॥

वाञ्छासिद्धिं प्रयच्छन्ति नाशयन्ति प्रकाशनात्।
कुलपुष्पं कुलद्रव्यं कुलपूजां कुलं जपम् ॥१५२॥
गुरुं कुलपतिं चापि कुलमालां कुलाकुलम् ।
कुलचक्रं कुलध्यानं सर्वथा न प्रकाशयेत् ॥१५३॥
प्रकाशात्सिद्धिहानिः स्यात्प्रकाशाद् बन्धनादिकम् ।
प्रकाशाद् वलहानिः स्यात्प्रकाशाद्देवहिंसनम् ॥१५४॥
प्रकाशान्मृत्युलाभःस्यान्न प्रकाश्यं कदाचन ।
पूजाकाले महेशानि यदि कोऽप्यत्र गच्छति ॥१५५॥
दर्शयेद् वैष्णवीं मुद्रां विष्णुन्यासं तथा स्तवम् ।
कदाचिदङ्गहानिः स्यान्न च व्यक्तिः कदाचन ॥१५६॥
परं पूजा न कर्तव्या न च व्यक्तिः कदाचन ।
अन्तःशाक्ता बहिःशैवाः सभायां वैष्णवा मताः ॥१५७॥
नानारूपधरा वीरा विचरन्ति महीतले ।
दक्षिणाख्यं कुलाचारं कथितं तव सुव्रते ॥१५८॥
न कस्मैचित्प्रवक्तव्यं यदीच्छेत्प्रियमात्मनः ।

**वामकुलमार्गाधिकारिताविवेकः –**

वक्ष्येऽथ प्रकटं धर्मं कौलिकानां च वामिनाम् ॥१५९॥
इहलोके परत्रापि यं कृत्वा सुखमाप्नुयात् ।
ब्राह्मण्यं स्वस्य विप्रस्तु सम्यग् ज्ञात्वा समाविशेत् ॥१६०॥
वाममार्गेऽथवा कौले तत्रापि च न लङ्घयेत् ।
स्वस्ववर्णाश्रमाचारं न कुर्यात्तत्प्रतिग्रहम् ॥१६१॥
परस्त्रीधनकामं[1] च वेदशास्त्रादिनिन्दनम् ।
अनिग्रहं चेन्द्रियाणां वचनं गुरुविप्रयोः॥१६२॥
सङ्गः सर्वात्मना त्याज्यो गुप्तस्तिष्ठेद् गुरुं विना ।
सत्सङ्गश्च विवेकश्च निश्चलं नयनद्वयम् ॥१६३॥

---

[1] धननिन्दा - इति ग. मा. पाठः ।

यस्य नास्ति नरःसोऽन्धः कथं वामे सुखं लभेत् ।
सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् ॥१६४॥
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ।
मद्यं मांसं सुरापानं मत्स्याः स्त्रीणां धवास्तथा ॥१६५॥
अनेका यत्र जायन्ते तत्र वामो गतिप्रदः ।
स्थित्वा तु दक्षिणे मार्गे गुप्तं भुङ्क्ते पलादिकम् ॥१६६॥
स याति नरकं घोरं विष्ठायां जायते कृमिः ।
विना वलिं पलं भुङ्क्ते विना पूजां सुरां पिवेत् ॥१६७॥
दूतीयज्ञं विना गच्छेत् स्त्रियं वाम्यपि नारकी ।
अवुद्ध्वा समयाचारं कुलधर्मं चरेद्यदि ॥१६८ ॥
स गुरुश्चैव शिष्यश्च योगिनीनां भवेत्पशुः ।
वाममार्गं न जानाति मूढात्मा मोक्षमिच्छति ॥१६९॥
पारावारमपारं स बाहुभ्यां तर्तुमिच्छति ।
सर्वकर्मविहीनो यो वर्णाश्रमविवर्जितः ॥१७०॥
कौले वा वाममार्गे वा भुक्तिमुक्त्योश्च भाजनम् ।
निन्दन्तु वान्धवाः सर्वे त्यजन्तु स्त्रीसुतादयः ॥१७१॥
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ।
रोगदारिद्र्यदुखाद्यैः पीडितोऽप्यनिशं त्वहम् ॥१७२॥
लक्ष्मीस्तिष्ठतु वा यातु न मुञ्चामि पथं त्विदम् ।
एवं यस्य दृढा भक्तिः स वामे सिद्धिमाप्नुयात् ॥१७३॥
नार्थलाभान्नच क्रोधान्न द्वेषान्न च मत्सरात् ।
न कामान्नभयाद्वापि मार्गं प्राप्तं परित्यजेत् ॥१७४॥
प्रत्यहं नार्चयेद् देवीं मार्गेऽस्मिन् विघ्नमाप्नुयात् ।
गुरुकारुण्यसम्पूतो देही निर्धूतकल्मषः ॥१७५॥
कुलपूजारतो यस्तु सोऽयं कौलो न चेतरः ।
परोक्षे को न जानीते कस्य किं च भविष्यति ॥१७६॥
यद्वै प्रत्यक्षफलदं तदेवोत्तमदर्शनम् ।
गुरूपदेशनिहिता महान्त इति केचन ॥१७७॥

मोहयन्ति जनान् केचित्स्वयं पूर्वविमोहिताः ।
पेयं मद्यं पलं खाद्यं समालोक्य प्रियामुखम् ॥१७८॥
इत्येवाचरणं श्रेष्ठं परमाः प्रवदन्ति च ।
मद्यपानेन मनुजो यदि सिद्धिं लभेत च ॥१७९॥
मद्यपानरताः सर्वे संसिद्धा न भवन्त्युमे ।
मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत् ॥१८०॥
क्रव्यादानां तदा मोक्षो मांसादन्यत्र भुञ्जते ।
स्त्रीसम्भोगेन भो देवा यदि मोक्षोऽभिजायते ॥१८१॥
तदा सर्वेऽपि मुक्ताः स्युः कस्य जन्म भविष्यति ।
कृपाणधारागमनाद् व्याधकर्णावलम्बनात् ॥१८२॥
भुजङ्गधारणान्नूनमशक्यं कुलवर्त्मनः ।
वृथापानं तु देवेशि सुरापानमिहोच्यते ॥१८३॥
तन्महापातकं ज्ञेयं वेदादिषु निरूपितम् ।
अनाधेयमनालोक्यमनास्वाद्यमपेयकम् ॥१८४॥
मद्यं मांसं पशूनान्तु कौलिकानां महत्फलम् ।
अमेध्यानि द्विजातीनां मद्यान्येकादशैव हि ॥१८५॥
द्वादशं तु सुरामद्यं सर्वेषामुत्तमं स्मृतम् ।
ब्राह्मणोऽपि च राजन्यः वैश्यो वा न सुरां पिवेत् ॥१८६॥
सुरादर्शनमात्रेण कुर्यात्सूर्यावलोकनम् ।
तस्याः संसर्गमात्रेण प्राणायामत्रयं चरेत् ॥१८७॥
आजानुभ्यां भवेत्स्नानं नाभ्यामुपवसेदहः ।
ऊर्ध्वं नो चेत्त्रिरात्रं तु मद्यस्य स्पर्शने विधिः ॥१८८॥
सुरापाने कामकृते ज्वलन्तीं तां प्रवेशयेत् ।
मुखे तया विनिर्दग्धे तच्छुद्धिं समवाप्नुयात् ॥१८९॥
अविधानेन यो हन्यादात्मार्थे प्राणिनः प्रिये ।
निवसेन्नरके घोरे दिनानि पशुरोमभिः ॥१९०॥
समितानि दुराचारः तिर्यग्योनिषु जायते ।
तृणं चाप्यविधानेन छेदयेन्न कदाचन ॥१९१॥

विधिवद् गां द्विजं वाऽपि हत्वा पापैर्न लिप्यते ।
सर्वेभ्यः कौलिकः श्रेष्ठ स्तूर्ध्वाम्नायी च वामगः ॥१९२॥
अधिकारी भक्तियुक्तो यश्च सद्गुरुसेवकः ।
स एव कौलिको वन्द्य इतरे मद्यपा मताः ॥१९३॥
स्मरणं कीर्तनं तस्य दर्शनं वन्दनं तथा ।
संभाषणं च कुरुते राजसूयाधिकं फलम् ॥१९४॥
स यत्र वसते देवास्तत्र श्रीर्विजयो भवेत् ।
अनामयं सुवृष्टिश्च सुभिक्षं निरुपद्रवः ॥१९५॥
दृष्टे दृशं च प्रणमेदन्यैर्वर्ज्यः स दूरतः ।
पूर्वाम्नायःसृष्टिरूपः स्थितिरूपस्तु दक्षिणः ॥१९६॥
संहारः पश्चिमाम्नाय उत्तरोऽनुग्रहो भवेत् ।
मन्त्रयोगं विदुःपूर्वं भक्तियोगं तु दक्षिणम् ॥१९७॥
पश्चिमं कर्मयोगं तु ज्ञानयोगं तथोत्तरम् ।

**इतितन्त्रचिन्तामणौ दक्षिणद्याचारनिर्णयनामा**
**द्वादशः प्रकाशः ।**

*****

# त्रयोदशः प्रकाशः

## महानीलादिक्रमः

**देव्युवाच -**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
दशविद्यादिका देव दश वै ये क्रमाः प्रभो ॥१॥
पुरैव कथिताः स्वामिन् तं क्रमं वद सम्प्रति ।

**शिव उवाच -**

रहस्यातिरहस्यं च कथ्यते तव भक्तितः ॥२॥
महानीलक्रमेणैव कालिका सिद्धिदायिनी ।
महानीलक्रमो देवि द्विविधः परिकीर्तितः ॥३॥
सकलो निष्कलश्चेति तं क्रमं शृणु पार्वति ।
खङ्गहस्तशिरोन्यस्तः सर्वदा मुक्तकुन्तलः ॥४॥
सदा [1] मांसासवोल्लासविजयी घूर्णलोचनः।
सिन्दूरतिलकं भाले पाणौ तु मदिरारसम् ॥५॥
न करोति नरो यस्तु स कथं मम पूजकः ।
रात्रौ पर्यटनं चैव रात्रौ शक्तेः प्रपूजनम् ॥६॥
न करोति नरो यस्तु स कथं मम पूजकः ।
योनिचुम्बनकं कर्म शक्तेरालिङ्गनं तथा ॥७॥
न करोति नरो यस्तु स कथं मम पूजकः ।
ताम्बूलं योनिचक्रं च मुण्डमाला शवासनम् ॥८॥
सिन्दूरं खड्गकं चैवे संविदासवयो रसम् ।
एतान् विहाय य कश्चित्कालीं साधितुमुद्यतः ॥९॥

---

[1] मांसासवोल्लासी - इति पा. उचितः ।

इह क्षोभमवाप्नोति परत्र नरकं व्रजेत् ।
[1] कोट्यर्बुदयुगे देवि न हि सिध्यति[2] तारिणी ॥१०॥
सिन्दूरबिन्दुभ्रूयुग्मे [3] स्वयम्भूमुनिपत्रकम् ।
रक्तचन्दनजं वाऽपि त्रिपुण्ड्रं च तथोपरि ॥११॥
कुर्वन् दले कज्जलस्य बिन्दुर्देयो महेश्वरि ।
महानीलक्रमे देवि तिलकः परिकीर्तितः ॥१२॥
श्मशानशायी मांसाशी संविदानन्दमानसः ।
स्त्रियं पश्यन् स्पृशन् गच्छन् सर्वकालं जपं चरेत् ॥१३॥
वेश्यारतःश्मशानस्थो मृदुचूडकसंयुतः ।
दन्ताक्षमालया देवि [4] राजदन्तेन मेरुणा ॥१४॥
मालां कृत्वा जपेद्देवि सदा ताम्बूलचर्वकः ।
कपालपात्रसंपूजा वीरसाधनतत्परः ॥१५॥
कपालमालाभरणो रामाचुम्बनतत्परः ।
शक्त्यानन्दो नेत्रयुगे मुखे हालां गृहाङ्गणे ॥१६॥
वेश्या वाला करे माला [5] शक्तिलीला भगाम्वुजे ।
योनिसञ्चुम्बनं कृत्वा सर्वकालं जपं चरेत् ॥१७॥
शक्त्युद्भवो न संस्कार्यः सर्वमेतच्चराचरम् ।
अविकारी प्रदृष्टात्मा स्त्रीभक्तो विजितेन्द्रियः ॥१८॥
ईदृग्विधो नरो देवि महानीलक्रमे मतः।
राजदन्तमयी माला द्विरदोष्ट्राश्वसम्भवा ॥१९॥
अशक्तानां निष्कलःस्यात्तं क्रमं शृणु पार्वति ।
[6] पीताया दुग्धकं पीत्वा सच्चिदान्दमानसः ॥२०॥

---

[1] कोट्यर्बुदयुगैर्देवि - इति पा. उचितः ।
[2] कालिका - इति पा. अन्यत्र ।
[3] मध्ये - इति पा. अन्यत्र ।
[4] गजदन्तेन - इति पा. अन्यत्र ।
[5] शक्तिलोला - इति ग.मा.पा. ।
[6] पीतया - इति ग.मा.पा. ।

स्फाटिकीं मालिकां कृत्वा विहारे जपमाचरेत् ।
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ॥२१॥
न जपे कालनियमो महामन्त्रस्य साधने ।
यस्मिन् मन्त्रे य आचारस्तत्र धर्मस्तु तादृश: ॥२२ ॥
भ्रान्तिस्तत्र न कर्तव्या स्वर्गो वा मोक्ष एव च ।
मृदुकोमलकं देवि चूडकं वाप्यचूडकम् ॥२३॥
शवं वीरासनं कृत्वा योनित्वगासनं च वा ।
कामरूपासनं देवि सुरतासनमेव च ॥२४॥
सिन्दूरासनकं देवि पर्वतासनमेव च ।
सरोवरासनं चेति तिलपुष्पं च खञ्जनम् ॥२५॥
चन्द्रविम्बं सर्पिणी च चुम्बनासनमेव च ।
प्रयागासनकं देवि महाप्रयागासनं तथा ॥२६॥
१ स्वर्क्षत्खट्वासने चेति योनिचुम्बनमासनम् ।
निष्कस्पर्शासनं देवि वायुस्पर्शासनं च वा ॥२७॥
२ आक्षेपासनकं देवि तथा मुण्डासनं तथा ।
श्रीमुण्डसुरतं वाऽपि श्रीवीरसुरतं च वा ॥२८॥
पञ्चवीरासनं देवि सुरेन्द्रादिदिशाक्रमात् ।

**देव्युवाच -**

देवेश श्रोतुमिच्छामि महाचीनक्रमं परम् ॥२९॥

**शिव उवाच -**

महाचीनक्रमं देवि कथ्यते साम्प्रतं मया ।
महाचीनक्रमेणैव तारा शीघ्रफलप्रदा ॥३०॥
ब्रह्मचीनो दिव्यचीनो वीरचीनस्तृतीयक: ।
महाचीनो निष्कलश्च चीन: पञ्चविधो मत: ॥३१॥

---

१ स्पर्श खट्वासने चेति - इति ग.मा.पा. ।

२ आश्रेयासनम् - इति ग.मा.पा. ।

महाचीनक्रमो देवि द्विविध: परिकीर्तित:।
सकलो निष्कलश्चेति सकलो वौद्धगोचर: ॥३२॥
निष्कलो व्राह्मणानाञ्च द्वितीयं शृणु पार्वति ।
[1] न च द्वयं त्रिभुवने सारात्सारतरं परम् ॥३३॥
महाचीनक्रमो देवि द्विविधो हि प्रकीर्तित: ।
तत्रैव देवदेवेशि त्रैगुण्याद भेदभाजनम् ॥३४॥
स्नानादिमानसं शौचं मानस: प्रवरो जप: ।
पूजनं मानसं दिव्यं मानसं तर्पणादिकम् ॥ ३५॥
मानसो नियम: प्रोक्तो मानसं दन्तधावनम् ।
सर्वत्रैव शुभ: कालो नाशुभो विद्यते क्वचित् ॥३६॥
न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ।
वस्त्रार्द्रे मानसं शौचं देहस्पर्शादिवारिणा ॥३७॥
शुद्धिं न कारयेदत्र निर्विकल्पं मनश्चरेत् ।
नात्र शुद्धेरपेक्षाऽस्ति न चामेध्यादिदूषणम् ॥३८॥
य एवं चिन्तयेन्मन्त्रं सर्वकामसमृद्धिदम् ।
गद्यपद्यमयी वाणी सभायां तस्य जायते ॥३९॥
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मता: ।
राजानोऽपि च दासत्वं भजन्ति किं परे जना: ॥४०॥
सर्वदा पूजयेद्देवीमस्नात: कृतभोजन: ।
महानिश्यशुचौ देशे वलिं मन्त्रेण दापयेत् ॥४१॥
स्त्रीद्वेषो नैव कर्तव्यो विशेषात्पूजनं स्त्रिय:।
जपस्थाने महाशङ्खं निवेश्योर्ध्वे जपं चरेत् ॥४२॥
स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र कुत्राप्यचूडके ।
भुक्त्वा ताम्बूलमन्यांश्च भक्ष्यद्रव्यान्यथारुचीन् ॥४३॥

---

[1] नव द्वयम् - इति ग.मा.पा. ।

मांसं मत्स्यं दधि क्षौद्रं संविदासवयो रसम् ।
उक्तान्यशेषभक्ष्याणि भुक्त्वा भक्ष्यं चरेज्जपम् ॥४४॥
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ।
न जपे कालनियमो नार्चादिषु वलिष्वपि ॥४५॥
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ।
वस्त्रासनं गेहदेहस्पर्शास्पर्शादिवारिणा ॥४६॥
तैलं संलाप्य देवेशि ताम्बूलं भक्षयन् सदा ।
नानाऽम्वराणि सन्धार्य देहं वस्त्रेण मार्जयेत् ॥४७॥
एवं स्नानं चरेद्देवि सर्वदा तद्गताशयः ।
महाचीनक्रमे देवि विप्रस्नानमिदं भवेत् ॥४८॥
शुद्धिं न चाचरेदत्र निर्विकल्पं मनश्चरेत् ।
सुगन्धिश्वेतलौहित्यकुसुमै रक्तचन्दनैः ॥४९॥
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ।
वर्जयेद् विल्वपत्रं च [1] मनुं यत्नेन वर्जयेत् ॥५०॥
केशान् [2] संवर्धयेद्देवि सर्वदा तैलभूषितः ।
अष्टम्यां च चतुर्दश्यां विशेषदिवसे सदा ॥५१॥
नाधर्मो विद्यते सुभ्रु किन्तु धर्मो महान् भवेत् ।
स्वेच्छानियम उक्तोऽत्र प्रचरेद्धृष्टमानसः ॥५२॥
[3] कृतार्थं मन्यमानस्तु सन्तुष्टो निजमानसः ।
हरेर्नाम न गृह्णीयान्न स्पृशेत् तुलसीदलम् ॥५३॥
नान्यचिन्ता प्रकर्तव्या नान्यनिन्दा कदाचन ।
नान्यमन्त्रं जपेद्देवि निर्विकल्पः सदा भवेत् ॥५४॥
सद्यो मद्यं पिबेद्देवि मातङ्गीभिर्विहारवान् ।
योनिं चुम्बन् लिहन् पश्यन् जपं कुर्यादनन्यधीः ॥५५॥

---

[1] मरुम् (मरुचकम्) - इति पा. उचितः ।
[2] ५१, ५२ श्लोकौ ख.मा.न प्राप्येते ।
[3] कृतार्थं जपेद्देवि पर्यन्तं श्लो. ख. मा ५३, ५४ न प्राप्येते ।

योनौ विचिन्त्य जप्तव्यं सिद्धिर्दिवसमात्रतः [1] ।
अन्यथा नैव सिद्धिः [2] स्यात्प्रजपैरपि कोटिभिः ॥५६॥
पुरश्चरणलक्षैश्च होमादीनां च कोटिभिः ।
ब्राह्मीभूते महाचारे [3] निर्विकल्पः प्रियेऽस्ति वै ॥५७॥
भ्रूयुग्मे कुण्डले देवि सिन्दूरं तदनन्तरम् ।
कुचन्दनं त्रिपुण्ड्रं च पङ्कजं वा सकेसरम् ॥५८॥
मुण्डमाला गले धार्या कपालपाणिसङ्गतः ।
इत्याचारपरो नित्यो महाचीनक्रमी भवेत् ॥५९॥
सर्वदाऽऽनन्दहृदयः सर्वदा भक्तसेवकः ।
कर्णनेत्रान्तरस्थो यः महाशङ्खः प्रकीर्तितः ॥६०॥
पञ्चाशन्मणिभिर्माला गोनरेभास्थिसम्भवा ।
मालां कुर्यान्महेशानि चाष्टसिद्धीश्वरो भवेत् ॥६१॥
सैव तारा महेशानि नात्र कार्या विचारणा ।
शिव शङ्कर विश्वेश विश्वताटक शाश्वत ॥६२॥
वेदहीना वै ये धर्मास्तान् कथं ब्राह्मणश्चरेत् ।

**शिव उवाच -**

साधु देवि महाप्राज्ञे प्रिये साधकसुप्रिये ॥६३॥
[4] तद्भावनाश्रमा यत्र तद्भावमाद्रियात् प्रिये ।
यथा श्राद्धविधौ देवि मांसं मुख्यं प्रकीर्तितम् ॥६४॥
कलौ तच्च निषिद्धं स्याद् ब्राह्मणानां महेश्वरि ।
आत्मार्थं वा परार्थं वा पशून हत्वा पशुर्भवेत् ॥६५॥
यावन्ति तस्य रोमाणि तावद्योनिमावाप्नुयात् ।
तथा तद्भावनायान्तु न च दोषोऽस्ति पार्वति ॥६६॥

---

[1] वत्सरमात्रत. - इति पा अन्यत्र ।
[2] प्रजप्तैः - इति पा. अन्यत्र ।
[3] विकल्पः कः - इति पा. अन्यत्र ।
[4] तद्भावना समायज्ञा - इति पा. अन्यत्र ।

सकलस्तु मया प्रोक्तो निष्कलं शृणु पार्वति ।
मणिवन्धादधः[1] पाणिं पादाङ्गुल्या अधः शिवे ।६७॥
मुखं प्रक्षालयेद्देवि चीनस्नानमिदं भवेत् ।
जानुभ्यामवनिं धृत्वा भूमौ मस्तकमानयेत् ॥६८॥
चीनमार्गे नमस्कारः कीर्तितस्तु मया तव ।
पूर्वक्रमस्य देवेशि क्रमः प्रतिनिधिर्मया [2] ॥६९॥
स्नानदानादिकं कृत्वा तथा पूजादिकं प्रिये ।
[3] तथा स्नानं न मे देहो न [4] पापं ममास्ति वै ॥७०॥
किं स्नानं कस्यचित्स्नानमस्नातः कृतभोजनः ।
सर्वमेव हृदम्भोजे मयि सर्वं प्रतिष्ठितम् ॥७१॥
मयिं [5] ज्ञाता मन्त्रसिद्धिर्मम देवा वरप्रदाः ।
तेजोरूपं जगत्सर्वं तारिणी तत्स्वरूपधृक् ॥७२॥
तत्तेजसा स्वस्य देहं संभाव्य जपमाचरेत् ।
भावनावशमापन्नो भवेद्योगी महाकविः ॥७३॥
गुडार्द्रकरसेनैव सुरा तु ब्राह्मणस्य च ।
तदभावे जलं देवि संभाव्य पूजनं चरेत् ॥७४॥
तद्भावहृदयासन्नः सदा तद्गतमानसः ।
द्वन्द्वभावं परित्यज्य सर्वसिद्धीश्वरो भवेत् ॥७५॥
ब्रह्मा चैव वशिष्ठश्च तथाऽन्ये च ऋषीश्वराः ।
निष्कलक्रममार्गेण भजन्ति सततं शिवे ॥७६॥
ताराभक्ता महेशानि ब्राह्मणाः परिकीर्तिताः ।
ब्रह्मविद्या महाविद्या सर्वत्र दुर्लभा कलौ ॥७७॥

---

[1] पाणिः पादौ गुल्यादध - इति पा. अन्यत्र ।

[2] मम - इति पा. अन्यत्र ।

[3] न च म्लानोया - इति पा. अन्यत्र ।

[4] न च पापं ममास्ति वै - इति पा. समीचीनः ।

[5] ज्ञाते - इति पा. उचितः ।

रहस्यातिरहस्यं च गोप्तव्यं पशुसङ्कटे ।

**देव्युवाच -**

छिन्नमस्ताविद्यौ देवक्रमं मे ब्रूहि सत्त्वरम् ॥७८

**शिव उवाच -**

दिव्यचीनक्रमेणैव छिन्नमस्ता वरप्रदा ।

क्रमद्वयं महेशानि पूर्वमेव प्रकाशितम् ॥७९॥

एतस्यास्तिलको देवि भ्रूमध्ये च कुचन्दनम् ।

तदन्ते रोचनापत्रे त्रिपुण्ड्रं दिव्यपर्णकैः ॥८०॥

श्मशानभस्मबिन्दुस्तु तन्मध्ये दापयेत्प्रिये ।

मुखे मुखं प्रदत्त्वा तु सर्वकालं जपेच्छिवे ॥८१॥

योनिचक्रं समालोक्य यत्किञ्चित् कुरुते नरः ।

तत्तदक्षयमायाति छिन्नविद्याप्रसादतः ॥८२॥

काली तारा छिन्नमस्ता तथा षट् शाम्भवे शिवे ।

दिक्कालनियमो नास्ति स्थित्यादिनियमो न हि ॥८३॥

पाताले कुहरे दुर्गे पर्वते तटिनीतटे ।

अन्तरिक्षे तथा भूमौ सर्वत्र जपमाचरेत् ॥८४॥

विशेषः कथितो देवि शक्तितत्त्वस्य यानकम् ।

**देव्युवाच -**

गन्धर्वाख्यं क्रमं देव कथयस्व मम प्रभो ॥८५॥

**शिव उवाच -**

गन्धर्वाख्यक्रमेणैव सुन्दरी [1] भुवि दुर्लभा ।

गन्धर्वाख्यक्रमं देवि कथ्यते शृणु साम्प्रतम् ॥८६॥

भ्रूमध्ये कुङ्कमं देवि [2] तदन्ते मलयागुरू ।

अष्टगन्धत्रिपुण्ड्रस्य मध्ये कस्तूरिकान्वितम् ॥८७॥

---

[1] सिद्धिदायिनी - इति पा. अन्यत्र ।

[2] तन्मध्ये - इति पा. अन्यत्र ।

सुगन्धश्वेतलौहित्यपुष्पैः सम्भूषितो नरः ।
स्वस्तिकाङ्कितदेहस्थो रत्नप्राकारसंयुतः ॥८८॥
अष्टगन्धस्य धूमेन नानासौगन्ध्यभूषितः ।
रक्तमाल्याम्बरधरो मुक्ताहारोपशोभितः ॥८९॥
[1] पूर्णाभिषेकः शिरसि तेन तत्र न मुण्डनम् ।
केशान् सम्वर्धयेद्देवि सौगन्ध्यतैलभूषितः ॥९०॥
नानासौगन्ध्यभोज्यैश्च राजयोग्यैर्महेश्वरि ।
२ आयोनिसंगताः पूताः किं पुनर्वह्निनतापिताः ॥९१॥
सदा[2]चोष्णोदकैः स्नायात्तदभावे यथोदकम् ।
गृहं चित्रैस्तु संचित्रं दर्पणोदरसन्निभम् ॥९२॥
वितानध्वजभूषाढ्यं घण्टानादोपशोभितम् ।
पञ्चवादित्रसंयुक्तं नानाघोषपसमन्वितम् ॥९३॥
अतः सूक्षमाम्वरैर्युक्तः स्वर्णपात्रादिरञ्जितः ।
ग्रैवेयवलयाङ्गुल्यभूषर्णैभूषितः सदा ॥९४॥
नानामधुरभोज्यैश्च दुग्धपाकैरनेककैः ।
नानाभोगेन संयुक्तो गन्धर्वाख्यः क्रमो भवेत् ॥९५॥
इति संक्षेपतः प्रोक्तं भैरवाख्यं शृणु क्रमम् ।
स्वपुष्पक्रमयोगेन भैरवी भुवि दुर्लभा ॥९६॥
स्वपुष्पाख्यक्रमो देवि कथ्यते शृणु साम्प्रतम् ।
तरुणीं सुन्दरीं रम्यां तारुण्यामृतविग्रहाम् ॥९७॥
सदा रतौ साभिलाषा मैथुनोद्यतमानसाम् ।
मन्त्रयन्त्रसमायुक्तां समानीय महेश्वरि ॥९८॥
नग्नां तां च विधायादौ स्वयं नग्नो जपं चरेत् ।
परस्परालोकनं च कर्तव्यं च परस्परम् ॥९९॥

---

[1] पूर्णाभिषिक्तशिरसि - इति पा. अन्यत्र ।
[2] यथोदकैः - इति पा. उचितः ।

अविकारी यदा देवि साधनार्हो न चान्यथा ।
विकारे भावमाने च साधको नश्यति क्षणात् ॥१००॥
तत्कुण्डञ्च महेशानि क्षणाद्विकर्षितं भवेत् ।
तथापि स्वस्य देहस्य विकारं न हि कारयेत् ॥१०१॥
सापि चेद्देवदेवेशि सविकारा यदा भवेत् ।
पुष्पिणीमनुना देवि एलापुष्पं समानयेत् ॥१०२॥
द्राविणीमनुना देवि वलाद् दृष्ट्या द्रवं नयेत् ।
उभयं चैव संगृह्य जपं कुर्यान्महेश्वरि ॥१०३॥
शक्तेश्च साधकौ देवि दम्पती दुर्लभौ स्मृतौ ।
वगलासुन्दरीताराकाल्याद्यास्वपि यत्नत: ॥१०४॥
क्रमोऽयं योग्यतां सम्यङ् नात्र कार्या विचारणा ।
कलिदोषवशाद्देवि नायं योगो भविष्यति ॥१०५॥
तस्मात्पाशवकल्पेन वाला शस्ताऽधुना शिवे ।
वालाया उभयाचारो दक्षिणो मुख्य एव हि ॥१०६॥
शीघ्रं चेत्सिद्धिकामश्चेद् गवाक्षयोगमभ्यसेत् ।
यत्र स्त्रीणां समूहोऽस्ति नदीनदसमुद्रके ॥१०७॥
यत्र स्नानं प्रकुर्वान्ति गवाक्षं तत्र कारयेत् ।
तामालोक्य प्रयत्नेन जपं कुर्यान्निरन्तम् ॥१०८॥
सर्वा: संवीक्षयेद्देवि स्वर्णरत्नादिभि: प्रिये ।
इति संक्षेपत: प्रोक्तं तिलकं शृणु पार्वति ॥१०९॥
वामहस्ततले यन्त्रं विलिख्य यत्नत: शिवे ।
अवशिष्टेन तिलकं कारयेत्परमेश्वरि ॥११०॥
भाले कस्तूरिकाविन्दुं मुनिपत्रं [1] सुचन्दनम् ।
तन्मध्ये श्वेतविन्दुञ्च केशादिपूर्वपद् भवेत् ॥१११॥

---
[1] कुचन्दनम् - इति पा. अन्यत्र ।

दशविद्याविधौ देवि केशवर्धनमीरितम् ।

**देव्युवाच -**

देवेश श्रोतुमिच्छामि कमलाक्रमनिर्णयम् ॥११२॥

**शिव उवाच -**

भ्रूयुग्मे घुसृणं देवि सिन्दूरं तदन्तरम् ।
श्वेतत्रिपुण्ड्रं देवेशि तन्मध्ये केशरं शिवे ॥११३॥
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
शुक्लभूषणभूषाढ्यस्त्रिसंन्ध्यं स्नानमाचरेत् ॥११४॥
हविष्याशी भूमिशायी मधुरान्नप्रियो नरः ।
भृगुवासरपर्यन्तं द्वितीयं भृगुवासरम् ॥११५॥
दिनवृद्धिक्रमेणैव कुमारीं पूजयेत्सदा ।
द्वितीयभृगुमारभ्य ह्रासयेद्दिनवृद्धितः ॥११६॥
प्रत्यहं पूजयेद्देवि नानावादित्रनिःस्वनैः ।
दिनषोडशपर्यन्तं प्रत्यहं तु समाचरेत् ॥११७॥
पुनस्तद्दिनमारभ्य तद्दिनान्तं महेश्वरि ।
पूजयेत्प्रयतो नित्यं देवताभावतत्परः ॥११८॥
प्रदक्षिणां प्रकर्तव्या कलाभावक्रमेण च ।
दीपास्तत्र प्रदातव्याः कलावृद्धिक्रमेण च ॥११९॥
ब्राह्मणान् भोजयेन्नित्यं कलाभावक्रमेण च ।
इत्याचारपरः श्रीमान् विष्णुरूपो नरो भवेत् ॥१२०॥
राजचिह्नानि सर्वाणि प्रयतः पूजयेत्सदा ।
सर्वसाम्राज्यलक्ष्म्यास्तु नाथो भूयान्न संशयः ॥१२१॥
धनदो तस्य [1] देहस्थो राजा च किङ्करो भवेत् ।

**देव्युवाच -**

देवेश श्रोतुमिच्छामि ब्रह्ममार्गक्रमं शिव ॥१२२॥

---

[1] गेहस्था - इति पा. अन्यत्र ।

वेश्यायाः कज्जलं देयं सिन्दूरेण त्रिपुण्ड्रकम् ।
हरिद्रा भ्रूयुगे देया श्वेतपत्रं समाचरेत् ॥१२३॥
रक्तबिन्दुञ्च तन्मध्ये सर्वदा तद्गतो भवेत् ।
भोजने शयने रात्रौ मैथुनं सर्वदा भवेत् ॥१२४॥
उच्छिष्टहस्ते देवेशि उच्छिष्टेन बलिं हरेत् ।
शक्त्युच्छिष्टं परोच्छिष्टं भोजनं सार्वकालिकम् ॥१२५॥
जपं कुर्यान्महेशानि रात्रावेव जपं चरेत् ।
ताम्बूलभक्षणं कृत्वा [1] ताम्बूलीं चैव मोहयेत् ॥१२६॥
ताम्बूलभक्षी मांसाशी भुक्त्वा चार्चां च कारयेत् ।
गृहं प्रलिप्य यत्नेन मार्जन्या मार्जनं चरेत् ॥१२७॥
प्रजपेद्यत्नतो देवि नान्यथा सिध्यति ध्रुवम् ।
उच्छिष्टहस्ते देवेशि स्वदेहं प्रोक्षयेत्सदा ॥१२८॥
उच्छिष्टहस्तः प्रजपेद् ब्रह्ममार्गः प्रकीर्तितः ।
ब्रह्ममार्गक्रमो देवि गदितस्तु मया तव ॥१२९॥
अनेन क्रमयोगेन सिद्धमार्गक्रमी भवेत् ।
सिद्धविद्याप्रभावात्स्यात्प्रत्यक्षा वरदायिनी ॥१३०॥
सुरेन्द्रोऽपि च दासः स्यान्मनुष्याणां च का कथा ।
रहस्यं कथितं भद्रे गोपनीयं स्वयोनिवत् ॥१३१॥

**देव्युवाच -**

वद श्रीभुवनेशान्या क्रमं परमदुर्लभम् ।

**शिव उवाच -**

दिव्यभावक्रमेणैव भुवना शीघ्रसिद्धिदा ॥१३२॥
हकारो शिवरूपत्वाद्रकारः पापनाशकः ।
ईकारः कामरूपत्वान्माया तेन प्रकीर्तिता ॥१३३॥

---

[1] ताम्बूलानि च हांमयंत् - इति पा. अन्यत्र ।

ब्रह्माण्डमेतद्देवेशि माययाऽऽवेष्टितं भवेत् ।
यस्या मायां विना देवि [1] न च किञ्चित्प्रभासते ॥१३४॥
यद्भासा रहितं किञ्चिन्न च [2] किञ्चित्प्रभासते
यद्भावरहितं किञ्चिन्न च तद्भासते क्वचित् ॥१३५॥
यद्भासासहितं देवि जगदेतत्प्रभासते ।
यां विना तु महेशानि जगज्जडसमं भवेत् ॥१३६॥
एवं क्रमेण देवेशि सदा तद्गतमानसः ।
त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ॥१३७॥
एतस्यास्तिलकं देवि कथ्यते यत्नतः शृणु ।
श्वेतचन्दनविन्दुस्तु भ्रूमध्ये तु प्रलापयेत् ॥१३८॥
गन्धसारं तदन्ते स्यात्त्रिपुण्ड्रं दिव्यवर्णतः ।
रक्ताक्षताश्च तन्मध्ये तेन सिद्धीश्वरो भवेत् ॥१३९॥

**देव्युवाच -**

देवेश श्रोतुमिच्छामि धूमावत्याः क्रमं शिव ।

**शिव उवाच -**

धूमावत्याः क्रमो देवि कथ्यते शृणु पार्वति ॥१४०॥
भ्रूमध्ये कज्जलं देवि भस्मविन्दुस्तदन्तरे ।
[3] त्रिपुण्ड्रं च ललाटे स्याच्छवभस्म तदन्तरे ॥१४१॥
कृष्णवस्त्राम्वरधरः कृष्णगन्धविभूषितः ।
गन्धपुष्पेण संयुक्तः श्मशानासनसङ्गतः ॥१४२॥
धूमवर्णं जगत्सर्वं मन्त्री धूममयो भवेत् ।
काकपिच्छं वासनं स्यात्कृष्णद्रव्यं प्रधारयेत् ॥१४३॥
ब्रह्मचारी मिताहारी निर्विकल्पो जितेन्द्रियः ।
सत्यवादी दृढाचारी भूशायी कुशविष्टरः ॥१४४॥

---

[1] न किंचित्प्रतिभासतं - इति पा. अन्यत्र ।
[2] तद्भासतं क्वचित् - इति पा. अन्यत्र ।
[3] मृत्त्रिपुण्ड्रम् - इति पा. अन्यत्र ।

स्नानं त्रिषवणं कुर्यादुच्चाटनपरायणः।
स्वचित्रं काकवत्कृत्वा जगदुच्चाटयेद् ध्रुवम् ॥१४५॥
इत्याचारपरो भूयाद् धूमक्रमगतो भवेत् ।
काकक्रमस्तु गदितो किमन्यच्छ्रोतुमिच्छसि ॥१४६॥

**देव्युवाच -**

देवेश श्रोतुमिच्छामि वगलाक्रमनिर्णयम् ।
सौभाग्यार्चाक्रमेणैव बगला शीघ्रदर्शिनी ॥१४७॥
पीताम्वरधरो मन्त्री पीतभूषणभूषितः ।
पीतमाल्याम्बरधरो पीतगेहे समास्थितः ॥१४८॥
पीतपूजापरः प्रोक्तः पीतान्नप्रीतमानसः ।
पीतद्रव्योपभोगी च पीतासनसमन्वितः ॥१४९॥
पीतहोमी पीतपुष्पी पीतशक्तिसमन्वितः ।
रोचनां भ्रुवि संदध्यात् कुङ्कुमं मुनिपत्रकम् ॥१५०॥
हरिद्रया त्रिपुण्डं च तन्मध्ये खदिरं शिवे ।
हरिचन्दनधूपेन धूपितः परमेश्वरि ॥१५१॥
शक्तौ सर्वं तु संपाद्य क्रममार्गरतो भवेत् ।
सष्टिस्थित्यन्तसंहारपूजा च त्रिविधा कलौ ॥१५२॥
केरले सृष्टिपूजा स्याद् गर्भकौलागमक्रमात् ।
अर्चनं गौडडेशे तु स्थितिमार्गं कुमारिके ॥१५३॥
गुप्तकौलागमो देवि गौडदेशार्चने विधिः ।
कामरूपागमं देवि संहारक्रमपूजनम् ॥१५४॥
[1] गौडामगे च चाञ्चल्यः सांख्यायनमुनिस्तथा ।
[2] उक्तो वामागमश्चैव स्थित्यर्चां शृणु पुत्रकः ॥१५५॥
सर्वाङ्गसुन्दरीं रम्यां सर्वावयवशोभिताम् ।
नवोढां पुष्पिणीं चैव प्रार्थयेद्विप्रकन्यकाम् ॥१५६॥

---

[1] गौडागमं चावलम्ब्य - इति पा. अन्यत्र, उचितश्च ।
[2] उक्तवामागमं चैव - इति पा. अन्यत्र ।

[१] अष्टम्यां च चतुर्दश्यां पौर्णमास्यां [२] कुमारकः।
अथवा भौमवारे वा निशायां भृगुवासरे ॥१५७॥
सुवासितेन तैलेन कुर्यादभ्यञ्जनं तथा।
तूलिकातल्पमानीय आस्तीर्योदङ्मुखस्तथा ॥१५८॥
तस्योपरि समास्तीर्य [३] समन्तैर्जातिचम्पकैः।
कर्पूरं चैव कस्तूरीमिश्रितं चन्दनं तथा ॥१५९॥
सर्वाङ्गलेपनं कुर्याल्लक्ष्मीसूक्तेन बुद्धिमान्।
पर्यङ्कोपरि तां कन्यां चन्दनेन विलेपिताम् ॥१६०॥
ध्रुवाद्यैरिति मन्त्रेण कन्यां दक्षिणतोमुखीम्।
उन्मुखीं शयने कुर्याच्छ्रीसूक्तेन [४] कुमारकः ॥१६१॥
तस्याः पादौ प्रसार्याथ गुप्तेनार्चनमाचरेत्।
न्यस्त्वा षोढाद्वयं चैव वगलापञ्चकं न्यसेत् ॥१६२॥
कन्यां चैव न्यसेदेवं तत्तदङ्गानि संस्मरन्।
[५] जनं जपपुरं चैव मार्जयेन्मूलविद्यया ॥१६३॥
गन्धद्वारेति मन्त्रेण कुर्यात्कस्तूरीलेपनम्।
मूलमन्त्रेण वै तत्र पुष्पमालां समर्पयेत् ॥१६४॥
निवेदयेद् द्रव्यशुद्धिं तत्रैव जपमाचरेत्।
[६] प्रयोगसिद्धिदं पुंसां मन्त्रसिद्धिकरं परम् ॥१६५॥
एतत्क्रमं विना देवि प्रयोगो न भवेत्क्वचित्।
तस्मात्सर्वप्रयत्नेन सिद्ध्यर्थं देवि भूतले ॥१६६॥
[७] अभिमानाष्टकं त्यक्त्वा त्यक्त्वा वै दूषणत्रयम्।

---

[१] कृष्णाष्टम्याम् - इति पा. अन्यत्र।
[२] कुमारिकायाम् - इति पा. उचितः।
[३] सेवन्तैर्जातिचम्पकैः - इति पा. अन्यत्र।
[४] कुमारिकाम् - इति पा उचितः।
[५] अनन्यजपुरंचैव - इति पा अन्यत्र।
[६] प्रयोगः सिद्धिद पुसां मन्त्रसिद्धिकरः परः - इति पा. अन्यत्र।
[७] सौभाग्याख्यक्रमं देवि विना सिद्धिर्न कोटिभिः - इति पा. ग. मा. अधिकः।

त्यक्त्वा पञ्चेन्द्रियासक्तिं सौभाग्यक्रममाचरेत् ॥१६७॥
सुखदु:खे समे कृत्वा लाभालाभौ जयाजयौ ।
शीतोष्णसमतां कृत्वा सौभाग्यक्रममाचरेत् ॥१६८॥
पोढाद्वयं च न ज्ञात्वा य: करोत्यर्चनं भुवि ।
पतित: स भवेद्देवि रौरवं नरकं व्रजेत् ॥ १६९॥
वाह्याभ्यन्तरयोर्देवि प्रभेदज्ञानयोर्विना ।
पीतक्रमो न कर्तव्यो देवताशापमाप्नुयात् ॥१७०॥
संकल्पं च विकल्पं च त्यक्त्वा विज्ञानमानस: ।
पीतक्रमं तत: कुर्यान्नो चेद् भ्रष्टो भवेद्ध्रुवम ॥१७१॥
जितेन्द्रिय: सुखं कृत्वा कुर्यात्पीतक्रमं शिवे ।
सुखार्थं कुरुते योऽसौ देवताशापमाप्नुयात् ॥१७२॥
स्वस्यादेशविधिं चैव चाज्ञात्वा परमेश्वरि ।
य: करोत्यर्चनं देवि स विप्र: पतितो भवेत् ॥१७३॥
यस्तु कन्यामन:क्षोभं करोति यजने शिवे ।
भ्रान्तचित्तो भवेत्सद्यो वाचस्पतिरिवापर: ॥१७४॥
नोत्पादयेद्वदेन्नैव मनसश्च शरीरयो: ।
वेदनां जननयेद्यस्तु स नर: पतितो भवेत् ॥१७५॥
सपत्नीं भ्रातृपत्नीं वा गुरुभार्यामथापि वा ।
अर्चयेद् भुवनोपेतां सांख्यायनसमर्पिताम् ॥ १७६॥
दीक्षायुतां च रजकीं कुलालगृहकन्यकाम् ।
पुलिन्दकन्यकां वाऽपि [1] गोलकुण्डामृतमादरात् ॥१७७॥
अर्चयेदृषिपत्नीं च पूर्वोक्तलक्षणैर्युताम् ।
अर्चनं विधिमार्गेण पूजा दुर्वाससो मतम् ॥१७८॥
सर्वलक्षणसंयुक्तां पुष्पिणीमर्चयेच्छिवे ।
मतङ्गमुनिनोक्तं च सद्य:सिद्धिकरं त्विदम् ॥१७९॥

---

[1] गोलकुण्डां समादरात् - इति पा. उचित: ।

सिद्धक्रमोऽयं देवेशि नास्ति सिद्धिर्गुरुं विना ।
तस्मात्सर्वप्रयत्नेन गुर्वाज्ञापरिपालकः ॥१८०॥
सिद्धो भवति देवेशि नात्र कार्य विचारणा ।

**देव्युवाच -**

महाराजक्रमं देव कथयस्व मम प्रभो ॥१८१॥

**शिव उवाच -**

महराजक्रमो देवि कथ्यते शृणु साम्प्रतम् ।
नानाविचित्रसोपानमण्डिते चित्रमण्डपे ॥१८२॥
सौधाट्टालकसंशोभिवितानध्वजशोभिते ।
नानोपवनसंयुक्ते हंसमायूरशोभिते ॥१८३॥
[1] नानाविचित्ररम्ये च गजवाजिविराजिते ।
सर्वतोभद्रसंयुक्ते नानाभरणभूषिते ॥१८४॥
धूपामोदसमायुक्ते चित्रदीपैरलङ्कृते ।
रत्नसिंहासने रम्मे रत्नाभरणभूषिते ॥१८५॥
जातिचम्पकपुन्नागकेतकीगन्धशोभिते ।
कर्पूरागुरुकस्तूरीरोचनाकुङ्कमैर्युते ॥१८६॥
जटामांस्यादिसौगन्ध्यलेपनैः परिभूषितः ।
घण्टानिनादसंयुक्तः सर्वदा शुद्धमानसः ॥१८७॥
आनन्दमग्नहृदयो दिव्यवस्त्रैरलङ्कृतः ।
दिव्यमाल्याम्बरधरो [2] दिव्यभूषैरलङ्कृतः ॥१८८॥
ताम्बूलपूर्णवदनो देवेन्द्र इव राजितः ।
वेदपात्रैर्नृत्यपात्रैर्भोगपात्रैर्निनादितः ॥१८९॥

---

[1] नानाचित्रगृहे रम्ये - इति पा अन्यत्र ।
[2] दिव्यभूषादिभूषितः - इति पा. अन्यत्र ।

नृत्यगीतैश्च वादित्रैश्चतुर्विंशतिवाचकैः [1] ।
सङ्गीतरागतालैश्च ध्वनिभिश्च निनादितः ॥१९०॥
नानादेशोपभाषाभिर्गद्यपद्यैरलङ्कृतः ।
नानाविचित्रभूषाभिर्भावितः साधकोत्तमः ॥१९१॥
समस्तराजचर्याभिः [2] मोहनाद्राजनायिका ।
श्रीमहाराजमातङ्गी सर्वदेवप्रमोहिनी ॥१९२॥
तस्यास्तु तिलकं देवि कथ्यते शृणु पार्वति ।
[3] कुचे द्वन्द्वं च भ्रूमध्येऽगुरुसारस्तदन्तरे ॥१९३॥
कस्तूरिकात्रिपुण्ड्रं च तन्मध्ये केशरं शिवे ।
महाराजक्रमो देवि कथितस्तु मया तव ॥१९४॥
अथवा देवदेवेशि स्वयं गानपरो भवेत् ।

**इति श्रीतन्त्रचिन्तामणौ महानीलादिक्रमनिर्णयनामा त्रयोदशः प्रकाशः ।**

*****

---

[1] वादकैः -इति पा. उचितः ।
[2] मोहयत् - इति पा अन्यत्र ।
[3] कुचन्दनं च - इति पा. अन्यत्र, स एव पा. उचितः ।

# चतुर्दशः प्रकाशः

## वीरदिव्यपशुभावनिरूपणम्

**श्रीदेव्युवाच –**

वीरभावो महादेव कथ्यते शृणु भैरव ।
निर्द्वन्द्वमानसो भूत्वा हृदा कामकला तनुः ॥१॥
निशासु पूजा प्रवरा हेतुयुक्ता सदैव हि ।
निजं कुलं समाधाय स्वयं भैरवरूपधृक् ॥२॥
कुलं च भैरवीरूपं तद्‌गात्रे न्यासविस्तरम् ।
प्रसूनतूलिकामध्ये पुष्पप्रकरसंयुते ॥३॥
[1] नानागन्धसमाकीर्णे कुलद्रव्येण यन्त्रकम् ।
लिखित्वा पूजयेच्छक्तौ घटस्थापनपूर्वकम् ॥४॥
स्ववामभागे षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ।
लिखित्वा तत्र कुम्भं वै सौवर्णं राजतं तथा ॥५॥
ताम्रभूमिमयं वापि महालोहविवर्जितम् ।
स्थापयेत्कलशाधारं कुम्भं सुगन्धवासितम् ॥६॥
हेतुद्रव्यं ब्राह्मणादिभेदतः संप्रपूरयेत् ।
तत्र यन्त्रं विलिख्यादौ यद्यत्कुलसमुद्‌भवम् ॥७॥
ध्यात्वेष्टदेवतां तत्र जपेदष्टोतरं शतम् ।
धेनुं योनिं प्रदर्श्याथ ह्यमृतं तद् विचिन्तयेत् ॥८॥
दृष्ट्वाऽमृतमुपात्तं वै नृत्यन्ति योगिनीगणाः।
नृत्यन्ति भैरवाः सर्वे नृत्यन्ति मातरोऽपि च ॥९॥
इन्द्रादयः सुराः सर्वे नृत्यन्ति मधुलोलुपाः ।
ब्रह्मविष्णुमहेशाद्या नृत्यन्ति हर्षतत्पराः ॥१०॥

---

[1] स्वपात्रम् – इति पा. अन्यत्र ।

अर्धभाण्डं त्रिधा कृत्वा गुरवे चैकभागकम् ।
एकं कुलाय वै दत्त्वा [1] एकेन देवतर्पणम् ॥११॥
पीत्वा कुलरसं नानावस्त्रालङ्कारभूषितः ।
साक्षाद्यदि गुरुर्न स्यात्तदा तोये विसर्जयेत् ॥१२॥
आनन्दरूपवान् भूत्वा पूजयेत् परमेश्वरीम् ।
तत्तत्कल्पविधानेन तत्तद्यत्नेन पूजयेत् ॥१३॥
विसर्जनं विधायाथ स्वकुले योजयेत्ततः ।
[2] तद्वीररसपानेन अमृतं [3] भुज्यते मया ॥१४॥
तच्चकोररसास्वादे संमदो मम जायते ।
तत्फलग्रहणादेव मेरुश्रृङ्गावरोहणम् ॥१५॥
लताऽऽलिङ्गनमात्रेण सुधाधौतकलेवरः ।
मूलयोगे कृते तत्र जपेदष्टसहस्रकम् ॥१६॥
[4] यत्र जापे च होमे च यत्र संख्या न चोदिता ।
तत्रेयं गणना प्रोक्ता अष्टोत्तरसहस्रकम् ॥१७॥
जलपूतं हविर्द्रव्यं गृहीत्वा तर्पयेत्ततः ।
विधाय तर्पणं देवप्रदक्षिणमनुव्रजेत् ॥१८॥
स्तुत्वा प्रणम्य कल्पोक्तस्तवेन तोषयेत्ततः ।
तस्मात्कुलं समायोग्यं कृत्वा यत्नेन संजपेत् ॥१९॥
कुले साक्षाद्यतस्तत्त्वं स्वयं तिष्ठति तत्त्वतः ।
मद्यं मासं तथा मत्स्यं मुद्रां मैथुनमेव च ॥२०॥
एभिरेव कृता पूजा कुलाचारः प्रकीर्तितः ।
तेन तत्कुलशास्त्रज्ञैः पूजनीया प्रयत्नतः ॥२१॥
कुलं कुलं चात्मकुलं निश्चलं यस्य वर्तते ।
स धन्यः स च विज्ञानी कुलरूपः स एव तु ॥२२॥

---

[1] ह्यंकेन - इति पा. उचितः ।
[2] तद्बिम्बरसपानेन - इति अन्यत्र ।
[3] भक्ष्यतं - इति पा. उचितः ।
[4] नित्यजाप्ये - इति पा. भावचूडामणी ।

यत्र यत्र कुजे वारे श्मशाने गमने कृते ।
पूजाफलं भवेत्तत्र सप्तवासरसम्मितम् ॥२३॥
चतुर्दश्यां गते तत्र पक्षपूजाफलं भवेत् ।
न गच्छेन्नार्यतः स्थाने पशुरेव न संशयः ॥२४॥
नास्त्यस्मादधिकं देव इति चिन्तापरायणः ।
मदेन द्रव्यभोक्ता तु भवेत् कुलपरायणः ॥२५॥
साधके क्षोभमापन्ने मम क्षोभः प्रजायते ।
तस्माद्यत्नाद्वीरवरो भवेद् भोगयुतः सुखी ॥२६॥
भोगेन मोक्षमाप्नोति भोगेन कुलसाधनम् ।
विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरः ॥२७॥
न पूजां मम सम्पर्कं न ध्यानमनुचिन्तनम् ।
तस्माद् भुक्त्वा च पीत्वा च पूजयेत् [1] परमेश्वरः ॥२८॥
[2] प्रक्रमच्युतिदोषोऽस्ति नापरं दोषभूषणम् ।
यद्यद्चरति निद्राति यत्करोति यदर्चति ॥२९॥
तत्सर्वं कुलरूपं तु ध्यात्वा च विहरेत् सुधीः ।
एकाकी निर्जने देशे श्मशाने पर्वते वने ॥३०॥
शून्यगेहे नदीतीरे निःसङ्गो विहरेन्मुदा ।
वीराणां जपकालस्तु सर्वकालः प्रशस्यते ॥३१॥
सर्वदेशे सर्वपीठे कर्तव्यं च न संशयः ।
वीरसाधनकार्यं च कर्तव्यं वीरपुरुषैः ॥३२॥
दिव्यैरपि च कर्तव्यं पशुभिर्न च पामरैः ।
वरं पामरकार्यञ्च न पशोरिति निश्चितम् ॥३३॥
यद्यन्न सत् पुरा प्रोक्तं सङ्केतं मन्त्रसाधने ।
अञ्जनं गुटिकादिञ्च कुर्याद् वीरो महाबलः ॥३४॥

---

[1] परमेश्वरीम् - इति पा. भावचूडामणौ ।
[2] नाम प्रच्युतिदोषोऽस्ति - इति पा. भावचूडामणौ ।

दिव्ये वीरे न भेदोऽस्ति [1] यद् भेदं तत्तु कथ्यते ।
शान्तो विनीतो मधुरः कलालावण्यसंयुतः ॥३५॥
दिव्यं तु देववत्प्रायो वीरश्चोद्धतमानसः ।
[2] विभूतिभूषणैर्वाऽपि चन्दनैर्वा विलेपितः ॥३६॥
आकारगोपनो वाऽपि त्यक्तो वा कुलभैरवः ।
रक्तचन्दनदिग्धो वा वैष्णवश्चाप्यवैष्णवः ॥३७॥
अपमाने च पूजायां हृष्टः पुष्टःसदा भवेत् ।
देवनिन्दापरो वाऽपि तत्तत्पूजापरोऽपि वा ॥३८॥
पूजारतस्तद्रहितः कुलाकुलमते स्थितः ।
निजभावसमायुक्तो देववद् विहरेत्क्षितौ ॥३९॥
स्वकुलान्ते पुरश्चर्यां रात्रौ कुर्यान्न चान्यथा ।
वेदहीने द्विजे देव यथा न श्रुतिजा कथा ॥४०॥
[3] विष्णुभक्तिं विना देवि भक्तिर्न प्रभवेद्यथा ।
शाक्तज्ञानं विना मुक्तिर्यथा हास्याय कल्पते ॥४१॥
गुरुं विना यथा तन्त्रे नाधिकारः कथञ्चन ।
पतिहीना यथा नारी सर्वकर्मविवर्जिता ॥४२॥
कुलं विना देवविधौ कदापि मम साधने ।
नाधिकारीति कौले यस्तस्माद् भावपरो भव ॥४३॥
अविनीतं कुलं यस्य स कथं मम पूजकः ।
तस्माद्यत्नात्तथा कार्यं यथा स्याद् विनयान्वितम् ॥४४॥
भावाभावात्कुले शास्त्रे नाधिकारः कथञ्चन ।
तेन भावविशुद्धस्तु साधकः कौलिको भवेत् ॥४५॥
पशुभावं प्रवक्ष्यामि शृणु वत्स समाहितः ।
यथाविधि [4] पशुर्विद्यां गृहीत्वा भावतत्परः ॥४६॥

---

[1] यो भेदः स तु कथ्यते - इति पा. समुचितः ।
[2] श्लोकांशाः ३६ (ख), ३७, ३८, (क) ख.मा. न प्राप्यन्ते ।
[3] श्लोकांशौ ४१,४२, ख.मा. न दृश्येते ।
[4] पशोर्विद्याम् - इति पा उचितः ।

प्रथमं पूर्वसेवार्थं यत्नतः शुद्धिमाचरेत् ।
न मत्स्यभोजनं कुर्यान्न स्त्रियं मनसा स्मरेत् ॥४७॥
न परद्रव्यलोभी स्यान्न भोगे मानसं भजेत् ।
सिन्धुतीरे पर्वते च कानने वा सुरालये ॥४८॥
विल्वमूले विविक्ते च पुण्यक्षेत्रे च शोभने ।
न शूद्रदर्शनं कुर्यात्कौटिल्यं यत्नतस्त्यजेत् ॥४९॥
देवता शुभवर्णा तु ध्यातव्या सुसमाहितैः ।
त्रिसन्ध्यं देवपूजा तु त्रिसन्ध्यं जपमाचरेत् ॥५०॥
रात्रौ मन्त्रं च मालां च न स्पृशेच्च कदाचन ।
न मन्त्रमुच्चरेद् भुक्त्वा मौनी स्यात्सर्वकर्मसु ॥५१॥
पर्वकाले स्त्रियं नैव गच्छेत् साधकसत्तमः ।
पुष्पं गन्धजलं चैव स्वयमानीय पूजयेत् ॥५२॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत् ।
ऋतुकालं विना चापि गच्छेन्न स्त्रियमादरात् ॥५३॥
पुराणश्रवणे श्रद्धा वेदवेदार्थतत्परः ।
न रात्रौ भोजयेद्विद्वान् ताम्बूलं परमेश्वरि ॥५४॥
गुरुणा यद्यदाऽऽदिष्टं तत्सर्वं यत्नतश्चरेत् ।
स्वजातकुसुमं चैव हेतुद्रव्यं च भैरव ॥५५॥
स्पृष्ट्वा तथा समाघ्राय पञ्चगव्येन शुध्यति ।
रक्तवस्त्रं न गृह्णीयाद्देवीभक्तिपरायणः ॥५६॥
विष्णुतन्त्रेषु कल्पानि तदनुष्ठानमेव च ।
कार्यं वीरकथालापं न कुर्याद् वीरवन्दनम् ॥५७॥
नित्यश्राद्धं गयाश्राद्धं सन्ध्यावन्दनमेव च ।
तीर्थस्नानं पीठदेशगमनं धर्मतत्परः॥५८॥
पशुस्तु विविधः प्रोक्तः क्रमेण शृणु भैरव ।
अदीक्षितः क्रियाहीनो मन्त्रतन्त्रविवर्जितः ॥५९॥
महापशुरिति ख्यातः सर्वतोऽयं विगर्हितः ।
दीक्षितो निन्दको यस्तु द्वितीयः सम्प्रकीर्तितः ॥६०॥

एकाकी [1] पाननिरतः पशुरित्यभिधीयते
अस्याधिकारः पूजायां न गुरुत्वे कदाचन ।६१॥
पूर्वस्य नाधिकारोऽस्ति पूजादेशगतागतौ ।
पूर्वस्तु सर्वकौलैर्हि बहिष्कार्यः स्वदेशतः । ६२॥
पूर्वदर्शनमात्रेण कुलदर्शनमाचरेत् ।
ब्रह्महत्यादिकं पापं वरं सत्यं न च प्रभो ॥६३॥
पूर्वदर्शनमेवात्र सत्यं सत्यं वदाम्यहम् ।
ममात्मा साऽपि देवेशि विभुरित्यपि स प्रभो ॥६४॥
तथापि तत्र मे शङ्का जायते तत्पदे पदे ।
वरं कुलं परित्याज्यं वरं स्वकुलहिंसनम् ॥६५॥
वरं स्वकुलहानिस्तु वरं स्वकुलकुट्टनम् ।
कायेन मनसा वाचा वरं स्वकुलपातनम् ॥६६॥
न कुर्वीत पशोः सङ्गं स्वमार्गक्षयकारणात् ।
कुलशास्त्रद्वयं पापं गरिष्ठं कुलनाशनम् ॥६७॥
स्वकुले महती निन्दा परयोगात्कुलेश्वर
तस्मादपि महापापं पशुसङ्गात्प्रजायते ॥६८॥
सर्वथा तत्र भावौ द्वौ न प्रकाश्यौ कुलेश्वर ।
सभावश्च विभावश्च पशुद्वेषात् प्रजायते ॥६९॥
दैवाच्च जायते वीरो वीराद्दैवः प्रजायते ।
दैवे वीरे न सन्देहः साम्यमित्यभिधीयते ॥७०॥
भावस्तु मानसो धर्मः शाब्दः स हि कथं भवेत् ।
तस्माद् भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम् ॥७१॥
यथेक्षुरसमाधुर्यं रसनैर्ज्ञायते प्रभो ।
तथा भावो विभावस्तु मनसा परिभाव्यते ॥७२॥

---

[1] पानरहितः - इति ख.मा.पा. ।

शृणु यत्नेन देवेशि रहस्यातिरहस्यकम् ।
विना मद्येन मांसेन पुँश्चलीसेवनं विना ॥७३॥
न मन्त्रसिद्धिमाप्नोति चन्द्रसौरक्रमार्चिते ।
अलिना पूरितं पात्रं वनितापूरितं मुखम् ॥७४॥
अलिं बलिं वरां रामां किन्न सिध्यति भूतले ।
सत्यमेतद् विना योषित्सङ्गं मन्त्रो न सिध्यति ॥७५॥
सङ्ग एव हि कर्तव्यो मैथुनं न कदाचन ।
पूजनीया सदा योषा [1] मद्भावकृतनिश्चयः ॥७६॥
तस्मात्तु मैथुनं देव कर्तव्यं मम साधकैः।
अहं तु जगतां धात्री जननी जन्मकारणी ॥७७॥
मद्भावप्रतिपन्नायां साहमेव सुनिश्चितम् ।
कर्तव्यं मैथुनं नैव तस्या मनोविकारणम् ॥ ७८॥
मोहाद्वा गुरुबोध्याद्वा यदा तत् कुरुते सुधीः ।
वीरो वाऽप्यथ वा दिव्यो [2] अबुद्ध्वा नरकं व्रजेत् ॥७९॥
गुरुपत्नीं द्विजपत्नीं वा पितृपत्नीं प्रपूजयेत् ।
मैथुने नरकं यावत्तावत्कोटिगुणं भवेत् ॥८०॥
अहं च रोषसम्पन्ना नाशयामि तमीश्वर ।
निरन्तरं रोगपीडा जायते तस्य पापिनः ॥८१॥
कदाचित्कर्मसन्तापः कदाचित्कर्णपीडनम् ।
कदाचिदपि वाग्यः स्यात् कदाचित्तु विचर्चिका ॥८२॥
अनालोक्यं च बाधिर्यं खञ्जता कुब्जता तथा ।
अन्येऽपि विविधा रोगाः कुष्ठाद्याः प्रभवन्ति हि ॥८३॥
चक्षुर्नाशो श्रुतिच्छेदो नासाच्छेदस्तथैव च ।
पादच्छेदः करच्छेदः शिरश्छेदोऽपि जायते ॥८४॥

---

[1] मद्भावकृतनिश्चया - इति ग.मा.पा. ।

[2] ह्यबुद्ध्वा - इति पा. उचितः ।

पशुपीडा राजपीडा वह्निपीडा च जायते ।
कुलं तस्यात्र दोषेण म्रियते नात्र संशयः ॥८५॥
एते ते कथिता दोषा योषिन्मैथुनसम्भवाः ।
अधिकारविहीनानामधिकारयुतैश्चरेत् ॥८६॥

**शिव उवाच –**

महान्ममैव सन्देहो वर्धते जगदीश्वरि ।
ममानुग्रहतो देवि तद् वक्तुं च त्वमर्हसि ॥८७॥

**देव्युवाच –**

अहमेव परं ध्यानमहमेव परा श्रुतिः ।
मत्तः परतरं विश्वं न किञ्चिदवलोक्यते ॥८८॥
अहमेव जगत्सर्वं जगदेवाहमीश्वर ।
मद्भावे भाविता नारी भवेदेतादृशी शिव ॥८९॥
एवं ज्ञानविशिष्टः स्यादधिकारी भवेच्छिव ।
ब्रह्मादिकमहेशो वा सर्वदेवमयो हि सः ॥९०॥
जायमानस्य बालस्य मातृयोनिस्वलिङ्गयोः ।
सम्पर्केण विकारो हि न तयोर्जायते क्वचित् ॥९१॥
साधकस्य तथा यस्य मतिः स्यादधिकारिणी ।
सोऽधिकारी भवेन्नित्यं यागादौ सह योषिताम् ॥९२॥
मद्भावप्रतिपन्ना या मत्स्वरूपाऽहमेव सा ।
विकारं नहि योषायां तस्यामर्पितमेव हि ॥९३॥
एवं यस्य स्थिरा बुद्धिः स्वधिकारी न संशयः ।
साधकस्य स्वदेहः स्याद्यत्स्वरूपेष्टदेवता ॥९४॥
तद्वर्णसमतेजोभिः पूर्णं भुवनमण्डलम् ।
भावनाभिः स्थिरीकृत्य देवताध्यानतन्मयः ॥९५॥
यथास्वरूपवर्णादि चिन्तयेद्यतमानसः ।
एवं ज्ञाने समुत्पन्ने स्वच्छन्दं विहरेत् प्रभो ॥९६॥
एवं यस्य मनो नास्ति तस्य प्रतिनिधिः स्मृतः ।
कुमार्यामेव कर्तव्यं न जरत्यां कदाचन ॥९७॥

कुमारीभोजनादेव कुमारीभोजनादपि ।
कुमारीचिन्तनादेव त्रैलोक्यविजयी भवेत् ॥९८॥
शृणु देवि वरारोहे रहस्यं महदद्‌भुतम् ।
विना पूजां स्त्रिया योनौ सङ्गमे साधकोत्तमः ॥९९॥
सप्तजन्मदरिद्रः स्यान्नरके कोटिकल्पशः।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥१००॥
एवं नानाविधो दोषो जायते नात्र संशयः ॥
वीरो वाऽप्यथवा दिव्यो न बुद्ध्वा नरकं व्रजेत् ॥१०१॥

**इति तन्त्रचिन्तामणौ भावनिर्णयनामा**
**चतुर्दशः प्रकाशः ॥**

*****

# पञ्चदशः प्रकाशः

## नित्यादिविभेदः

**देव्युवाच -**

धनिनां मध्यमानां च दरिद्राणां गृहासिनाम् ।
परदेशस्थितानां च कारागेहादिवासिनाम् ॥१॥
[1] कार्यादौ व्यापृतानां च युक्तानां सूतकादिभिः ।
कार्याङ्गे च स्वभावे वा वामकानां कृपानिधे ॥२॥
षडाम्नायरहस्येन कथं नित्यक्रिया भवेत् ।
लोकलज्जावतां वाऽपि दिनचर्यां वद प्रभो ॥३॥

**श्री शिव उवाच -**

महाकालेन यत्प्रोक्तं यन्महामायया श्रुतम् ।
रहस्यातिरहस्यं तत्सर्वतन्त्रेषु गोपितम् ॥४॥
आम्नायानां रहस्यं तदाह्निकं प्रोच्यते मया ।
शृण्वन्तु सर्वे भो देवाः साधकानां प्रसिद्धिदम् ॥ ५॥
तत्र नित्यं त्रिधा प्रोक्तं गुणत्रयविभेदतः ।
अधिकारिविभेदेन तदपि त्रिविधं भवेत् ॥६॥
शुद्धं मिश्रं च गलितं तत्तथैव फलप्रदम् ।
शुद्धं सम्पूर्णफलदं मिश्रं किञ्चित्फलप्रदम् ॥७॥
अकृते प्रत्यवायो न गलिते [2] सत्फलं न च ।
अहङ्कारविहीनं चेन्मानसं ज्ञानपूर्वकम् ॥८॥
स्वच्छचित्तेन यतिना कृतं तच्छुद्धमुच्यते ।
तादृशं चेद् गृहस्थेन निर्द्रव्येणाथवा कृतम् ॥९॥

---

[1] कार्याङ्गवस्त्वभावे वा - इति मेरौ पाठः ।
[2] सफलं जनै - इति इति मेरौ पाठः

१ रुग्रेण पथिकेनापि कारागृहगतेन वा ।
भक्तितो वाऽपि तन्मिश्रं बाह्यपूजाधिकारितः २ ॥१०॥
शीतादिभीत्या वा वित्तसंक्षयादन्यकार्यतः ।
स्त्यादेर्नियोगाद् गलितं गृहिणो मानसं मतम् ॥११॥
बासपूजादिकं यच्च एकान्ते नियमेन च ।
भक्त्या कृतं गृहस्थेन तच्छुद्धं राजसं मतम् ॥१२॥
पूजार्थं यद्याचयित्वा श्रद्धां भक्तिं विधाय वा ।
लोकभीत्या देवभीत्या ३ यत्तद्राजसमिश्रितम् ॥१३॥
प्रतारणार्थं लोकानां याचितं देवनामतः ।
द्रव्यं कृतं तुदद्देशगलितं तत्तु राजसम् ॥१४॥
वाममार्गं समाश्रित्य कौलं धर्मं विचार्य च ।
अन्यधर्मस्य चाद्वेषात्कृतं शुद्धं तु तामसम् ॥१५॥
कृतं यत्कामतः कर्म वैहिकं पारलौकिकम् ।
वाममार्गं समाश्रित्य मिश्रितं तत्तु तामसम् ॥१६॥
जिह्वालोभेन यत्खानं पानं यत्कामतो रतम् ।
अथवा मारणाद्यर्थं गलितं तत्तु तामसम् ॥१७॥
शुद्धसत्त्वेन मोक्षः स्यात् स्वर्गः स्यान्मिश्रसत्त्वतः ।
सिद्धिर्गलितसत्त्वात्स्यादैहिकी च मनुष्यता ॥१८॥
स्वर्गः स्याद्राजसाच्छुद्धात्कामः स्यान्मिश्रसत्त्वतः ।
गलिताद्राजसात्तिर्यग्योनावपि सुखं भवेत् ॥१९॥
सात्त्विकात्तामसाद्देवयोनित्वं प्राप्नुयान्नरः ।
मिश्रतामसतो दुःखी नारकी चान्त्यतामसात् ॥२०॥
कर्म पञ्चविधं प्रोक्तं पञ्चधा मुक्तिदायकम् ।
प्रसर्पणमुपादानमिज्याध्यायस्तथा ४ भृतिः ॥२१॥

---

१ रुग्णेन - इति मेरौ पाठः ।

२ बाह्यपूजाधिकारतः इति मेरौ पाठः ।
३ यत्तदायासमिश्रितम् - इति मेरौ पाठः ।

४ घृतिः - इति मेरौ पाठः ।

संमार्जनोपलेपादिसंस्कारो देवमन्दरे ।
भक्तार्जवं सर्पणं [1] स्याद्देवसालोक्यकारकम् ॥२२॥
पूजासाधनसामग्र्या मेलनं भक्तसेवनम् ।
तत्प्रीतिःस्यादुपादानं देवतारूपदायकम् ॥२३॥
पीठपूजनपूर्वं यत् षोडशाद्युपचारकैः ।
मूर्तौ यन्त्रेऽथवा पूजा [2] सद्यो सामीप्यकारिका ॥२४॥
तच्छास्त्राध्ययनं सम्यक् कृत्वा मन्त्रार्थभावनम् ।
कृत्वा [3] जपस्याऽस्वाध्यायो देवसायुज्यकारकः ॥२५॥
गुरुदेवात्मकालानां सम्यगैक्यविभावनम् ।
स योगो लिङ्गदेहस्य नाशकः कालयोगकृत् ॥२६॥

**प्रातःकृत्यम् –**

ब्राह्मान्मुहूर्तान् वक्ष्यामि साधकस्य हितं परम् ।
कालिकाया महेशानि शय्यायां गुरुचिन्तनम् ॥२७॥
सुन्दर्यास्तु महेशानि रात्रिवासं परित्यजेत् ।
छिन्नाया देवदेवेशि संयोगीभूय संस्मरेत् ॥२८॥
ताराया देवदेवेशि शक्त्या सह गुरुं स्मरेत् ।
गुरुं स्मृत्वा कुण्डलिनीं सम्यग्योगेन योजयेत् ॥२९॥
साधकः प्रातरुत्थाय कुलवृक्षं प्रणम्य च ।
मूलादि ब्रह्मरन्ध्रान्तं कुलं ध्यात्वा गुरुं स्मरेत् ॥३०॥
ततः समस्तके चिन्त्यं सहस्रदलपद्मकम् ।
कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ॥३१॥
(इति श्रीगुरोर्विद्यमानत्वे शान्तत्वेऽन्यत् )
सुप्रसन्नं लसद्भूषामण्डितं श्वेतचन्दनम् ।
वराभयज्ञानमुद्रापुस्तकैर्व्यावृतैः करैः ॥३२॥

---

१ स्याद्देवमारोग्यकारकम् - इति मेरौ पाठः ।

२ संज्या स्यादिष्टकारिका - इति मेरौ पाठः ।

३ . जयन्तु - इति मेरौ पाठः ।

युक्तं श्वेताम्बरं क्षान्तं श्वेतपुष्पविभूषितम् ।
वामाङ्कगतया शक्त्याऽऽलिङ्गितं रक्तवर्णया ॥३३॥
रक्तवस्त्राभरणया रक्तचन्दनमालया ।
वामे लीलाकमलयाऽऽलिङ्गन्त्या दक्षिणेन च ॥३४॥
ध्यायेदन्तर्मुखं शान्तं श्रीगुरुं शिवरूपिणम् ।
१ तत्पादपद्मयुगलं स्रुतपीयूषधारया ॥३५॥
अभिषिक्तं स्वस्य देहमेवं शिष्यो विचिन्तयेत् ।
अर्चयेद् गन्धपुष्पाद्यैर्बाह्यस्थैर्मानसैस्तु वा ॥३६॥

## श्रीगुरोर्मानसयजनम् -

लँ हँ यँ रँ वमुच्चार्य तत्तद्भूतात्मने पदात् ।
समर्पयामि सम्प्रोच्य नमोऽन्तो मानसार्चने ॥३७॥
शँ वै शक्त्यात्मने प्रोच्य ताम्बूलं चैव पूर्ववत् ।
कनिष्ठातर्जनीमध्यानामाश्चाङ्गुष्ठयोगतः ॥३८॥
सर्वासां योजनान्मुद्रा क्रमात्पञ्चविधा स्मृता ।
ऐमुक्त्वा योनिमुद्रां च दर्शयेत्ताम्बूलार्पणे ॥३९॥
नामभिस्तस्य २ सङ्केतसंसिद्धैर्गुरुकीतनैः ।
प्रणम्येत्थं हृन्मनुना भावयेत्तल्लयं हृदि ॥४०॥

## स्त्रीगुरुत्वेविशेषध्यानम् -

अरुणामरुणाकल्पां करुणापूर्णलोचनाम् ।
वराभयकरां शान्तां स्मरामि मम गौरवीम् ॥४१॥
निजनाथकरां शश्वन्निजवामकलेवराम् ।
सपद्मकरयोः शश्वल्लीलान्दोलितलोचनाम् ॥४२॥

## वीराणां विशेषः -

महाचीनगुरुं ध्यात्वा स्वगुरुं संस्मरेत्ततः ।
पञ्चोपचारैः सम्पूज्य वीरद्रव्यक्रमेण तु ॥४३॥

---

१. तत्पादपद्मयुगलच्युतपीयूषधारया - इति मेरौ पाठः ।

२. विविधैः इति मेरौ पाठः ।

**कुलगुरुः -**

प्रह्लादानन्दनाथाख्यं सनकानन्दमेव च ।
कुमारानन्दनाथं च वशिष्ठानन्दनाथकम् ॥४४॥
क्रोधानन्दं सुखानन्दं ध्यानानन्दं ततः परम् ।
वोधानन्दशुकानन्दौ ध्यायेत्कुलमुखोपरि ॥४५॥
महारसरसोल्लासहृदयाघूर्णलोचनाः ।
कुलालिङ्गनसंभिन्नाश्चूर्णिताशेषतामसाः ॥४६॥
कुलशिष्यैः परिवृताः पूर्णान्तःकरणोद्यताः ।
वराभययुताः सर्वे कुलतन्त्रार्थवादिनः ॥४७॥

**श्रीगुरोर्ध्यानम्-**

नीलाम्वरं नीलविलेपयुक्तम्,
शङ्खादिभूषिततनुं मुदितं त्रिनेत्रम् ।
वामाङ्गसंस्थापितनीलशक्तिं
वन्दामि वीरं करुणानिधानम् ॥४८॥
वीरं ध्यात्वा महादेवि वीरमालां जपेद् बुधः ।
अष्टोत्तरसहस्रं च वामहस्ते समर्पयेत् ॥४९॥

**गुरुपादुका -**

अथवा वाग्भवं मायां लक्ष्मीबीजं समुद्धरेत् ।
हसखफ्रैं तथाऽऽनन्दभैरवाख्यं हसखफ्रैं ॥५०॥
गुरुनाम तथा शक्तिनाम श्रीपादुकां स्मरेत् ।
दशधा सप्तधा वाऽपि त्रिधा वा प्रजपेत्सुधीः ॥५१॥
जपं समर्पयेत्पश्चाच्छ्रीगुरोर्दक्षिणे करे ।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ॥५२॥
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥५३॥
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।
ततस्तु मूलाधारादिव्रह्मरन्ध्रान्तमुद्यते ॥५४॥

आधारस्कन्दमित्याहुर्गुदमेढ्रस्य मध्यगः ।
मृद्वासने समासीनः सर्वचिन्ताविवर्जितः ॥५५॥
चतुरस्रं चतुःपत्रं वसान्तं स्वर्णवर्णकम् ।
त्रिकोणवृत्ततन्मध्ये इच्छाज्ञानक्रियात्मकम् ॥५६॥
सूर्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम् ।
सार्धत्रिवलयाकारां सर्वालङ्कारभूषिताम् ॥५७॥
मध्ये स्वयंभूलिङ्गं तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वं कामबीजन्तु कलाया इन्दुनायकम् ॥५८॥
तदूर्ध्वे तु शिखाकारां कुण्डलीं ब्रह्मविग्रहाम् ।
तेजोदण्डं सुषुम्णान्तः सहस्ररविसन्निभम् ॥५९॥
तदात्मकं मूलमन्त्रं ध्यात्वा तत्तेजसावृतम् ।
स्वशरीरं विचिन्त्येति प्राणायामत्रयं चरेत् ॥६०॥
मूलमन्त्रेण मन्त्रस्य ऋष्यादिन्यासमाचरेत् ।
अङ्गन्यासं विधायाथ हृदि देवं विचिन्तयेत् ॥६१॥
मानसैरुपचारैश्च पूजयित्वा मनुं जपेत् ।
यथाशक्त्याऽथ देवाय तं जपं च समर्पयेत् ॥६२॥

**श्यामाया विशेषः-**

ध्यात्वा हृदम्बुजे कालीं ध्यानोक्तां पूजयेत्ततः ।
मानसैरुपचारैश्च पूजयित्वा मनुं जपेत् ॥६३ ॥
गन्धादिभिश्च गायत्रीमष्टाविंशतिसंख्यकाम् ।
प्रजपेद्दशसंख्यां वा श्रूयतां तां च भैरवि ॥६४॥
कामोवामाक्षिनादान्तो दक्षिणा ङेयुता ततः ।
विद्महे कूर्चबीजं च चामुण्डा ङेयुता ततः ॥६५॥
धीमहीति वदेत्तन्नः काली प्रचोदयात्ततः ।
गायत्र्येषा मया प्रोक्ता सर्वतन्त्रेषु गोपिता ॥६६॥
यां विना सकला विद्या न सिद्ध्यन्ति कदाचन ।

**अजपाविधिः-**

वीरहंसमहाविद्या सङ्कल्पं कारयेद् बुधः ॥६७॥

हंसाख्यसाधनं वक्ष्ये मन्त्रिणां हितकाम्यया ।
यस्य विज्ञानमात्रेण सर्वज्ञो भुवि जायते ॥६८॥
हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ॥६९॥
अस्य हंसस्य देवेशि निगमागमपक्षकौ ।
अग्नीषोमौ तथा वाऽपि पक्षौ तारः शिरो भवेत् ॥७०॥
बिन्दुत्रयं शिखानेत्रे मुखे नादः प्रतिष्ठितः ।
१ शिवशक्ती पदद्वन्द्वं कालाग्नी पार्श्वयुग्मकम् ॥७१॥
अयं परमहंसस्तु सर्वव्यापी प्रकाशवान् ।
हकारेण वहिर्याति सकारेण विशेत्पुनः ॥७२॥
अस्याः सम्बोधमात्रेण जीवन्मुक्तो भवेन्नरः ।
प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते ॥७३॥
ऋषिर्हंसोऽव्यक्तपूर्वा गायत्री छन्द उच्यते ।
देवता परमो विष्णुर्हंसोऽहं बीजमुच्यते ॥७४॥
सः शक्तिः कीलकं सोऽहं प्रणवस्तत्त्वमेव हि ।
उदात्तस्वर इत्येवं मनोरस्य प्रकीर्तितः ॥७५॥
मोक्षार्थे विनियोगः स्यादेवं कुर्यात्सदा नरः ।
सूर्यात्मने च हृद्देवि सोमात्मने शिरस्तथा ॥७६॥
निरञ्जनं शिखाज्योतिर्निराभासा तथा प्रिये ।
अव्यक्तं नेत्रयोर्न्यस्य अनन्तोऽस्त्रफडं यजेत् ॥७७॥
एवं न्यासविधिं कृत्वा गणेशादौ समर्पयेत् ।
२ षष्टिश्वासैर्भवेत्प्राणः षट्प्राणा नाडिका मताः ॥७८॥
षष्टिनाड्या ह्यहोरात्रं जपसंख्या जपा मताः ।
एकविंशतिसाहस्रं षट्शताधिकमेव च ॥७९॥

१. शिवशक्तिपदद्वन्द्वम् - इति ख.मा.पा. ।
२. श्लो ७८ (ख), ७९ (क) षष्ठिश्वासैः ... जपा मताः - इति ख.मा. न प्राप्यंते ।

प्रजपेत्प्रत्यहं जीवो ब्रह्मानन्दमयीं पराम् ।
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ॥ ८०॥
विना जपेन सततं जपो भवति सर्वदा ॥
एवं जपेषु विज्ञातो गणेशादौ निवेदयेत् ॥८१॥
षट्शतानि गणेशस्य षट्सहस्रं प्रजापतेः ।
षट्सहस्रं गदापाणेः षट्सहस्रं पिनाकिनः ॥८२॥
षट्सहस्रमात्मने चैव सहस्रं परमात्मने ।
सहस्रं गुरवे चैव सङ्कल्पोऽयं यथाविधि ॥८३॥
रक्तवर्णँ गणेशञ्च मूलाधारे चतुर्दले ।
वादिवेदसमायुक्ते षट्शतं च समर्पयेत् ॥८४॥
स्वाधिष्ठानं विद्रुमाभं षट्कोणं बादिषट्ककम् ।
सावित्र्या च समायुक्तब्रह्मणे च समर्पयेत् ॥८५॥
विद्युत्पुञ्जप्रभाभं च दलं डादिदशाक्षरम् ।
लक्ष्मीनारायणौ वन्दे षट्सहस्रं निवेदयेत् ॥८६॥
महानीलप्रभे चैव कादिद्वादशपत्रके ।
उमामहेश्वरौ वन्दे षट्सहस्रं निवेदयेत् ॥८७॥
विशुद्धे धूम्रवर्णे च कलापत्रे स्वरान्विते ।
प्राणशक्त्यात्मकौ वन्दे सहस्रं च समर्पयेत् ॥८८॥
आज्ञायां विद्युदाभायां शुभौ हक्षनियोजिते ।
परात्मनि पराशक्तौ सहस्रं च समर्पयेत् ॥८९॥
स्तुत्वा प्रणम्य देवाज्ञां श्लोकैरेभिश्च प्रार्थयेत् ।
शिवादिकस्थले भावमूहं स्वेष्टस्य चाचरेत् ॥९०॥
त्रैलोक्यचैतन्यमयादिदेव श्रीशङ्कर त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥९१॥

संसारयात्रामनुवर्तमानं त्वदाज्ञया शंकरदेव देव ।
स्पर्धातिरस्कारकलिप्रमादभयानि [1] मां नाभिभवन्तु नाथ ॥९२॥
इति संप्रार्थ्य देवेशमालामादाय तस्य तु ।
प्रार्थयित्वा धरां श्वासयुक्तं पादं निधापयेत् ॥९३॥
समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥९४॥
प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् ।
पूजा च विफला तस्य शौचहीना यथाक्रिया ॥९५॥

## [2] शौचविधिः-

ततो गृहाद् बहिर्याम्यां नैर्ऋतीं वा दिशं व्रजेत् ।
पदे पदे स्मरेदस्त्रं दूरे यायाद् द्विजालयात् ॥९६॥
अतीत्य वाणमात्रन्तु भुवं ग्रामाद् विलोक्य च ।
नोषरे न श्मशाने च त्रिपथे वा चतुष्पथे ॥९७॥
गोकुले राजमार्गे वा वने चोपवने तथा ।
देवतायतने वर्ज्यं गोरथ्यायां विशेषतः ॥९८॥
वर्चो मूत्रादिकं वर्ज्यं यस्माद्वै कृत्तिकासुत ।
दशहस्तं परित्यज्य मूत्रं कुर्याज्जलाशयात् ॥९९॥
चत्वारिंशत् पुरीषे तु तीर्थे नद्यां चतुर्गुणम् ।
कर्णे कृत्वा पवित्रं च विण्मूत्रं कारयेत्तदा ॥१००॥
[3] उभे मूत्रपुरीषे च दिवा कुर्यादुदङ्मुखः ।
रात्रौ च दक्षिणे कुर्यादुभे संध्ये यथा दिवा ॥१०१॥
छायायामन्धकारे वा रात्रावहनि वा द्विजाः ।
यथा समुन्मुखः कुर्यात् प्राणबाधाभयेषु च ॥१०२॥

---

1. मां माऽभिभवन्तु नाथ - इति मेरौ पाठः ।

2. शौचविधिः - इति ख.मा. नास्ति, तस्य स्थाने अथ बहिर्महीगमनम्- इति पा. प्राप्यते ।

3. श्लोकौ १०१, १०२ - इति ख.मा.न प्राप्यंते । एतयोः स्थाने उदग्वक्रेण तु दिवा रात्रौ च दक्षिणाननः - इति पा अधिकः

उत्तिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसा: ।
परितस्त्यज्यतां स्थानं विण्मूत्रोत्सर्जनाय मे ॥१०३॥
अनेन मनुना लोष्ठतृणैरुद्वास्य देवता: ।
कुर्यान्मलच्युतिं तत्र [1] वाससा कं [2] प्रवेष्ट्य च ॥१०४॥
पिण्डालोको न कर्तव्यस्तथाऽऽकाशनिरीक्षणम् ।
सम्यक् चावश्यकं कृत्वा पायुं काष्ठेन मृज्य च ॥१०५॥
लोष्ठकेनाथ वा मृज्य नाश्मना मृज्यते गुदम् ।
पुन: शौचं प्रकर्तव्यं मृदाऽऽमलकमात्रया ॥१०६॥
[3] द्वितीया च तृतीया च तदर्द्धार्धा प्रकीर्तिता ।
शुचिदेशात्तु संग्राह्या शर्कराश्मादिवर्जिता: ॥१०७॥
विप्रे गौरा मृद: प्रोक्ता: क्षत्रे रक्तास्तथोदिता: ।
वैश्यस्य हरिता: प्रोक्ता: कृष्णा: स्त्रीशूद्रयोस्तथा ॥१०८॥
यस्मिन् देशे तु यत्तोयं यादृशी मृत्तिका भवेत् ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥१०९॥
[4] एका लिङ्गे गुदे सप्त दश वामकरे तथा ।
उभयो: सप्त दातव्यास्तिस्रोऽङ्घ्र्योश्चापि मृत्तिका: ॥११०॥
मूत्रोत्सर्गे वामहस्ते लिङ्गे पञ्चैव मृत्तिका: ।
त्रि: करद्वितये चैका पादयोरथवा चरेत् ॥१११॥
गन्धलेपक्षयकरं मनोग्लानिहरं परम् ।
कुर्याद् द्वादशगण्डूषान्पुरीषोत्सर्जनोत्तरम् ॥११२॥
मूत्रत्यागे तु चत्वार आचम्य त्रिस्तत: परम् ।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥११३॥

---

१. वाससा कम् (जलम्)- इति पा. उचित: ।

२. प्रविश्य च - इति पा. मेरौ ।

३. १०७, १०८, १०९ श्लोका: - इति ख.मा. न प्राप्यन्ते ।

४. एका लिङ्गे गुदे पञ्च पञ्चैकांत्तरमृत्तिका । केवलानि त्रयो योज्या तथैव करयोर्द्वयो: ।
पुन: पञ्च पुनश्चैका दातव्या लेपशुद्धये ॥ - इति ख.मा. पाठ:, श्लोक ११० तमस्य स्थाने भिन्न: पाठो दृश्यते ।

त्रिगुणं वानप्रस्थानां यतीनां च चतुर्गुणम् ।
१ दिवा शौचस्य रात्र्यध स्वस्य शौचस्य सर्वदा ॥११४॥
तदर्धं रुजि मार्गस्थः स्त्रीशूद्राणां तदर्धकम् ।
शौचं कृत्वा ततो मृद्भिस्त्रभिर्जप्यैर्विशोधयेत् ॥११५॥
२ शौचकर्मविहीनस्य सकला निष्फलाः क्रियाः ।

**दन्तधावनविधिः-**

ततः समाहरेद्दन्तधावनं विहितैधसाम् ॥११६॥
ते चापामार्गबदरीनिर्गुण्डीबिल्ववासकाः ।
अशोकचम्पकप्लक्षपर्णं जम्बुधरस्रुवः ॥११७॥
अर्कन्यग्रोधखदिरकरञ्जककुभादिजम् ।
३ शीर्षे शौर्यं वटे दीप्तिः कदम्बे विजयी रणे ॥११८॥
प्लक्षे सर्वार्थसिद्धिःस्याद् वदर्यां मधुरः स्वरः ।
खादिरे मुखसौगन्ध्यं बैल्वेन विपुलं धनम् ॥११९॥
अपामार्गे धृतिर्मेधा प्लक्षे कान्तिर्यशस्तथा ।
आयुः शीलं तथा लक्ष्मीः सौभाग्यं चोपजायते ॥१२०॥
अर्केण हन्यते रोगो ह्यर्थलाभश्च जायते ।
औदुम्बरे वारिवशुद्धिश्चम्पके स्याद्दृढश्रुतिः ॥१२१॥
जातीवकुलमन्दारैर्दुःस्वप्नं तस्य नश्यति ।
सर्वकण्टकिनः पुण्याः क्षीरिणस्तु यशस्विनः ॥१२२॥
अन्येषां वृक्षजातीनां न भवेद्दन्तधावनम् ।
पलाशबकुलं काशं भक्षयेद्यस्तु शिंशपम् ॥१२३॥

१. ११४ (ख), ११५ (क) -इति ख.मा.पा. न स्तः ।
२. श्लो. ११६ (क) - इति ख.मा.पा न प्राप्यते ।
३. श्लो. ११८ (ख), ११९, १२०, १२१, १२२, १२३ - इति ख.मा.पा. न प्राप्यन्ते ।

[1] तावद् भवति चाण्डालो यावद् गावं न पश्यति ।
स्फाटितं चातिरिक्तं च हीनं च त्वग्विवर्जितम् ॥१२४॥
अर्धदग्धं पथिभ्रष्टं श्मशानस्थं तथैव च ।
उच्छिष्टविष्ठामूत्रादिलग्नं यत्नात्परित्यजेत् ॥१२५॥
कनीन्यग्रसमस्थौल्यप्रगुणं द्वादशाङ्गुलम् ।
द्वादशाङ्गुलं विप्राणां क्षत्रियाणां नवाङ्गुलम् ॥१२६॥
अष्टाङ्गुलं च वैश्यानां शूद्राणां च षडङ्गुलम् ।
चतुरङ्गुलमानस्तु नारीणां विधिरुच्यते ॥१२७॥
चूर्णिताग्रं त्वचा युक्तं गृह्णीयान्मनुनाऽमुना ।
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ॥१२८॥
ब्रह्म प्रज्ञाञ्च मेधाञ्च तन्नो देहि वनस्पते ।
[2] प्राङ्मुखोदङ्मुखो भूत्वा उपविश्य सुखासने ॥१२९॥
भक्षयेन्मुखशुद्ध्यर्थं यथोक्तं दन्तधावनम् ।
क्लीमुक्त्वा कामदेवाय सर्वजनप्रियाय च ॥१३०॥
नमोऽन्तस्तिथिवर्णोऽयं मन्त्रो दन्तविशोधने ।
प्रक्षाल्य दन्तकाष्ठञ्च शुद्धदेशे पुरस्त्यजेत् ॥१३१॥
वक्त्रं मूलमनोर्नित्यं क्षालयेत्सिद्धिहेतवे ।
[3] प्रतिपद्दर्शषष्ठीषु नवम्यर्कदिने तथा ॥१३२॥
चन्द्रसूर्योपरागे च न कुर्याद्दन्तधावनम् ।
अभावे दन्तकाष्ठस्य निषिद्धायां तिथौ तथा ॥१३३॥
अपां द्वादशगण्डूषैः कुर्वीत मुखशोधनम् ।
अथ पूजाहोमकर्मसिद्धये स्नानमुच्यते ॥१३४॥

---

१. श्लो. १२४ - इति ख.मा. न प्राप्यते ।
२. श्लो. १२९ (ख), १३० (क) - इति ख.मा. न प्राप्येते ।
३. श्लो. १३२ (ख), १३३, १३४ (क) - इति अन्यत्र न प्राप्यन्ते ।

[1] स्नानपूर्वा: क्रिया: सर्वा: स्नानं च दैवतं भवेत् ।
प्रात: काले च मध्याह्ने सायाह्ने स्तोत्रपाठके ॥१३५॥
यदा यदा मनोग्लानिस्त्तदैव स्नानमाचरेत् ।
विद्योच्चारं तु य: कुर्यादस्नात: कृतभोजन: ॥१३६॥
तस्य विद्या भवेन्नष्टा रौरवं नरकं व्रजेत् ॥
अशुचि: सन्महेशानि विद्योच्चारं तु यश्चरेत् ॥१३७॥
तस्य नाशो भवेद् देवि विद्या दग्धा भवेद् ध्रुवम् ।
स्नानकालाश्च सम्प्रोक्ता: स्नानभेदाञ्छृणु प्रिये ॥१३८॥
स्नानं पञ्चविधं प्रोक्तं येन देवीमयो भवेत् ।
वारुणं नाभसं चैव तृतीयं भस्मजं स्मृतम् ॥१३९॥
चर्तुथं तैजसं देवि पञ्चमं दैवतं भवेत् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिव: ॥१४०॥
एते पञ्च महासत्त्वा: पञ्चस्नाने व्यवस्थिता: ।
परा च तदतीता च तत्परा तदनन्तरम् ॥ १४१॥
चित्परा तदतीता च पञ्चमी परिकीर्तिता ।
वारुणं द्विविधं प्रोक्तं वैदिकं तान्त्रिकं तथा ॥१४२॥
स्वाशाखोक्तविधानेन वैदिकं स्नानमीरितम् ।
स्वकल्पोक्तविधिना तान्त्रिकं स्नानमाचरेत् ॥१४३॥
शङ्कुनाऽस्त्राभिजप्तेन शुचिस्थानात्तु मृत्तिकाम् ।
गृहीत्वास्त्रेण संसिच्य यायाज्जलनिकेतनम् ॥१४४॥
तत्रादौ नलकूलं तु क्षालयेदस्त्रवारिणा ।
[2] मृदं कृत्वा द्विधा तत्र एकभागोपगं तत: ॥१४५॥
निधाय गोमयं दर्भांस्तिलाँश्चाप्यभिमन्त्रितान् ।
मृत्तिकागोमयाभ्याञ्च कट्यन्तं स्नानमाचरेत् ॥१४६॥

---

१. श्लो. १३५, १३६, १३७, १३८, १३९, १४०, १४१, १४२, १४३ - इति ख.मा. न प्राप्यन्ते ।
२. मृष्टं कृत्वा तटं तत्र चैकभागे विचक्षण: - इति पा. मेरी ।

बहिरुद्धृततोयेन मलस्नानं ततः परम् ।
विधाय वैदिकस्नानं तदङ्गं तर्पणं तथा ॥१४७॥
अथ वक्ष्यामि ते वत्स स्नानं कुलसुखावहम् ।
कृष्णा रक्ता हरिन्नीला विविधा मम मूर्त्तयः ॥१४८॥
ततस्तान्त्रिकस्नानस्य विधिरंस्त्रेण मृत्तिकाम् ।
समादायास्त्रमन्त्रेण मन्त्रयित्वा तृणादिकम् ॥१४९॥
शिखामन्त्रेणापहृत्य त्रिर्मूलेनाभिमन्त्रयेत् ।
मूर्धादिपादपर्यन्तं विलिप्य प्रणमेज्जलम् ॥१५०॥
[1] आधारः सर्वभूतस्य विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जातास्ता आपः प्रणमाम्यहम् ॥१५१॥
सम्मुखीकरणीं मुद्रां बद्ध्वा प्राणान् निरुध्य च ।
निमज्य तूष्णीमुत्थाय नाभिमात्रे जले [2] स्थितः ॥१५२॥
आचान्तः कुलद्रव्येण सदर्भः कुलपुष्पकम् ।
कुलपात्रं सदर्भञ्च सतिलं सजलं ततः ॥१५३॥
त्रिविधः कुलदर्भो हि चोदितः कालशम्भुना ।
कथ्यते तत्र देवेशि गोपनीया कुलेश्वरी ॥१५४॥
कुलचक्रोपरिगताः कुलदर्भाः सुखेष्टदाः ।
त्रयो दर्भाः समुद्दिष्टाः सुवर्णैः रजतैः कुशैः ॥१५५॥
तत्र शाक्ते द्वयं चान्यमन्येषान्तु त्रयो मताः ।
सुवर्णं रजतं चैव जपपूजादिकर्मसु ॥१५६॥
कर्षार्द्धं कर्षमात्रं वा पवित्राय प्रकल्पयेत् ।
कुशकार्यकरं प्रोक्तं न तु वन्यकुशाः कुशाः ॥१५७॥
तर्जन्या रजतं धार्यं स्वण धार्यमनामया ।
एष एव कुशः प्रोक्तो न दर्भा वनसम्भवाः ॥१५८॥

---

1. आधाराः सर्वभूतानाम् - इति पाठः मेरौ ।
2. नरः - इ[illegible] पा. मेरौ ।

कूर्चानां पञ्चकं लेख्यं परितोवर्णमेखलाम् ।
शूलकपालमालिख्य ब्रह्मकूर्चः प्रकीर्तितः ॥१५९॥
एतस्य धारणादेव वाञ्छाकार्यमवाप्नुयात् ।
त्रिधा दर्भः प्रकथितः कालिकादर्भवर्त्मनि ॥१६०॥
गोपनीयमिदं भद्रे सारात्सारतरं महत् ।
कपालं च तथा खड्गं स्त्रीबीजानि च पञ्च च ॥१६१॥
अनामायामिदं धार्यं स्वर्णवर्णं शुभावहम् ।
कूर्चाद्यकालिकातारासप्तताराढ्यमेव च ॥१६२॥
सर्वबीजाढ्यरूपञ्च कुलदर्भञ्च धारयेत् ।
विद्याश्रीकीर्तिजननं शान्तिदं सर्वसिद्धिदम् ॥१६३॥
सर्वसौन्दर्यदं भद्रे दीक्षासिद्धिप्रदर्शकम् ।
गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत् ॥१६४॥
तान्त्रिकं स्नानसंकल्पं मासोल्लेखादिपूर्वकम् ।
कृतसंकल्प एवाऽसौ कुलचक्रं जले न्यसेत् ॥१६५॥
कृत्वाऽथ मूलमन्त्रेण प्राणायामञ्जयं चरेत् ।
विन्यस्य च पडङ्गानि कल्पयेत्तीर्थमग्रतः ॥१६६॥
चतुरस्रे हस्तमात्रे तज्जले परिकल्पिते ।
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥१६७॥
तेन सत्येन देवेश तीर्थं देहि दिवाकर ।
इति सूर्यं प्रार्थयित्वा क्रोमित्यङ्कुशमुद्रया ॥१६८॥

**अङ्कुशमुद्रा –**

दक्षमुष्टिं विधायाथ तर्जन्यङ्कुशरूपिणी ।
अङ्कुशाख्या महामुद्रा त्रैलोक्याकर्षणक्षमा ॥१६९॥
भित्त्वाऽर्कमण्डलं तस्मात्तीर्थान्यावाहयेदिह ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ॥१७०॥
नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ।
एवमुक्त्वा तु तीर्थानि तस्मिन् तोये नियोजयेत् ॥१७१॥

मूलमन्त्रेणाथ तीर्थशक्तिं तत्र समाह्वयेत् ।
अर्कस्य मण्डलं ध्यात्वा तन्मन्त्रेण च पूजयेत् ॥ १७२॥
सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभाम्
त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं सृणिं वामतः ।
अन्तश्चामृतपूर्णहेमकलशां [1] मुक्ताक्षमालावराम्
गङ्गासिन्धुसरिद्वरादिसहितां श्रीतीर्थशक्तिं भजे ॥१७३॥
ह्रौँ ह्रीँ ह्रूँ ह्रैँ ह्रौँ ह्रः इति सर्वानन्दमये पदम् ।
तीर्थशक्ते तथा हिलियुगलं वह्निगेहिनी ॥१७४॥
[2] एकविंशाक्षरः प्रोक्तस्तीर्थशक्तेर्महामनुः ।
तज्जलं गाङ्गमन्त्रेण मन्त्रयेदष्टवारकम् ॥१७५॥
तारो नमो भगवती भूयादम्बे ततोऽम्बिके ।
अम्बालिके महामलिन्येह्येहि भगवत्यथ ॥१७६॥
अशेषतीर्थालबाले मायाश्रीबीजमुच्चरेत् ।
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विठः॥१७७॥
गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ।
(वामे तु गङ्गामन्त्रध्यानयोर्विशेषः)
तारो नमो भगवति वाग्भवं च हिलिद्वयम् ॥१७८॥
मिलिद्वयं च गङ्गे मां पावय द्वितयं वदेत् ।
स्वाहान्तस्तारका वर्णा मनुः पापप्रणाशनः ॥१७९॥

**ध्यानम् -**

रक्ताम्बरां रक्तवर्णां शूलकुम्भवराभयान् ।
करैः संदधतीं स्मेरां कच्छपस्थां सुरादिभिः ॥१८०॥
तद्रूपाभिः स्वपापस्य नाशाय सुनिषेविताम् ।
भुवनेश्या समालोड्यामृतीकृत्य सुधाणुना ॥१८१॥

---

[1]. मुक्ताक्षमालावतीम् -इति पा. मेरौ ।
[2]. द्वाविंशत्यक्षरः - इति पा. मेरौ ।

कवचेनावगुण्ठ्याथ संरक्ष्यास्त्रेण मन्त्रवित् ।
मूलेन देवतां तत्र साङ्गां सावरणां तथा ॥१८२॥
समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम् ।
ध्यात्वा तीर्थं स्मरन्मूलं मन्त्री स्नायाज्जले त्रिशः ॥१८३॥
हृदि देवं स्मेरत्पश्चात्सिञ्चेत् कं कुम्भमुद्रया ।

**कुम्भमुद्रा –**

दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु ॥१८४॥
सावकाशा चैकमुष्टिर्मुद्रेयं कुम्भसंज्ञिता ।
त्रिभिः श्लोकैर्मूलमन्त्रैस्तारकं बीजपूर्वकैः ॥१८५॥
सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजायते ।
मानसः सर्वभूतानामापो देव्यः पुनन्तु माम् ॥१८६॥
अलक्ष्मीर्मलरूपा या सर्वभूतेषु संस्थिता ।
क्षालयन्तु निजस्पर्शादापो देव्यः पुनन्तु माम् ॥१८७॥
यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद् ध्नन्तु वो नमः ॥१८८॥
ततः स्वाहान्तमूलेन त्रिराचमनमाचरेत् ।
त्रिधा देवं च सन्तर्प्य तोयमध्यात्तटं व्रजेत् ॥१८९॥
धौतं वस्त्रयुगं धृत्वा [१] प्रक्षाल्यानुकरौ तथा ।
[२] मृदाभिस्तत आचामेदेषः स्नानविधिः स्मृतः ॥१९०॥
मन्त्रस्नानं प्रकर्तव्यं शीतयोर्देशकालयोः।
तोयाभावे गते दुर्गे कार्ये स्वास्थ्ये च वार्द्धके ॥१९१॥
तोयाभावे तु यत्कार्यं दुर्गे काले च शीततः ।
गमने क्षिप्रसिध्यर्थं गुरुकार्येष्वतन्द्रितः॥१९२॥
प्राप्ता यद्यथ विप्रेन्द्र निशाभागे तथा मुने ।
प्रक्षाल्य पादावाचम्य प्रोद्धृतेन तु वारिणा ॥१९३॥

---

१. प्रक्षाल्य च करौ तथा - इति पा. मेरौ ।
२. मृदाद्भिस्तत आचम्य देवस्नानविधिः स्मृतः –इति पा. मेरौ ।

स्थानं दश दिशः प्रागवत्संशोध्योपविशेत्ततः ।
जलं हस्ततले न्यस्य क्रमन्यासाँस्ततश्चरेत् ॥१९४॥
मातृकादीँस्तथा मूलमन्त्रन्यासानशेषतः ।
न्यासान्ते संस्पृशेत्तोयं मन्त्रस्नानमिदं वरम् ॥१९५॥
केवलादुदकस्नानात्संस्कारपरिवर्जितात् ।
प्रभासादिषु तीर्थेषु यत्फलं स्नानकस्य तु ॥१९६॥
ज्ञेयं दशगुणं तस्मान्मन्त्रस्नानस्य निश्चयात् ।

**मानसस्नानम् -**

मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ॥१९७॥
कुर्वीत मानसं स्नानं दृष्टतीर्थेषु भावनात् ।

**तैजसस्नानम् -**

[1] तैजसं संप्रवक्ष्यामि येन सिध्यन्ति सिद्धयः ॥१९८॥
[2] गुरुदैवतमन्त्राणामैक्यं संभावयेद्धिया ।
गुरुतेजो मन्त्रतेजो देवतायास्तथैव च ॥१९९॥
एकीकृत्य त्रिचैतन्यं तन्मूर्तिं परिकल्पयेत् ।
हृदयं देवतास्थानं कण्ठे चैव मनुर्मतः ॥२००॥
सहस्रारे गुरुप्रोक्तस्त्रिचैतन्यं विभावयेत् ।
तां मूर्त्तिं स्वस्य देहे तु यथा स्वावयवोत्तमा ॥२०१॥

---

[1] अथ .... श्लोकः १९८ (ख) - इति ख.मा.पा. नास्ति ।

[2] श्लोक १९८ (ख) पूर्वं निम्नाङ्कितः - इति ख.मा. अधिकः पाठः -
अथ वैष्णवानां ध्यानस्नानम् -
ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं च यत् ।
स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं प्रभुं स्मरेत् ॥
तत्पादोदकजां गङ्गां निपतन्तीं स्वमूर्धनि ।
चिन्तयेत् सूक्ष्मरन्ध्रेण प्रविशन्तीं स्वकं तनुम् ॥
तस्मात्संक्षालयेत् सर्वमेतद्देहगतं मलम् ।
तत्क्षणाद्विरतो मन्त्री जायते स्फटिकोपमः ॥
इदं स्नानपरं मन्त्रं स्नानाच्छतगुणं मतम् ।
मनसा यस्तु संशुद्धः स शुद्धः सर्वकर्मसु ॥
शिवस्नानम्-
यद्वा शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् ।
मार्जनंसांहितैर्मन्त्रैः शिवस्नानमितीरितम् ॥ इति ।

सम्भावयेन्महेशानि दैवतदर्शनप्रदम् ।
तैजसं गदितं देवि दैवतं शृणु पार्वति ॥२०२॥

**दैवस्नानम् –**

मूलाधारं समारभ्य विलान्तं परमेश्वरि ।
देवतां भावयेद्देवि स्वमुखे तन्मुखं शिवो ॥२०३॥
तस्याः सर्वांशके देवि स्वदेहे स्थानयोगतः ।
द्वारदेशे महेशानि गङ्गां च यमुनान्तथा ॥२०४॥
स्वदेहे भावितायान्तु गङ्गायाः किं फलं भवेत् ॥
इडा नाम नाडी स्थिता वामभागे,
ततो दक्षिणे पिङ्गला नाम नाडी ।
तयोः पृष्ठवंशं समाश्रित्य मध्ये,
सुषुम्णा स्थिता ब्रह्मरन्ध्रं तु यावत् ॥२०५॥
इडा गङ्गेति विख्याता सुषुम्णा यमुना नदी ।
सरस्वती पिङ्गला स्यात्प्रयागं देहमध्यगम् ॥२०६
देहज्ञानं विना देवि दैवतं स्नानमीरितम् ।
अनेन स्नानयोगेन किन्न यन्न करे स्थितम् ॥२०७॥
स्नानपूर्वाः क्रियाःसर्वाः शुद्धां सिद्धिं प्रयान्ति च ।
तस्मात्स्नानं पुरा कुर्यादिष्वेकं देहशक्तितः ॥२०८॥
ततस्तु तिलकं कुर्याद्वर्णजं दैवतस्य च ।
ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात्क्षत्रियस्य त्रिपुण्ड्रकम् ॥२०९॥
अर्धचन्द्रं तु वैश्यस्य शूद्राणां वर्त्तुलाकृति ।
ऊर्ध्वपुण्ड्रं मृदा कुर्यात्त्रिपुण्ड्रं चापि भस्मना ॥२१०॥
केशरेण च कस्तूर्या शेषं शीतं यथारुचि ।
वैष्णवस्योर्ध्वपुण्ड्रं स्यात्त्रिपुण्ड्रं शिवसेवने ॥२११॥
अर्धचन्द्रो गणेशस्य देवीभक्तस्य वर्त्तुलम् ।
नारायणपरो यस्तु चन्दनस्य त्रिशूलकम् ॥२१२॥

[1] भाले विभूतिवत्कुर्याद् ब्रह्मविष्णुशिवात्मकम् ।
भस्मना चोर्ध्वपुण्ड्रं तु तिर्यक्पुण्ड्रं मृदा तथा ॥२१३॥
ऊर्ध्वपुण्ड्रे त्रिपुण्ड्रं स्यान्नोर्ध्वपुण्ड्रं त्रिपुण्ड्रके ।
ब्रह्महत्यासमं प्रोक्तं मुनिभिर्वेदपारगैः ॥२१४॥
रुद्रपिण्डसमुद्भूता द्विजा मोहसमन्विताः ।
पितरं तं न जानन्ति [2] तेऽधिवेश्या सुता इव ॥२१५॥
त्रिपुण्ड्रं ब्राह्मणो विद्वान्मनसाऽपि न लङ्घयेत् ।
श्रुत्वा विधीयते येन स त्यागी पातकी भवेत् ॥२१६॥
वेदस्याध्ययने शूद्रो नाधिकारी यथा भवेत् ।
त्रिपुण्ड्रेन विना विप्रो नाधिकारी शिवार्चने ॥२१७॥
विभूतिधारणं कार्यं वैदिकं तान्त्रिकं तथा ।
कपिलायाः [3] शकृच्छ्रस्तं गृहीतं गगने पतत् ॥२१८॥
न क्लिन्नं नापि [4] कठिनं न दुर्गन्धि न चोषितम् ।
उपर्यधः परित्यज्य गृह्णीयात्पतितं यदि ॥२१९॥
पिण्डीकृत्य शिवाग्नौ च तत्क्षिपेन्मूलमन्त्रतः ।
अपक्वमतिपक्वं च सन्त्यज्य [5] चासितं सितम् ॥ २२०॥
आदाय वाससाऽऽलोड्य भस्माधारे विनिःक्षिपेद् ।
भस्मसङ्ग्रहणं कुर्याद्दिवेऽनुद्वासने सति ॥२२१॥
उद्वासने कृते यस्माच्चण्डं भस्म प्रजायते ।
भस्म विद्धि परं देवि सत्यलोकसुखाह्वयम् ॥२२२॥
भस्मना सर्वपाशानां पापानां च सुरेश्वरि ।
भस्मेति कीर्तितं तेन मुनिभिस्तत्त्ववेदिभिः ॥२२३॥

---

१ भाले विभूतिमान्योऽसौ ब्रह्मविष्णुशिवात्मकः - इति पा. मेरौ ।
२ नाधिवेश्या सुता इव - इति ख.मा. पा. ।
३ शकृद्धस्वगृहीतम् - इति पा. मेरौ ।
४ क्वथितम् - इति पा. मेरौ ।
५ भसितम् - इति पा. मेरौ ।

तत्पुनर्द्विविधं विद्धि मुखं गोलं तथैव च ।
मुख्यं प्रोक्तं परं ब्रह्म गोलमाग्नेयमुच्यते ॥२२४॥
भस्म तदेवमारभ्य मुख्यं तदपरं बुधः ।
आग्नेयं गोलमज्ञानध्वंसकं ज्ञानसाधकम् ॥२२५॥
गोलं नानाविधं विद्धि शुम्भप्राणहरेऽम्बिके ।
अग्निहोत्राग्निजं तद्धि विरजाहोमजं शिवे ॥२२६॥
औपानससमुत्पन्नं समिदग्निसमुद्भवम् ।
पचनाग्निसमुद्भूतं दावानलसमुद्भवम् ॥२२७॥
त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।
विरजानलजं चैव धार्यं भस्म नगात्मजे ॥२२८॥
औपानससमुत्पन्नं गृहस्थानां विशेषतः ।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ॥२२९॥
शूद्राणां स्तोत्रगृहजं परमाग्निसमुद्भवम् ।
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥२३०॥
यद्वा द्विजा भस्म कुर्युः सद्येनानीय गोमयम् ।
वामेन पात्रे संयोज्याघोरमन्त्रेण निर्दहेत् ॥२३१॥
पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ।
इत्थं तु संस्कृतं भस्म अग्निरित्यादिमन्त्रतः ॥२३२॥
१ तद्रुद्रायेति यजुषा मन्त्रयेद्रुद्रसंज्ञया ।
२ प्रणवाद्यैश्चतुर्थ्यन्तैर्हृदन्तैर्नामभिः प्रिये ॥२३३॥
पञ्चवर्णाद्यक्षराद्यैर्भालांसोदरहृत्सु च ३ ।
त्रिपुण्ड्रधारणं कुर्यान्मूर्ध्नि पञ्चाक्षरेण च ॥२३४॥
एभिश्च नामभिर्धार्यं पुनर्भस्म द्विजातिभिः ।
ब्रह्मा ललाटे विज्ञेयो हृदये हव्यवाहनः ॥२३५॥

---

१ याते रुद्रेति यजुषा - इति पा. मेरौ ।
२ प्रणवाद्यैश्चतुर्थीहृदन्तैर्नामभिरंशकैः - इति पा. मेरौ ।
३ भालांशैर्हृद्भुतैः - इति पा. मेरौ ।

नाभौ स्कन्दो गले पूषा [1] रुद्रो दक्षिणबाहुके ।
आदित्यो बाहुमध्ये च शशी च मणिबन्धने ॥२३६॥
वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः ।
मणिबन्धे च वसवः पृष्ठदेशे हरिः स्मृतः ॥२३७॥
शम्भुः ककुदि संप्रोक्तः परमात्मा [2] शिरः स्मृतः ।
[3] आब्रह्मरन्ध्रपादान्तं योगिनामाप्लवं मतम् ॥२३८॥
नाभेरूर्ध्वं गृहस्थानां यतीनां च विशेषणम् ।
इदानीं तान्त्रिकमतं तन्मे निगदितं शृणु ॥२३९॥
कस्तूर्यादिसुसंयुक्तं भस्म शाक्तस्तु धारयेत् ।
मन्त्रितैर्मूलमन्त्रेण शिवपञ्चाक्षरेण वा ॥२४०॥
अन्येषामपि सर्वेषां विना मन्त्रं सुरेश्वरि ।

**विशेषस्तु –**

विभूतिधारणे मन्त्रं शृणु सावहिता शिवे ॥२४१॥
विभूतिधारणस्यास्य मन्त्रस्य च सदाशिवः ।
ऋषिस्त्रिष्टुब्भवेच्छन्दो रुद्रो देवः प्रकीर्तितः ॥२४२॥
प्रासादबीजं बीजं स्याच्छक्तिः कूर्चं च कीलकम् ।
क्षेत्रपालं सर्वपापक्षयार्थे विनियोगिता ॥२४३॥
न्यासं ऋष्यादिकं कृत्वा मूलेन वीक्षणं मतम् ।
संस्कृत्येत्थं दक्षकरे विभूतिं विनिधाय हि ॥२४४॥
आच्छाद्य वामहस्तेन कपोताभिनयात्मना ।
वक्ष्यमाणेन मन्त्रेण त्रिवारमभिमन्त्रयेत् ॥२४५॥
फट्कारेण त्रिरावृत्य जलेन वेष्टनं चरेत् ।
पञ्चवारं मूलमनुं जप्वा शोधनमाचरेत् ॥२४६॥

---

[1]. रुद्रा - इति पा.मेरौ ।
[2]. शिवः - इति पा. मेरौ ।
[3]. श्लोकांशः २३८ (ख) - इति ख. मा.पा. नास्ति ।

ततो दक्षकराद्वामकरे भस्म निधाय हि ।
ततो मूलेन मनुना जलेनालोडयेत्प्रिये ॥२४७॥
वर्तुलं मण्डलं कृत्वा षट्कोणं न्यस्य मध्यगम् ।
त्रिकोणं तस्य चाप्यन्तमूलंबीजं द्विजोत्तमः ॥२४८॥
दक्षकरेण चाच्छाद्य मन्त्रमेनं जपेत्ततः ।
प्रासादं कूर्चं बीजं च क्षेत्रपालं तथाङ्कुशम् ॥२४९॥
विभूतिपदामाभाष्य [1] अशेषदुरितापहे ।
मनोवाक्कायमित्युक्त्वा शोधय द्वितयं वदेत् ॥२५०॥
कूर्चास्त्रवह्निललनायुक्तो मन्त्रः प्रकीर्तितः ।
अत्र कश्चिद् विशेषोऽस्ति श्मशानभस्मधारणे ॥२५१॥
मूलेन वीक्षणं कुर्यात् कूर्चेण वेष्टनं चरेत् ।
तारमैधत्रपाकामकूर्चवर्मास्त्रहृन्मनुः ॥२५२॥
अनेन मनुना देवि सप्तवारं विशोध्य च ।
पश्चान्मूलमनुं जप्त्वा दशवारं सुरेश्वरि ॥२५३॥
त्रिवारं सप्तवारं वा स्वेष्टदेव्यै निवेद्य च ।
तदन्ते तिलकं कुर्याद्दिवताभावसिद्धये ॥२५४॥
त्रिपुण्ड्रं कारयेद् भाले ब्रह्मविष्णुशिवात्मकम् ॥२५५॥
मध्यमानमिका चैव तर्जन्येव त्रिपुण्ड्रकम् ।
अतिस्वल्पमनाधृष्यमतिदीर्घान्तमक्षयम् ॥२५६॥
नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः ।
षडङ्गुलप्रमाणं तु ब्राह्मणानां त्रिपुण्ड्रकम् ॥२५७॥
नृपाणां चतुरङ्गुल्यं वैश्यानां तु त्रिरङ्गुलम् ।
एकाङ्गुलं तु शूद्राणां नारीणां तु विसर्जनम् ॥२५८॥
ब्रह्माविष्णुश्च रुद्रश्च त्रिपुण्डस्याधिदेवताः ।
धार्यं भस्म त्रिपुण्ड्रं तु गृहिणां जलसंयुतम् ॥२५९॥

---

[1] . ह्यशेष - इति पा. उचितः ।

सर्वकालं भवेत्स्त्रीणां यतीनां जलवर्जितम् ।
एवं भस्म धृतं येन तस्य पुण्यफलं शृणु ॥२६०॥
महापातकसंङ्घाश्च तथान्ये चोपपातकाः ।
नश्यन्ति खुल देवेशि सत्यं सत्यं च नान्यथा ॥२६१॥
बहुनोक्तने किं भस्मधारणं मोक्षसाधनम् ।
भूतिदा तु विभूतिः स्याद् विधिना विधृता यदि ॥२६२॥
यथाकथंचिद्विधृता भस्मसात्कुरुते जनम् ।
धृत्वा भस्म तु यो मोहात्करौ प्रक्षालयेद् भुवि ॥२६३॥
स रौरवे वसेन्मर्त्यो यावदाचन्द्रतारकम् ।
यावन्तः पतिताः भूमौ भस्मनः परमाणवः ॥२६४॥
तावद्वर्षसहस्राणि नरो भवति किल्विषी ।
विभूतिधारणं चादौ तिलकं चन्दनेन च ॥२६५॥
विशेषतस्तु शाक्तानां द्वयमावश्यकं प्रिये ।
अतो निबोध विधिवत्तद्वच्चन्दनधारणम् ॥२६६॥
वामे करतले श्वेतं स्थापयित्वा तु चन्दनम् ।
मूलमन्त्रं विलिख्यात्र ततोऽनामिकया ननु ॥२६७॥
गृहीत्वा प्राक्षिपेद् भूमौ पञ्चमन्त्रान्समुच्चरन् ।
ताराद्याश्च हृदन्त्याश्च ङेन्ता अपि समीरिताः ॥२६८॥
ज्ञानेच्छे च क्रियाशक्तिः कामाः सर्वकलोत्तराः ।
आच्छाद्य दक्षिणेनैव ततः करतलेन तु ॥२६९॥
गृह्णन्मन्त्रं वक्ष्यमाणं कुर्यात्तिलकमीश्वरि ।
अलङ्घयन् भस्मरेखां तिर्यग्रेखाविधानतः ॥२७०॥
मायाकामरुषः सर्वजनमोहिनि चोद्धरेत् ।
सर्ववशंकरीत्युक्त्वा मां ततो रक्ष युग्मकम् ॥२७१॥
अस्त्रं शिरोयुतो मन्त्रो मया ते परिकीर्तितः ।
एतत्तन्त्रोदितं देवि प्रोक्तं तिलकधारणम् ॥२७२॥

**सन्ध्या-**

आचम्य प्राङ्मुखो भूत्वा ह्युपविश्य च मन्त्रवित् ।
वैदिकीं तान्त्रिकीं कुर्यात्ततः संध्यां समाहितः ॥२७३॥
वक्ष्येऽथ तान्त्रिकीं सन्ध्यां मूलेनाऽऽचमनत्रयम् ।

**विद्याभेदे सन्ध्यासंख्या-**

सुन्दर्यास्तु चतुष्कालं सन्ध्यावन्दनमाचरेत् ॥२७४॥
प्रातःकाले च मध्याह्ने सायाह्नेऽप्यर्धरात्रके ।
चतुर्विधा तु गायत्री जपेद्यत्नेन पार्वति ॥२७५॥
प्रस्ताराकृतिरूपा च उपस्थानाभिधा तथा ।
वाञ्छाकल्पलता देवि चतुर्थी परिकीर्तिता ॥२७६॥
षष्ठी पारायणं प्रातर्मध्याह्ने नामसंज्ञकम् ।
मन्त्रपरायणं रात्रौ निशायां चक्रसंज्ञकम् ॥२७७॥
कालिकायामिदं प्रोक्तमुपस्थानविवर्जितम् ।
मेधादीक्षादिराज्ञीत्वात्काल्यां सन्ध्याचतुष्टयम् ॥२७८॥
संन्ध्यात्रयं च ताराया छिन्नायां त्रिविधा भवेत ।
एतासां न हि भेदोऽस्ति भेदभाङ्नरकं वजेत् ॥२७९॥
शिखां बद्ध्वाऽथ मूलेन प्राणायामत्रयं चरेत् ।
अङ्गानि विन्यसेद्देहे करन्यासपुरस्सरम् ॥२८०॥
१ अमृतीकृत्य पुरतो जलं वै धेनुमुद्रया ।
अभिमन्त्र्य च मूलेन सप्तवारं ततः परम् ॥२८१॥
अकारादिक्षकारान्तैर्मातृकार्णैः सबिन्दुभिः ।
प्रणवं प्रोक्षयेन्मूर्ध्नि कुशमूलेन च त्रिधा ॥२८२॥

---

१ प्रणवं पूर्वमुद्धृत्य मणिधरिणि वज्रिणि ।
रक्षद्वयं तथा हुं फट् स्वाहेति तदनन्तरम् ।
अनेनैव हि मन्त्रेण रक्षां कुर्याद्विचक्षणः ।
पुनराचम्य विन्यस्य षडङ्गानि च मन्त्रवित् ॥
- इति ख.मा. अधिकः पाठः ।

देवं ध्यात्वाऽथ मनुविद् भानुमण्डलसंस्थितम् ।
आदाय तोयमामन्त्र्य बीजैर्भूतात्मकैस्तथा ॥२८३॥
लं वं रं यं हं इति च तन्मन्त्रैः सप्तधा जलम् ।
मन्त्रयित्वा पुनः सप्तवारं मूलेन मन्त्रयेत् ॥२८४॥
तज्जलं वामहस्तेन धार्यं तत्प्लुतबिन्दुभिः ।
दक्षहस्तेन संप्रोक्ष्य कं पठेन्मूलमन्त्रकम् ॥२८५॥
हस्तव्यत्यासनाद् वामाचारी सेवनमाचरेत् ।
नासामाश्लिष्य शिष्टेन तेजोरूपेण तेन तु ॥२८६॥
प्रविश्यान्तर्गतं सर्वं मलं संशोध्य निर्गतम् ।
दक्षनासापुटैनैतत्स्मृत्वा दक्षिणहस्तगम् ॥२८७॥
वामभागे वज्रशिलां ध्यात्वाऽस्त्रेण च तत् क्षिपेत् ।
प्रक्षाल्य हस्तावाचम्य मूलमन्त्रेण मन्त्रवित् ॥२८८॥
गायत्र्या वाऽथ मूलेन दद्यादर्घ्यत्रयं ततः
सूर्यमण्डलवासिन्यै देवतायै ततः परम् ॥२८९॥
अर्घ्यमञ्जलिनादाय गायत्र्या च त्रिरुत्क्षिपेत् ।

**तारायान्तु विशेषः-**

कुपीतमोढ्रपुष्पञ्च कुलपुष्पं कुशाजलम् ॥२९०॥
अक्षताँश्च तथा ताम्रे कृत्वा चार्घ्यं निवेदयेत् ।
मूलान्ते चोद्यदादित्यपदान्मण्डल इत्यपि ॥२९१॥
वर्त्तिन्यै शिवचैतन्यमयै स्वाहेति तन्मनुः ।

**पुरुषाणां विशेषः-**

रविमण्डलसंस्थाय स्वेष्टदेवाय चार्पयेत् ॥२९२॥
यथाशक्त्या जपेद्विद्यां गायत्रीन्तदनन्तरम् ।
अष्टोत्तरशतावृत्त्या गायत्रीं प्रजपेत्सुधीः ॥ २९३॥
महापातकयुक्तोऽपि प्रजपेद्दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ॥२९४॥
शक्ताशक्तप्रभेदेन गायत्रीं दशधा जपेत् ।
जलेन मूलमन्त्रान्ते ह्यमुकं तर्पयामि च ॥२९५॥

उक्त्वा त्रिधा तर्पणीयं वामकै: करणेन तु ।
इष्टदेवस्य गायत्रीमष्टाविंशतिसङ्ख्यकाम् ॥२९६॥
जपेदभावे ब्राह्मीन्तु वैदिकमतमाश्रित: ।
तान्त्रिक: शिवगायत्रीं जपेत्साऽथ निरूप्यते ॥२९७॥
ॐ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ।
तन्न: शिव: प्रचोदयात् ॥२९८॥

### गायत्रीध्यानम्-

**पूर्वाह्णे -**

उद्यदादित्यसङ्काशां पुस्तकाक्षकरां स्मरेत् ।
कृष्णाजिनधरां ब्राह्मीं [1] ध्यायेत्तारकिताम्बरे ॥२९९॥

**मध्याह्ने -**

श्यामवर्णां चर्तुर्बाहुं शङ्खचक्रलसत्कराम् ।
गदापद्मधरां देवीं सूर्यबिम्बकृताश्रयाम् ॥३००॥

**सायाह्ने -**

सायाह्ने वरदां देवीं गायत्रीं संस्मरेद् बुध: ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥३०१॥
त्रिनेत्रां वरदां पाशं शूलं च नृकरोटिकाम् ।
सूर्यमण्डलमध्यस्थां ध्यायेद्देवीं समभ्यसेत् ॥३०२॥

### श्यामाया गायत्रीविधानम्

**श्रीदेव्युवाच -**

गायत्री या पुरा प्रोक्ता देव देव जगत्पते ।
ऋष्यादि चैव किं ध्यानं जपपूजादिकं तथा ॥३०३॥
साधनं च महादेव कथयस्व मयि प्रभो ।

**श्रीभैरव उवाच -**

कथयामि महादेवि शृणुष्व प्राणवल्लभे ॥३०४॥

---

[1] ध्यायेत्ताराङ्किताम्बरे - इति पा. उचित: ।

श्रीकृष्णस्तु ऋषिस्तस्या गायत्रीच्छन्द एव च ।
शिवशक्तिस्वरूपा हि देवता परिकीर्तिता ॥३०५॥
ध्यानं चैव वदाम्यत्र शृणुष्व देवि भक्तितः ।
श्मशाने च महाकालीं देवीं ध्यायेद्दिगम्बराम् ॥३०६॥
दंष्ट्राकरालवदनां मुण्डमालाविभूषिताम् ।
दक्षिणोर्ध्वे धनुर्धत्ते वामे चैव तथा शरान् ॥३०७॥
अधः पाशं च खड्गं च तत्क्रमात्परिकीर्तितम् ।
एवं ध्यात्वा महाकालीं जपेल्लक्षचतुष्टयम् ॥३०८॥
रुधिराक्तैर्बिल्वपत्रैस्तद्दशांशेन होमयेत् ।
साधनं च महादेवि पूर्ववत् समुपाचरेत् ॥३०९॥

**आद्या गायत्री –**

कालिकायै पदं चोक्त्वा विद्महे तदनन्तरम् ।
श्मशानवासिनी ङेन्तं धीमहीति ततो वदेत् ॥३१०॥
तन्नो घोरे पदं प्रोच्य प्रवदेच्च प्रचोदयात् ।
अस्याः प्रसादमात्रेण महापातककोटयः ॥३११॥
सद्यः प्रलयमायान्ति साधकस्य न चान्यथा ।
रावणस्य वधाच्चैव रामचन्द्रो विमोचितः ॥३१२॥
मातृवधात्परशुरामो मोचितोऽस्याः प्रसादतः ।
सुरापानाच्च श्रीकृष्णो दत्तात्रेयस्तथैव च ॥३१३॥
ब्रह्मणश्च शिरश्छेदादहं रुद्रो विमोचितः ।
एवमेषा महाविद्या गायत्री देवी सुन्दरि ॥३१४॥
महापातकयुक्तोऽपि प्रजपेद्दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ॥३१५॥
ब्रह्महत्यादयः पापाः खण्डं खण्डं व्रजन्ति हि ।
नानयोः सदृशी विद्या नानेन सदृशो जपः ॥३१६॥
नानेन सदृशं ज्ञानं न भूतं न भविष्यति ।

**तारायाः–**

तारायै पदमाभाष्य विद्महे तदनन्तरम् ॥३१७॥

महोग्रायै पदं प्रोच्य धीमहीति ततः पुनः ।
तन्नो देवि पदं प्रोच्य वदेत् पश्चात्प्रचोदयात् ॥३१८॥

**छिन्नायाः –**

वैरोचन्यै विद्महे च छिन्नमस्तायै च धीमहि ।
तन्नो देवि पदं चोक्त्वा योजनीयं प्रचोदयात् ॥३१९॥

**त्रिपुरसुन्दर्याः –**

वाग्भवं त्रिपुरा देवि विद्महे तदनन्तरम् ।
कामबीजं समुच्चार्य कामेश्वर्यै च धीमहि ॥ ३२०॥
तन्नः क्लिन्ने पदं चोक्त्वा वदेत्पश्चात्प्रचोदयात् ।

**भैरव्याः –**

त्रिपुरा च तथा ङेन्तं विद्महे पदमुद्धरेत् ॥३२१॥
भैरव्यै च ततश्चोक्त्वा धीमहीति ततो वदेत् ।
ततो देवी पदं चोक्त्वा [1] प्रचोदयादुदीरयेत् ॥३२२॥
गायत्री त्रैपुरी ख्याता वाग्भवाद्यं समुद्धरेत् ।

**कमलायाः –**

महालक्ष्मीपदं प्रोच्य विद्महे तदनन्तरम् ॥३२३॥
महाश्रियै पदं चोक्त्वा धीमहि तदनन्तरम् ।
तन्नः शव्दाच्छ्रीपदं च ततो दद्यात्प्रचोदयात् ॥३२४॥

**भुवनेश्वर्याः –**

मायावीजं समुच्चार्य भुवनेश्वर्यै च विद्महे ।
आद्यायै पदमुच्चार्य धीमहि तदनन्तरम् ॥३२५॥
तन्नो देवि पदं प्रोच्य ततो देयं प्रचोदयात् ।

**मातङ्ग्याः –**

अथ वक्ष्यामि गायत्रीं साधकस्य वरप्रदाम् ॥३२६॥

---

[1] प्रचोदयात् ... श्लो. ३२३, ३२४ (क) - इति ख.मा. न प्राप्यते ।

शुकप्रियायै विद्महे श्रीकामेश्वर्यै धीमहि ।
तन्नः श्यामा प्रचोदयात् ॥३२७॥

**धूमावत्याः-**

धूमिति बीजमुच्चार्य धूमावतीति विद्महे ।
विवर्णा देवी पदतो धीमहि पदमुद्धरेत् ॥३२८॥
धूमादेव्यास्तु गायत्री तन्नो घोरे प्रचोदयात् ।

**बगलामुख्याः-**

स्थिरमायां समुच्चार्य बगलापदतो मुखी ॥३२९॥
विद्महे दुष्टपदतः स्तम्भिनी पद्मुच्चरेत् ।
धीमहीति पदस्यान्ते तन्नो देवी प्रचोदयात् ॥३३०॥
बगलाया महेशानि गायत्रीयं प्रकीर्तिता ।

**गणेशस्य-**

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ॥३३१॥
तन्नो दन्ती पदं प्रोच्य वदेत् पश्चात्प्रचोदयात् ।

**आदित्यस्य-**

सप्ततुरङ्गाय पदात् विद्महे पदमुद्धरेत् ॥३३२॥
सहस्रकिरणं ङेन्तं धीमहि पदतः पुनः ।
तन्नो रविः पदं प्रोच्य ततो ज्ञेयं प्रचोदयात् ॥३३३॥

**नारायणस्य-**

नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥३३४॥
[१] जपित्वा चार्चयेद्देवं स्तुत्वा नत्वेष्टदेवताम्।
सूर्यमण्डलतो देवं विन्यसेद्धृदये स्वके ॥३३५॥

---

[१] **महादेवस्य-**
प्रणवं तन्महेशायै विद्महे तदनन्तरम् ।
वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात् ॥
मूलमष्टोत्तरशतम् - इति ख. मा अधिकः पाठः ।

ततो गुरुं च प्रणमेदिति सन्ध्या तु तान्त्रिकी ।
इति सन्ध्यात्रयं प्रोक्तं कर्मिणां सिद्धिदायकम् ॥३३६॥
त्रिकालमेव कर्तव्या संध्या लोपात् फलं न हि ।
संध्यालोपं न कुर्वीत कदाचिदपि कुत्रचित् ॥३३७॥
प्रात: सन्ध्या सनक्षत्रा ससूर्या शापमुच्यते ।
मुहूर्तपञ्चकादूर्ध्वं विंशत्यर्वाग्यथा यथा ॥३३८॥
आसन्नाभिजित: काल: श्रेष्ठ: श्रेष्ठस्तथा तथा ।
सन्ध्याकालस्य मुख्यस्य लोपो नाडी त्रयान्तरे ॥३३९॥
प्रायश्चित्तं त्वेकमर्घ्यमधिकं संप्रदीयते ।
परसन्ध्याकालतोऽर्वाग्गते काले ततोऽधिके ॥३४० ॥
अष्टोत्तरशतं तत्र गायत्र्या जप इष्यते ।
राज्ञा रुद्धे गदार्ते चातीवावश्यककर्मणि ॥३४१॥
प्राणायामत्रयं कृत्वा गायत्र्याष्टोत्तरं शतम् ।
यदा तु तान्त्रिको देवि तदा मूलं शतं जपेत् ॥३४२॥
प्रायश्चित्ताया तां कृत्वा कुर्वीत समयागताम् ।

**तर्पणम्–**

वैदिकं तर्पणं कृत्वा ततस्तान्त्रिकमारभेत् ॥३४३॥
प्राणायामत्रयं कृत्वा मूलेन न्यासमाचरेत् ।
ऋष्यादित्रितयस्याथ पुरतो धेनुमुद्रया ॥३४४॥
वँ जपन्नमृतीकृत्य जलं तत्र सचक्रकम् ।
मन्त्रराजं जले ध्यात्वा तत्र देवीं निधाय च ॥ ३४५॥
गुरुपङ्क्तिञ्च संतर्प्य बटुकादींश्च तर्पयेत् ।
मूलदेवीञ्च सन्तर्प्य तर्पयेत्परिवारकान् ॥३४६॥
तर्पयेद् द्वारपालादीन्तथैवाङ्गादिदेवता: ।
शेषिकां सुन्दरीं पश्चादैश्यां च परमं गुरुम् ॥३४७॥
अग्नौ परापरं चैव नैर्ऋत्यां परमेष्ठिनम् ।
वायव्यादीशपर्यन्तं गुरुपङ्क्तिं च तर्पयेत् ॥ ३४८॥

अङ्गानि तत्तत्स्थानेषु मध्ये देवीञ्च तर्पयेत् ।
मूलान्ते चामुकीं देवीं तर्पयामि ततः परम् ॥३४९॥
बह्निजायान्तको मन्त्रो देवीनां तर्पणे स्मृतः ।

**पुरुषाणाम्-**

तर्पयामि पदं योज्यं मन्त्रान्तेष्वेषु नामसु ॥३५०॥
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्मतः ।
एकविंशतिसंख्यायां दशधा वा त्रिधापि वा ॥३५१॥
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।
देवस्यामृतबुद्ध्या तु तीर्थतोयैः प्रतर्पयेत् ॥३५२॥
तीर्थोदकैस्तु पशुभिर्वामाद्यैः कारणेन तु ।
अशक्तौ मूलमुच्चार्य देवीमात्रं प्रतर्पयेत् ॥३५३॥
संस्मृत्य भैरवं देवं मार्तण्डाख्यमुमापतिम् ।
मूलेन मनुना देवं सूर्यस्य मनुनाऽथ वा ॥३५४॥
मायाबीजं समुद्धृत्य सोऽहं तु विपरीततः ।
मार्त्तण्डभैरवं ङेऽन्तं प्रकाशशक्तिसंयुतम् ॥३५५॥
सूर्यस्य मन्त्रः सम्पोक्तस्त्रिधा चार्घ्यं प्रकल्पयेत् ।
यावन्न दीयते चार्घ्यं भास्कराय निवेदनम् ॥३५६॥
तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरीम् ।
सन्तर्प्य देवं स्वहृदि तीर्थं सूर्ये विसर्जयेत् ॥३५७॥
गुरुं दिगीशाँश्च खगान्नत्वा भाण्डं करे दधत् ।
जलपूर्णं व्रजेन्मौनी स्वेष्टदेवं हृदि स्मरन् ॥३५८॥
एकान्तं निर्जनं यत्स्यान्मनोज्ञं दोषवर्जितम् ।
दिगन्तरं न वीक्षेत यावत्प्राप्नोति वै गृहम् ॥३५९॥

**इति तन्त्रचिन्तामणौ प्रातकृत्यादिनिर्णयो नामा**
**पञ्चदशः प्रकाशः**

*****

# षोडशः प्रकाशः

## सर्वधारणनित्यार्चनविधिः -

पूर्वपापस्य प्रशमनाज्जन्ममृत्युनिवारणात् ।
सम्पूर्णफलदानाच्च पूजेति कथिता प्रिये ॥१॥
प्रदक्षिणं यज्ञवाटं कृत्वा पादौ च हस्तकौ ।
प्रक्षाल्याऽऽचम्य पूजाया गृहद्वारान्तरे स्थिते ॥२॥
गेहे च द्वारदेशस्थः प्रणम्य मनसा गुरुम् ।
प्रणमेदिष्टदेवं स्वं दिक्पालानपि चेतसा ॥३॥
यत्पूर्वमर्जितं पापं तद्दिनेऽन्यदिनेऽपि वा ।
तत्पापस्यापनोदार्थं मन्त्रद्वयमुदीरयेत् ॥४॥
हे देव प्राकृतं चित्तं पापाक्रान्तमिदं मनः ।
तन्निःसारय चित्तान्मे पापं फट् १ फट् च ते नमः ॥५॥
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।
एते शुभाशुभस्येह कर्मणो २ नव साक्षिणः ॥६॥
हूँ फट् इति ब्रुवन् क्रोधदृष्ट्या पश्येच्च पार्श्वयोः ।
एवं कृते प्रथमतः पापोत्सादनकर्मणि ॥७॥
यत्स्याद्दृढतरं पापं तद्दूरे चावविष्ठतु ।
अतीते पूजने स्थानं स्वं प्रयातु पुनश्च तत् ॥८॥
यत्स्यादल्पतरं पापं ३ तन्नाशमुपगच्छति ।
पूजने त्यक्तपापस्य काममिष्टं क्षणाद् भवेत् ॥९॥
ततः प्रक्षाल्य पादौ च हस्तावाचम्य यत्नतः ।
दद्यादर्घ्यं दिनेशाय तत्प्रकार इहोच्यते ॥१०॥

---

१. हुं - इति पा. मेरौ ।
२. नृषु साक्षिका - इति पा. मेरौ ।
३. उपगच्छतु - इति पा मेरौ ।

गोमयेनोयलिप्तायां भूमौ कृत्वा तु मण्डलम् ।
सिन्दूरेण ततः पश्चादुपविश्य निजासने ॥११॥
प्राङ्मुखः प्रणमेदिष्टदेवतां भक्तितत्परः ।
प्राणायामत्रयं कृत्वा सूर्यमन्त्रेण मन्त्रवित् ॥१२॥
ह्राँ ह्रीं स इति सूर्यस्य त्र्यक्षरो मन्त्र उच्यते ।
विन्यस्य च तथेन्द्रादीन् ध्यात्वा सूर्यमनन्यधीः॥१३॥
पद्मद्वयाभयवरान् दधतं कराब्जै -
र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ।
रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्त जगतामधिपं भजामि ॥१४॥
मत्कल्पोक्तविधानेन पूजयेदुपचारकैः ।
पुरतो मण्डलं कृत्वा जलेन चतुरस्रकम् ॥१५॥
निधाय तत्र साधारं सजलं ताम्रपत्रकम् ।
गन्धपुष्पाक्षतान् दर्भान् दूर्वासर्षपसंयुतान् ॥१६॥
सतिलान्युक्तपुष्पाणि यवाँश्चापि प्रविन्यसेत् ।
सूर्यमन्त्रेण तत्पात्रं स्पृशन्नष्टोत्तरं शतम् ॥१७॥
अभिमन्त्र्य च तत्पात्रं समुत्थाय करद्वयात् ।
मूर्द्धान्तं सूर्यमन्त्रेण दद्यादर्घ्यँ विचक्षणः॥१८॥
ह्राँ ह्रीं सः सग्रहराशिनक्षत्रपदमुच्चरेत् ।
ततश्च योगकरणपरिवृत्तासनेति च ॥१९॥
संस्थितःश्रीसूर्यायैष तेऽर्घः स्वाहा मनुः स्मृतः ।
चतुस्त्रिंशदक्षरोऽयं सूर्यस्यार्घनिवेदने ॥२०॥
जपेत्ततो [1] यथाशक्त्या सूर्यमन्त्रमनन्यधीः।
तदर्घाम्बुप्लुतं सूर्यं ध्यायन्देशिकसत्तमः ॥२१॥

---

1. यथाशक्ति - इति पा. उचितः ।

स्तुत्वा प्रणम्य विसृजेन्मण्डलान्तं दिवाकरम् ।
तत उत्थाय विधिवद् द्वारपूजां समारभेत् ॥२२॥
द्वारमर्घाम्बुना प्रोक्ष्य तन्मध्ये विघ्नपं यजेत् ।
तद्दक्षिणे महालक्ष्मीं वामे चापि सरस्वतीम् ॥२३॥
द्वारश्रियं च तन्मध्ये शाखयोर्दक्षिणान्ययोः ।
[1] ऊर्ध्वभागात्तलं यावत्पञ्चपञ्चविभागके ॥२४॥
[2] नामस्याद्यक्षरं बिन्दुयुक्तं नाम च ङेऽन्तकम् ।
समुच्चार्य हृदन्तं च देवानेतान्प्रपूजयेत् ॥२५॥
गणपतिं क्षेत्रपालं ततश्च वसुधारया ।
युक्तं शङ्खनिधिं दक्षे वामे वसुमतीयुतम् ॥२६॥
पूजयित्वा पद्मनिधिं तदधो दक्षवामतः ।
मायाशक्तिं च चिच्छक्तिं गङ्गाञ्च यमुनान्तथा ॥२७॥
धातारं च[3] विधातारं दं देहल्यै नमस्त्वधः ।
आदौ तु पश्चिमद्वारपूजा चेयं प्रकाशिता ॥२८॥
[4] नन्दिनञ्च महाकालीं द्वारयोर्दक्षवामयोः ।
संपूज्यैवमुदग्द्वारं प्राग्याम्ये च प्रपूजयेत् ॥२९॥
द्वारपालौ क्रमात्तेषु गणेशवृषभावपि ।
भृङ्गिरीटी तथा स्कन्द उमाचण्डेश्वरौ तथा ॥३०॥
विष्णोर्नन्दः सुनन्दश्च चण्डश्चापि प्रचण्डकः ।
वलश्च प्रवलश्चैव भद्रश्चापि सुभद्रकः ॥३१॥
वक्रतुण्डैकदँष्ट्रौ च महोदरगजाननौ ।
लम्बोदरश्च विकटो गणेशद्वारपालकाः ॥३२॥

---

[1] ऊर्ध्वभागो वरम् - इति पा. मेरौ ।
[2] नाम्नश्चाद्यक्षरम् - इति पाठ उचितः ।
[3] हृच्छक्तिम्- इति पा. मेरौ ।
[4] नन्दी चापि महाकालो - इति पा. मेरौ ।

विघ्नराजो धूम्रवर्णः क्रमात्पश्चिमद्वारतः ।
१. देव्याः सूर्यस्य योगिन्योऽष्टावेता द्वारपालकाः ॥३३॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह ॥३४॥
अथ वक्ष्ये द्वारदेवध्यानं तन्त्रेषु गोपितम् ।
देवद्वारं द्वारदेवाः स्वयमुद्घाटयन्ति यत् ॥३५॥
पाशाङ्कुशफलाम्भोजपाणिं २. पाटलतुन्दिलम् ।
वीरं विघ्नेश्वरं वन्दे गजवक्त्रं त्रिलोचनम् ॥३६॥
पद्मद्वयवराभीतिलसत्पाणिचतुष्टयाम् ।
निर्दग्धहेमगौराङ्गीं महालक्ष्मीं त्रिलोचनाम् ॥३७॥
अक्षस्रक्पुस्तकाभीतिवरहस्तां त्रिलोचनाम् ।
श्वेतपद्मासनां शुक्लां श्वेतवस्त्रां सरस्वतीम् ॥३८॥
तप्तकार्तस्वराभासा दिव्यरत्नविभूषिता ।
द्वारश्रीरूर्ध्वपद्मस्था वराभयकराम्बुजा ॥३९॥
सितो गजास्यः परशुं दण्डं पाशं त्रिशूलकम् ।
भुजैश्चतुर्भिर्बिभ्राणो मूषकोपरि संस्थितः ॥४०॥
कपालशूले बिभ्राणं कृपालुं कृष्णविग्रहम् ।
त्र्यक्षं तीक्ष्णं भावयामि क्षेत्रेशं ३. क्षतविद्विषम् ॥४१॥
बसुधारां ४. दक्षभुजेनालिङ्गन्तं सुतुन्दिलम् ।
वामे शङ्खधरं मुक्तानिभं शङ्खनिधिं भजे ॥४२॥
आलिङ्गन्तं वसुमतीं ललाटे पद्मचिह्नितम् ।
पद्मनिधिं मणिनिभं वामेनोत्पलधारिणम् ॥४३॥

---

१. देव्याश्चैव तु - इति पा. मेरौ ।
२. पर्णपाणिं च तुन्दिलम् - इति पा. मेरौ ।
३. क्षेत्रनायकम् - इति पाठः मेरौ ।
४. दक्षभुजेनालिङ्ग्य तु सुमण्डितम् - इति पा. मेरौ ।

वराङ्कुशाभीतिपाशहस्तां संसारमूलिकाम् ।
त्रिनेत्रां श्यामवर्णान्तां श्यामां मायामहं भजे ॥४४॥
पाशाङ्कुशवराभीतिं दधानामरुणप्रभाम् ।
त्रिनेत्रां चित्कलां वन्दे गौरीं रक्ताम्बरोज्ज्वलाम् ॥४५॥
वराभयकरां सौभ्यां सोमकोटिसमप्रभाम् ।
भजे गङ्गां महादेवीं परां देवतरङ्गिणीम् ॥४६॥
वराभयकरां वन्दे कालिन्दीं कालविग्रहाम् ।
कृष्णकच्छपमारूढां कण्ठे नीलोत्पलप्रभाम् ॥४७॥
कर्तारं जगतां वन्दे शङ्खचक्रगदाम्बुजम् ।
बिभ्राणं गरुडारूढं धातारं कृष्णविग्रहम् ॥४८॥
रक्तं रक्तारविन्दस्थं वराभयकमण्डलुम् ।
हसारूढं विधातारं वन्दे त्र्यक्षसमन्वितम् ॥४९॥
सिंहारूढां श्यामवर्णां खड्गखेटकधारिणीम् ।
अधस्थां देहलीं वन्दे पाश्चिमास्यां सुदक्षिणाम् ॥५०॥
पश्चिमद्वारमासाद्य तालत्रितयपूर्वकम् ।
द्वारमुद्घाट्य चास्त्रेण मन्त्रितान् सर्षपाक्षतान् ॥५१॥
पुष्पयुक्ताँस्तु विकिरेन्मण्डपाभ्यन्तरे बुधः।
नाराचमुद्रया सम्यगस्त्रमन्त्रेण देशिकः ॥५२॥
अपक्रामन्तु भूतानि पिशाचाः [1] प्रेतगुह्यकाः ।
ये चात्र निवसन्त्यन्ये देवता भुवि संस्थिताः ॥५३॥
अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥५४॥
श्लोकयोरन्ततश्चास्त्रं पठन्नाराचमुद्रया ।
क्षिप्त्वा तान्मण्डपस्यान्तं ततो विघ्नाँस्तु निर्गतान् ॥५५॥

---

1. सर्वतोदिशम् - इति पा. भेरौ ।

स्ववामाङ्गस्य सङ्कोचान्मार्गं दत्त्वाऽपसारयेत् ।
अस्त्रमन्त्रं स्मरन् वामपार्ष्णिघातत्रयेण च ॥५६॥
भौमानुत्सादयेत्तालत्रितयेनान्तरिक्षगान् ।
तिर्यग्दृष्ट्याऽवलोकेन दिव्यान्विघ्नान्निवारयेत् ॥५७॥
दक्षपादं पुरस्कृत्य प्रविशेद्देवमन्दिरम् ।
शाक्तस्तु वामपादेन द्वारमाच्छाद्य वाससा ॥५८॥
पञ्चगव्यार्घतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् ।
संमार्जनोपलेपाद्यैर्दर्पणोदरवत्कृतम् ॥५९॥
विमलं धूपदीपादिपुष्पदामादिशोभितम् ।
पञ्चवर्णरजश्चित्रं स्थानशुद्धिरियं मता ॥६०॥
नैर्ऋत्यामर्चयेद्वास्तुपुरुषं चन्दनादिभिः ।
तत्रैव १. वास्त्वधीशाय ब्रह्मणे नम इत्यपि ॥६१॥
रक्तवर्णं रक्तवर्णशक्तिद्वादशसंयुतम् ।
पूजयित्वा दीपनाथं भैरवं प्रार्थयेदिति ॥६२॥
अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥६३॥
२. अः फडिति च मन्त्रेण पूजावेदीं ततो विशेत् ।
संस्कुर्यादासनस्थानं चतुर्भिर्वीक्षणादिभिः ॥६४॥
संस्कारे तत्र सम्पूज्या वेद्यन्ताः पीठदेवताः ।
आधारशक्तिमारभ्य स्वासनं तत्र विन्यसेत् ॥६५॥
पूजासनमथात्मीयं चैलाजिनकुशोत्तरम् ।
कम्बले लोहिते वाऽपि कृष्णे वा व्याघ्रचर्मणि ॥६६॥
सन्यासी ब्रह्मचारी तु विशेत्कृष्णस्य चर्मणि ।
व्याघ्राजिनं सर्वसिद्ध्यै ज्ञानसिद्धिर्मृगाजिने ॥६७ ॥

---

१. वास्त्वधीशं च - इति पा. मेरौ ।
२. ॐ इति - इति पा. मेरौ ।

वस्त्रासनं रोगहरं वेत्रजं प्रीतिवर्धनम् ।
कौशेयं पुष्टिदं प्रोक्तं कम्बलं सर्वसिद्धिदम् ॥६८॥
शुक्लं वा यदि वा कृष्णं विशेषाद्रक्तकम्बलम् ।
श्वेते तु कम्बले धर्मसिद्धी रक्तोऽर्थसिद्धिदः ॥६९॥
पीते कामो द्विजान्येषां मोक्षदः कृष्णकम्बलः ।
दुःखमुक्त्यै रञ्जितस्तु नीलीरङ्गो न शोभनः ॥७०॥

**निषिद्धासनम्-**

तृणपल्लवकाष्ठानि पाषाणं मृण्मयन्तथा ।
वंशासनं च वस्त्रं च केवलं क्षितिमासनम् ॥७१॥
एवमष्टविधं देवि चासनं परिवर्जयेत् ।
तत्रोपविश्य विधिवत्स्मरेद्विष्णुं गुरुं मुदा ॥७२॥
मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ।
पृथिवी देवता प्रोक्ता विनियोगो निजासने ॥७३॥
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥७४॥
आसनस्य चतुष्कोणे गणेशं च सरस्वतीम् ।
दुर्गां क्षेत्रपतिं चापि वह्न्यादिषु समर्चयेत् ॥७५॥
उदङ्मुखः प्राङ्मुखो वा स्वस्तिकासनमास्थितः ।
पद्मासनगतो वाऽपि ऋजुकायो मनःस्थिरः ॥७६॥

**स्वस्तिकपद्मासनयोर्लक्षणम्-**

जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायस्समासीनः स्वस्तिकं तदुदीरयेत् ॥७७॥
वामोरूपरि दक्षिणं तु चरणं संस्थाप्य वामं तथा
यास्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेत्
एतद् व्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते ॥७८॥
स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि चात्मनः ।
सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम् ॥७९॥

प्रक्षालनाय करयोः पात्रं पृष्ठे निवेशयेत् ।
घृतादिज्वलितान्दीपान् स्थापयेत्परितः शुभान् ॥८०॥
दर्पणं चामरं छत्रं तालवृन्तं च पादुकाम् ।
यथायथं तु संस्थाप्य संस्कुर्यात्तानि चात्मवान् ॥८१॥
पुष्पनैवेद्यगन्धादीन्हाँ हूँ फडिति मन्त्रतः ।
नाराचमुद्रया दृष्ट्या सदयं च विलोकयेत् ॥८२॥
दृष्टं वा चात्मविज्ञानं सम्यक् पुष्पादिदूषणम् ।
अस्पृश्यस्पर्शनं वाऽपि यदन्यायार्जितं च वा ॥८३॥
तथा निर्माल्यसंस्पृष्टं कीटाद्यारोहणं च यत् ।
तत्सर्वं नाशमायाति नैवेद्याद्यवलोकनात् ॥८४॥
ततो रमिति मन्त्रेण शिखां दीपस्य संस्पृशेत् ।
स तु स्याच्छुभदो दीपो निष्क्रव्यादः सुखप्रदः ॥८५॥
पतङ्गकीटकेशादिदाहात्क्रव्यादसंहतेः ।
वसामज्जादिसंभूतैर्घृताद्यैरुपयोजितः ॥८६॥
अज्ञानरूपं तत्सर्वं दोषं स्पर्शाद्विनश्यति ।
१. क्ष्रौं बीजमुच्चरेन्मन्त्री देवतीर्थेन संस्पृशेत् ॥८७॥
पानीयं घटमध्यस्थं दृष्ट्वा सम्यक् च साधकः ।
वामेन पाणिना धृत्वा वामपार्श्वस्थितं घटम् ॥८८॥
पात्राधारणमन्त्रेण संस्कुर्वन्संस्पृशेज्जलम् ।
स्वसंज्ञाद्यक्षरं बिन्दुचन्द्रार्धपरियोजितम् ॥८९॥
तत्पात्रनाम ङेन्तं च हृदन्तःपात्रमन्त्रकः ।
यदज्ञानादमेध्यादिसंसृष्टिरिह संगता ॥९०॥
यदन्यद्दूषणं पात्रे तोये चाज्ञानतो भवेत् ।
जलाशयशवस्पर्शाज्जलस्थानाच्च संगतम् ॥९१॥

---

१. क्ष्रौं- इति ख.मा. पाठः, क्ष्रौम - इति भैरो पाठः ।

इत्यादि दूषणं नश्येत्तत्प्रिये देवपूजने ।
ततः कृताञ्जलिपुटो वामदक्षिणपार्श्वयोः ॥९२॥
गुरुं गणपतिं नत्वा पुरतः स्वेष्टदेवताम् ।
सुगन्धपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ॥९३॥
[१] हसौं मन्त्रेण करयोरस्त्रमन्त्रेण मर्दयेत् ।
तत्पुष्पं वामहस्तेन समादाय च मस्तकम् ॥९४॥
भ्रामयेत्परितस्तारं जपन्नाघ्राय तत्पुनः।
[२] हौं हुं पूर्वं पठेत् श्लोकमिमं स च निगद्यते ॥९५॥
[३] ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ।
मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥९६॥
अस्त्रमन्त्रेण नाराचमुद्रयेशदिशि त्यजेत् ।
करशुद्धिं ततोऽस्त्रेण कुर्यात्तालत्रयं ततः ॥९७॥
ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि तेन च ।
[४] तेन संजनितं तेजो बह्निप्राकारमुद्रया ॥९८॥
रक्षेदात्मनि मूलेन प्राणायामत्रयं चरेत् ।
भूतशुद्धिं ततः कुर्यात्तत्प्रकारमथ ब्रुवे ॥९९॥
पादतो जानुपर्यन्तं चतुरस्रं [५] सवज्रकम् ।
लं-युतं पीतवर्णं च भूस्थानं ब्रह्मदैवतम् ॥१००॥
अधिष्ठितं निवृत्त्याख्यकलया स्थानमुच्यते ।
[६] उत्पत्तेस्तत्तु जीवानामेकं रूपं विचिन्तयेत् ॥१०१॥
[७] जान्वोरोर्नाभिपर्यन्तमपां स्थानं सितप्रभम् ।
अर्धचन्द्रनिभं शृङ्गद्वयं तत्पत्रलाञ्छितम् ॥१०२॥

---

[१] हौं मन्त्रेणाय - इति मेरौ पाठः
[२] सौं हुं पूर्वं पठेत् श्लोकमिमं साधकसत्तमः - इति मेरौ पाठः ।
[३] सर्वत्र - इति पाठः मेरौ ।
[४] सम्पतितम् - इति पा. मेरौ ।
[५] सचक्रकम् - इति मेरौ पाठः ।
[६] समुत्पत्तेस्तु - इति मेरौ पाठः ।
[७] जान्वोरानाभिपर्यन्तम् - इति मेरौ पाठः।

षट्कोणं विन्दुभि: षड्भिर्युक्तं वं बीजसंयुतम् ।
प्रतिष्ठाकलया युक्तं ध्यायेत्तद्विष्णुदैवतम् ॥१०३॥
नाभ्यादिकण्ठपर्यन्तमारक्तं रुद्रदैवतम् ।
रं-बीजयुक्तं कलया युतं विद्याख्यया तथा ॥१०४॥
दीप्तिमत्स्वस्तिकोपेतं त्रिकोणाकारतां गतम् ।
[1] महाप्रलयसंस्थानं वह्नितत्त्वं विचिन्तयेत् ॥१०५॥
कण्ठाद् भ्रूमध्यपर्यन्तं षट्कोणाकारतां गतम् ।
षड्बिन्दुलाञ्छितं वृत्तवेष्टितं कृष्णवर्णकम् ॥१०६॥
वायुस्थानं शान्तिकलाधिष्ठितं शिवदैवतम् ।
[2] यं बीजयुक्तं सर्वेषां प्राणरूपं विचिन्तयेत् ॥१०७॥
भ्रूमध्याद् ब्रह्मरन्ध्रान्तमाकाशस्थानमुच्यते ।
वृत्ताकारं धूम्रवर्णं महोच्चध्वजलाञ्छितम् ॥१०८॥
शान्त्यतीताख्यकलयाधिष्ठितं शिवदैवतम् ।
हंवीजयुक्तं ध्यात्वेत्थं देहे भूतानि विन्यसेत् ॥१०९॥
धर्मकन्दसमुद्भूतं ज्ञाननालसुशोभितम् ।
कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकानिभम् ॥११०॥
सुषुम्णावर्त्मना जीवं परमात्मनि योजयेत् ।
योगयुक्तेन विधिना सोऽहं मन्त्रेण साधकः ॥१११॥
तत्रैव सर्वभूतानि विलीनानि विचिन्तयेत् ।
शरीरे वामकुक्षौ तु चिन्तयेत्पापपूरुषम् ॥११२॥
वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभभ् ।
ब्रह्महत्याशिरःस्कन्धं स्वर्णस्तेयभुजद्वयम् ॥११३॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥११४॥

---

[1] महाप्रलयवत्स्थानम् - इति पा. मेरौ ।
[2] यं बीजरूपं ध्यात्वेत्थम् - इति पा मेरौ ।

उपपादकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं क्रूरं [1] रुक्षं पापं विचिन्तयेत् ॥११५॥
शैवे शाक्ते क्रमेणैव पापरूपं स्मरेच्छिवे ।
शैवे दक्षक्रमेणैव शाक्ते वामक्रमेण च ॥११६॥
वैष्णवे तद्द्वयत्वेन पापध्यानं प्रकीर्तितम् ।
तथा संशोधयेदेनं पूरकादिक्रमेण वै ॥११७॥
नाभिदेशे च ह्यङ्गारधूम्रं वायुं विचिन्तयेत् ।
तेन वै शोधयेल्लिङ्गं तनुं षोडश मात्रया ॥११८॥
कर्मात्मकं चतुःषष्ट्या कुम्भयित्वा समाचरेत् ।
द्वात्रिंशन्मात्रया दक्षे रेचनं तेन वा पुनः ॥११९॥
रक्तवर्णं बह्निबीजं मेढ्रमूले विचिन्तयेत् ।
मलासनात्मकं लिङ्गं शरीरं तेन दाहयेत् ॥१२०॥
पूर्वोक्तक्रमयोगेन दक्षनासाक्रमेण तु ।
देशिकस्तु समा संख्या रेचयेद् वामनासया ॥१२१॥
वंकारं वारुणीबीजं घण्टिकायां विभाव्य च ।
तेनामृतं समुत्पाद्य सहस्रदलपङ्कजात् ॥१२२॥
प्लावयेत्पूरकादीनि कृत्वा पादतलावधि ।
लंकारं पृथिवीबीजं गुदमूले विभावयेत् ॥१२३॥
तेनैव क्रमयोगेन धिया संप्लावयेद् बुधः ।
पापपुण्यविनिर्मुक्तं शरीरं शाम्भवं परम् ॥१२४॥
तेनैव पूर्वमार्गेण सर्वं सम्पादयेत्तनु ।
सञ्जाते सकले देहे [2] देवतोपासने क्षमः ॥१२५॥
आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत्ततः ।
आत्मानं हृदयाम्भोजमानयेत्परमात्मनः ॥१२६॥
हंसमन्त्रेण विधिवत्तेजोरूपं कलेवरम् ।

---

[1] रुष्टे - इति पा. मेरौ ।

[2] देवतोपासनक्षमे - इति पा. मेरौ ।

देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् ॥१२७॥
तस्यादिष्टस्वरूपत्वं स्वस्मिन् भाव्यं महेश्वरि।
देवताऽराधनायोग्यमुत्पन्नमिति भावयेत्। १२८॥
भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत्
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥१२९॥
भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत्।
प्राणप्रतिष्ठामन्त्रस्य मुनयोऽजेशपद्मजाः ॥१३०॥
[1] छन्दो ऋग्यजुषी साम प्राणशक्तिस्तु देवता।
ऋषिः शिरसि वक्त्रे तु छन्दांसि हृदि देवता ॥१३१॥
आँ बीजाय नमो गुह्ये पदे ह्रीं शक्तये नमः।
नाभौ नमः क्रों कीलकाय नियोगोऽसुस्थिताविति ॥१३२॥
ॐ आँ-ह्रीं क्रौं अँ कवर्गं सानुस्वारं [2] नभोमुखम्।
पञ्चतत्त्वं समुच्चार्य [3] आत्मने आँ हृदि न्यसेत् ॥१३३॥
ॐ आँ ह्रीं क्रौं इँ चवर्गं तद्वच्छब्दादिकं तथा।
[4]आत्मने ईं समुच्चार्य शिरसे बह्निगेहिनी ॥१३४॥
तानि बीजानि उँ तादृक् टवर्गं श्रोत्रकादि च।
प्रोक्त्वा तदात्मने [5] ऊँ च शिखायै च वषड् वदेत् ॥१३५॥
तानि बीजानि एँ तुं च वागादीनि तदात्मने।
ऐमुक्त्वा कवचायेति हुँ वदेत्तदनन्तरम् ॥१३६॥
चतुर्बीजं च पूर्वोक्तं ओं पवर्गं च तादृशम्।
[6] वचनादि च तद्वत्स्यादों नेत्राय वौषट् तथा ॥१३७॥
चतुर्बीजं च अं तादृग्यवर्गं मन आदि च।

---

1. ऋग्यजुःसामछन्दांसि - इति पा. मेरौ।
2. हृदि - इति पा. मेरौ।
3. दीर्घाकारं तथैव च - इति पा. मेरौ।
4. हञ्चवर्गञ्च शब्दादि शिरसे बह्निगेहिनी - इति पा. मेरौ।
5. तत्र - इति पा. मेरौ।
6. वाण्याद्यात्मन औं नेत्राय वौषट् च तथा वदेत् - इति पा. मेरौ।

तदात्मने स्वरश्चान्त्योऽस्त्राय फट् चेति संवदेत् ॥१३८॥

अङ्गुष्ठादौ हस्ततलान्तं न्यसेदेवमेव हि ।

नाभ्यधश्चापि कण्ठाधो मूर्द्धाधोऽथ तदन्तकम् ॥१३९॥

आँ ह्रीं क्रों क्रमतो न्यस्य हृत्पद्माष्टदलेषु च ।

पूर्वतः क्रमतो वर्णान्कर्णिकायां हृदन्तकान् ॥१४०॥

लँ रँ हँ षँ वँ च यँ च सँ शँ क्षमिति वर्गतः ।

दिक्षु न्यसेत्ततो ध्यायेत्प्राणशक्तिं हृदि स्थिताम् ॥१४१॥

१. रक्ताङ्घ्रिमत्ताऽरुणपद्मसंस्थाम्

२. पाशाङ्कुशाविक्षुशरासनं च ।

शूलं कपालं दधतीं कराब्जै

रक्तां त्रिनेत्रां प्रणमामि देवीम् ॥१४२॥

हस्तं निधाय हृदये प्राग्बीजं यादिकाष्टकम् ।

हंसः सोऽहं मम प्राणा वदेदिह ३. स्थिता इति ॥१४३॥

प्रोक्त्वा तथैव च पुनर्मम जीव इह स्थितः ।

पुनस्तदुक्त्वा मम तु वदेत्सर्वेन्द्रियाणि च ॥१४४॥

पुनस्तथोक्त्वा मम तु वाङ्मनश्चक्षुरुच्चरेत् ।

४. श्रोत्र घ्राण इहागत्य सुखं मम चिरन्ततः ॥१४५॥

तिष्ठन्तु बह्निजायान्तमुक्त्वा तारं ततो जयेत् ।

वपुर्ज्योतिर्मयं ध्यायेदिति स्यात्प्राणसंस्थितिः ॥१४६॥

**प्राणायामः –**

प्राणायामास्त्रिधा प्रोक्तास्तान्त्रवैदिकयौगिकाः ५

६. मन्त्रसिद्धिः पापनाशो योगसिद्धिःफलं क्रमात् ॥१४७॥

---

१. रक्ताब्धिपोताऽरुण - इति पाठः मेरौ ।

२. पाशाङ्कुशेष्वासवशासिवाणान् - इति पा. मेरौ ।

३. द्विरुक्तितः - इति पा. मेरौ ।

४. श्रोत्रं घ्राणः प्राणः - इति पा. मेरौ ।

५. यौक्तिकाः - इति पा. मेरौ ।

६. संसिद्धिः पापनाशाय - इति पा. मेरौ ।

मातृकाख्यश्च मन्त्राख्यस्तान्त्रिको द्विविधो मतः ।
मातृकाख्यो जपस्यादौ जपान्ते च कृतो यदि ॥१४८॥
वर्णव्यत्यासादिदोषानशेषान् हन्ति तं शृणु ।
वामया पूरयेद्वायुं स्वरैः काद्यैश्च [1] कुम्भकम् ॥१४९॥
रेचयेद्यादिभिर्दक्षनासायां मातृकादिभिः ।
यावच्छक्यं नियम्यासुं मनसैव मनुं जपेत् ॥१५०॥
कनिष्ठानामिकाङ्गुष्ठैर्नासां धृत्वा तु मान्त्रिकः ।
[2] प्राणायामस्त्वयं प्रोक्तो यदन्यन्मनसाकृतम् ॥१५१॥
जपपूजादिकं तस्य दोषमेव व्यपोहति ।
गायत्रीं शिरसा सार्द्धं सप्तव्याहृतिपूर्विकाम् ॥१५२॥
प्रतिप्रणवसंयुक्तां [3] त्रिरयं वैदिको मतः ।
मध्यमूलाद्यावदग्रमङ्गुष्ठेन निपीड्यते ॥१५३॥
मात्रा सा प्रोच्यते सद्भिर्योगेऽभीष्टं प्रयच्छति ।
जानुं प्रदक्षिणीकुर्याद्यावत्कालेन हस्तकः ॥१५४॥
तावत्कालमिता मात्रा स्वनिःश्वाससमाऽपि च ।
जघन्यो रविमात्रः स्याज्जिनमात्रस्तु मध्यमः ॥१५५॥
श्रेष्ठः षड्वर्गमात्रोऽयं योगत्रयसुसाधकः ।
केवले कुम्भके सिद्धे सिद्धिः स्याद्राजयोगजा ॥१५६॥
वीर्यस्तम्भश्च बह्वायुर्वलीपलितनाशनम् ।
पूरके कुम्भके सिद्धे क्रियायोगस्य सिद्धयः ॥१५७॥
[4] पूर्वोक्तञ्च न शीतोष्णबाधा क्षुत्तृड्भवाऽपि च ।
पूरकः कुम्भको [5] रेको यदा तुल्यः प्रजायते ॥१५८॥

---

१. कुम्भकं - इति पा. मेरौ ।
२. प्राणायामत्रयं प्रोक्तम् - इति पा. मेरौ ।
३. त्रिर्जपेत्स इहोत्तमः - इति पा. मेरौ ।
४. पूर्वोक्ता च - इति पाठ उचितः ।
५. रेचो - इति पा. मेरौ ।

हठयोगस्तदा सिद्धो ह्यणिमाद्यष्टसिद्धये ।
ईषत्फलं जघन्ये तु मध्ये मध्यं परेऽखिलम् ॥१५९॥
निरन्तराब्दत्रितयाभ्यासात्सर्वं भवेत्फलम् ।
प्राणायामत्रयं कृत्वा मातृकान्यासमाचरेत् ॥१६०॥
ऋषिर्गुरुत्वाच्छिरसि वर्णत्वाच्छन्दसो मुखे [1] ।
धारणं प्रोच्यते चित्ते ज्ञेयाप्ताद्देवता हृदि ॥१६१॥
ऋगताविति धातोस्तु ऋवर्णः प्रापको मतः ।
[2] षिवर्णार्थस्तु विज्ञानमतस्तत्प्रापकस्तु सः ॥१६२॥
छदीतिधातुरिच्छायां [3] दादिर्दानार्थको भवेत् ।
[4] अत इच्छाप्रदं च्छन्दो [5] विशेषाद् गणवर्णतः ॥१६३॥
क्रीडार्थकाद् [6] दिवोधातोः सम्पूर्ण देवतापदम् ।
[7] साधकाय ददातीति देवता परिकीर्तिता ॥१६४॥
[8] रज्यमानो हृदात्मायं हृदयेऽस्ति चिदात्मकः ।
तस्मात्तत्र नमस्कुर्यान्मुख्याङ्गुष्ठेन संस्पृशेत् ॥१६५॥
स्वाहया क्रियते सम्यग्विषयाहरणं [9] यतः ।
[10] अनामातर्जनीभ्यान्तैराकृष्टैः के निषिच्यते ॥१६६॥
[11] शेषामहो वषट् चाङ्गं शिखयात्मतनुग्रहः ।
यस्मात्तस्माद्वषडिति क्रियतेऽङ्गुलिमध्यया ॥१६७॥

---

१. च्छन्द आनने - इति पा. भेरौ ।
२. षणार्थस्तु - इति पा. भेरौ ।
३. अत्र यस्मात्प्रवर्तते - इति पा. भेरौ ।
४. मुखम् - इति पा. भेरौ ।
५. मन्त्रार्थच्छादनात्तु वा - इति पा. भेरौ ।
६. दिविर्धातुः - इति पा. भेरौ ।
७. साधकेष्टं ददातीति - इति पा. भेरौ ।
८. रज्यमाणो यदात्मीय - इति पा. भेरौ ।
९. विष्टपाहरणम् - इति पा. भेरौ ।
१० अनामातर्जनीभ्यां सा चाकृष्टाभ्यामिहेष्यते - इति पा. भेरौ ।
११. शिखा वषट् पदं यच्च - इति पा. भेरौ ।

[1] ग्रहणार्थं तु कवचं धूमहस्तेन गृह्यते ।
शरीरतस्तु कवचं तर्जन्यानामया तु तत् ॥१६८॥
यथार्थज्ञानकृद् वौषट् तन्नेत्राभ्यां प्रजायते ।
तस्मादुक्तं तत्र वौषट् तर्जन्याद्यैस्तु तत्स्मृतम् ॥१६९॥
[2] एकाक्षरात्कुबेरादिदैवते ङेऽन्तमुच्चरेत् ।
भ्यान्तं विष्ण्वादिके रुद्रादौ तु नेत्रत्रयात्मकम् ॥१७०॥
आध्यात्मिकादिरूपं यत्साधकस्य [3] विनाशयेत् ।
अविद्याजातमस्त्रं तत् फट्काराभ्यां प्रपञ्च्यते ॥१७१॥
प्राणायामं मातृकायाः कृत्वा न्यासान् समाचरेत् ।
तत्रैकविंशतिः प्रोक्ताः कामनाभेदतोऽपि च ॥१७२॥
अधिकारिविभेदेन नित्यत्वेनापि केचन ।
देवताभेदतो वाऽपि तद्रहस्यं निरूप्यते ॥१७३॥
पुरुषे दैवते नित्या केवलस्वरमातृका ।
यन्न्यासा [4] ब्रह्मचर्याद्याःधर्माः सिध्यन्ति साधके ॥१७४॥
ऋषिर्ब्रह्मा देवता तु मातृकाख्या सरस्वती ।
हलो बीजानि गायत्री च्छन्दः शक्तिः स्वरा मताः ॥१७५॥
व्यक्तिः कीलकमुद्दिष्टं नियोगोऽभीष्टसिद्धये ।
दक्षकरतले तस्य पृष्ठे च करभे तथा ॥१७६॥
अङ्गुष्ठादिष्वथो वामे विपर्यासेन विन्यसेत् ।
बिन्दुयुक्तान्क्रमेणैव स्वरान्न्यासोऽयमादिमः ॥१७७॥
[5] अयं व्यत्यासतो न्यासः संहारन्यास उच्यते ।
पापशत्रुक्षयाद्यर्थं [6] कर्मण्यादौ समाचरेत् ॥१७८॥

---

[1] ग्रहणार्थः कवचधातुः हुं हस्तेन गृह्यते - इति पा. मेरौ ।
[2] एकाक्षत्वात् कुबेरादिदेवेष्वेकं समुच्चरेत् - इति पा. मेरौ ।
[3] विनीयते - इति पा. मेरौ ।
[4] यन्यासादुग्रचर्याद्या - इति पा. मेरौ ।
[5] अयं चेन्न्यासतो वामः - इति पा. मेरौ ।
[6] क्रमेणादौ - इति पा. मेरौ ।

सविसर्गैः स्वरैर्यस्तु केवलं न्यासवत्कृतः ।
सृष्टिन्यासः प्रयोगादौ कर्तव्यस्तस्य सिद्धये ॥१७९॥
वामात्करतलात्तस्य कनिष्ठान्तं प्रविन्यसेत् ।
अष्टौ स्वराँल्लृकारादींस्तथा दक्षतलादपि ॥१८०॥
अकाराद्यान्विन्दुसर्गयुक्तान्न्यासोऽयमीरितः ।
स्थित्याख्यो मुनिदेवादिः प्राग्वत्कार्यस्थितावयम् ॥१८१॥
ककारादिणकारान्तान्वर्णान् पञ्चदशैव हि ।
अङ्गुष्ठादिकनिष्ठान्तं दक्षहस्तस्य पर्वसु ॥१८२॥
न्यसेद्बिन्दुयुतान्सर्वान्वामेऽप्येवं तु तादिकान् ।
अङ्गुष्ठादिकनिष्ठान्तं हस्तयुग्मेऽपि विन्यसेत् ॥१८३॥
युगपत्पादिकान् पञ्च [1] ब्रूयाद्वर्णान्नमोन्तकान् ।
तत्तत्स्थाने करं दत्त्वा करशुद्धिकरस्त्वयम् ॥१८४॥
अँ आँ मध्ये क- वर्गः स्यादिं ईं मध्ये चवर्गकः ।
उँ ऊँ मध्ये टवर्गस्तु ऐ ऐं मध्ये तवर्गकः ॥१८५॥
औँ औँ मध्ये पवर्गःस्यादं अः मध्ये तु यादिकाः ।
एभिः सविन्दुकैरङ्गुल्यादिन्यासो हृदादिकः ॥१८६॥
कर्तव्योऽप्यस्य ऋष्यादिविनियोगोऽस्य सिद्धये ।
[2] षडङ्गशुद्धे क्रोधादिजातपापनिवृत्तये ॥१८७॥
[3]तालत्रयं च दिग्वन्धं प्रकुर्यादस्त्रमन्त्रतः ।
ततो ध्यायेद्वर्णपद्मं श्वेतं स्वशिरसि स्थितम् ॥१८८॥
[4]कर्णिकायां निजं मन्त्रं संस्मरेत्केशराष्टकम् ।
स्वरयुग्मं तथा पत्रेष्वष्टस्वपि च कादिकान् ॥१८९॥
सप्तवर्गानष्टमे तु [5] लक्षावेवं विचिन्तयेत् ।

---

1. नमोन्तकम् - इति पा. अन्यत्र ।
2. षडङ्गशुद्धयै - इति पा. मेरौ ।
3. तालत्रयेण - इति पा. मेरौ ।
4. कर्णिकाया - इति पा. मेरौ ।
5. लक्षमेवम् - इति पा. मेरौ ।

एवं चिन्तयतो रोगो ह्यपमृत्युर्विनश्यति ॥१९०॥
अथान्तर्मातृकान्यासं वक्ष्येऽन्तःशुद्धिकारकम् ।
यं कृत्वा योगिनां चित्तं पातके न प्रवर्त्तते ॥१९१॥
मूलाधारे ध्वनिं श्रुत्वा प्रबुद्धा शक्तिकुण्डली ।
ज्वलत्पावकसंकाशा सूक्ष्मतेजःस्वरूपिणी ॥१९२॥
मूलाधाराच्छिरःपद्मं स्पृशन्ती विद्युदाकृतिः ।
यया स्पृष्टशिरःपद्मादमृतौघस्वरूपिणः ॥१९३॥
निर्गतान्मातृकावर्णान् सुषुम्णावर्त्मना तनुम् ।
स्थापयित्वा स्थितानेतानेवं ध्यात्वा प्रविन्यसेत् ॥१९४॥
कण्ठे विशुद्धिचक्राख्यं पद्मं षोडशपत्रकम् ।
ऊर्ध्वास्यं प्राग्दलात्तत्र संस्थिताः षोडश स्वराः॥१९५॥
एवं संचिन्त्य तारादिबिन्दुयुक्तं नमोन्तकम् ।
वदेत्स्वरञ्च सर्वेषु वर्णेष्वेषाऽपि पद्धतिः ॥१९६॥
हृदयेऽनाहतं चक्रं ध्यायेद् द्वादशपत्रकम् ।
पूर्वपत्रात्तद्दलेषु प्राग्वत्कादीन् प्रविन्यसेत् ॥१९७॥
मणिपूरं ततश्चक्रं चिन्तयेन्नाभिमडले ।
दशपत्रं तत्र डादिवर्णान् प्राग्वद् विनिन्यसेत् ॥१९८॥
स्वाधिष्ठानं लिङ्गमूले चक्रं षड्दलमुच्यते ।
चिन्तयेद्बादिकाँस्तत्र षड्वर्णानपि पूर्ववत् ॥१९९॥
मूलाधाराभिधं चक्रं पद्माकृति चतुर्दलम् ।
वं शं षं सं तत्र चिन्त्यं पूर्वाशादिदलेषु च ॥२००॥
आज्ञाख्यचक्रं भ्रूमध्ये द्विदलं कमलाकृति ।
हँक्षँ ध्यायेदयं कार्यो मनसा केवलेन तु ॥२०१॥
स्वदेहेऽनामया कार्यं पुष्पेण सुरमूर्तिषु ।
अनादिलानऋष्यादि ब्रह्मवद् ध्यानमस्य तु ॥२०२॥

बहिर्न्यासमथो वक्ष्ये पूर्वोक्तब्रह्मरन्ध्रके ।
वर्णारविन्दे संध्यायेन्मातृकाख्यां सरस्वतीम् ॥२०३॥
पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-[1]
देशां भास्वत्कपर्दाऽऽकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भपुस्तालिखितवरकरां भीषणां पद्मसंस्था-
मक्षाकल्पामतुच्छस्तनजघनवरां भारतीं तां नमामि ॥२०४॥
ललाटे मुखवृत्तेऽक्षिश्रवोनासासु गण्डयोः ।
ओष्ठयोर्दन्तपङ्क्त्योश्च मूर्ध्नि वक्त्रे न्यसेत्स्वरान् ॥२०५॥
बाह्वोः सन्धिषु साग्रेषु कचवर्गौ न्यसेत्सुधीः ।
टतवर्गौ पदोस्तद्वत्पार्श्वयोः पृष्ठदेशतः ॥२०६॥
नाभौ कुक्षौ पवर्गञ्च हृदंशे ककुदं ततः ।
न्यस्य यादि चतुर्वर्णान् [2] शादिषट्कं ततो न्यसेत् ॥२०७॥
हृदादिकरयोरङ्घ्र्योर्जठरे वदने तथा ।
न्यासस्त्वयं वर्णमात्राहीनपाठप्रपूरकः ॥२०८॥

**मातृकामुद्रानिरूपणम् –**

ललाटेऽनामिकामध्ये न्यसेच्च मुखवृत्तके ।
तर्जनीमध्यमानामा विन्यसेच्चैव नेत्रयोः ॥२०९॥
तर्जन्यनामे संयुज्य न्यसेत्साधकसत्तमः ।
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः ॥२१०॥
मध्यमां गण्डयोर्न्यस्य मध्यमामोष्ठयोर्न्यसेत् ।
[3] अनामां दन्तयोर्न्यस्य मध्यमां चोत्तमाङ्गगे ॥२११॥
मुखेऽनामां मध्यमां च हस्ते पादे च पार्श्वयोः ।
कनिष्ठांनामिकामध्ये न्यस्तव्या पृष्ठतस्तथा ॥२१२॥

---

1. निजमुखवदनदोः - इति पा. भैरौ ।
2. चतुर्वर्णाञ्छादिषट्कम् - इति पा. उचितः ।
3. २११ (ख), २१२ श्लोकयोरंशौ ख.मा. न प्राप्येते ।

[1] साङ्गुष्ठा नाभिदेशे (तु) सर्वाः कुक्षौ च विन्यसेत् ।
हृदये साधकः सर्वमंशयोश्च ककुत्स्थले ॥२१३॥
हृत्पूर्वहस्तपत्कुक्षिमुखेषु तलमेव च ।
एतास्तु मातृकामुद्राः क्रमेण परिकीर्तिताः ॥२१४॥
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः ।
क्षमारभ्य अकारान्तो न्यासश्चेत्क्रियते यदि ॥२१५॥
संहारन्यासनामासौ बिन्दुन्यास इतीरितः ।
वामे च दक्षिणे मार्गे देवताध्यानमुच्यते ॥२१६॥

अक्षस्रजं हरिणपोतमुदग्रटङ्कम्
विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।
अर्धेन्दुमौलिमरुणामरविन्दवासाम्
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥२१७॥

विसर्गमातृकान्यासो भवेत्केवलमातृवत् ।
विशेषस्तु विसर्गान्तो वर्णोच्चारो भवेदिति ॥२१८॥
विन्दुसर्गयुताण्डादिहान्तान्वर्णान् स्थितौ न्यसेत् ।
पूर्वोक्ता एव [2] मुन्याद्याः षडङ्गध्यानमुच्यते ॥२१९॥

सिन्दूरकान्तिममिताभरणां त्रिनेत्राम्
विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाभाम्
ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥२२०॥

न्यासाः [3] कार्याश्चतुःषड्भिः स्थितिसंहारसृष्टयः ।
संहारस्सृष्टिस्थितयो [4] गृहस्थस्तु न्यसेत् क्रमात् ॥२२१॥

---

१. साङ्गुष्ठाङ्गुलिकाः सर्वा नाभौ कुक्षौ च विन्यसेत् - इति पाठः ख. मा. न. प्राप्यते ।

२. म आद्या - इति पा. मेरौ ।
३. कार्यास्तु बटुभिः - इति पा. मेरौ ।
४. न्यस्यन्ते गृहसेविभिः - इति पा. मेरौ ।

वानप्रस्थाश्च यतयः सृष्टिस्थितिलयक्रमात् ।
न्यासान् कुर्युरिति [१] प्रोक्तः स्थितिन्यासः सविस्तरः॥२२२॥
वक्ष्ये कलामातृकाया न्यासं तस्य ऋषिः स्मृतः ।
प्रजापतिश्च गायत्री [२] छन्दो ह्यस्यास्तु देवता ॥२२३॥
सरस्वती मातृका स्यान्नियोगोऽभीष्टतुष्टये ।
तारैः षडङ्गं कुर्वीत ह्रस्वदीर्घान्तरस्थितैः ॥२२४॥
हस्तैः पद्मं रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालाम्
टङ्कं शुभ्रं कपालं दलममृतलसद्धेमकुम्भं वहन्तीम् ।
मुक्ताविद्युत्पयोदस्फटिकमणिजपां बन्धुरैः पञ्चवक्त्रैः
त्र्यक्षैर्वक्षोजजनम्रां सकलशशिनिभां शारदां तां नमामि ॥२२५
ध्यात्वैवं तारपूर्वान्तां मकाराद्यां च मातृकाम् ।
बिन्दुयुक्तां ङेऽन्तकलानामाढ्यां नमसान्विताम् ॥२२६॥
पूर्वोक्तशुद्धमात्राणां न्यासस्थानेषु विन्यसेत् ।
निवृत्तिश्च प्रतिष्ठा च विद्या [३] शान्तिस्तथैन्धिका ॥२२७॥
दीपिका रोचिका चापि मेचिका च वराभिधा ।
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी ततः ॥२२८॥
व्यापिनी व्योमरूपा चानन्ता सृष्टिः समृद्धिका ।
स्मृतिर्मेधा ततः कान्ति [४] र्लक्ष्मीर्द्युतिः स्थिरा स्थितिः ॥२२९॥
सिद्धिर्जरा पालिनी च क्षान्तिरीश्वरिका रतिः ।
धार्मिका वरदा चान्या [५] ल्हादिनी प्रीतिसंयुता ॥२३०॥
दीर्घा तीक्ष्णा तथा रौद्री [६] भया निद्रा च तन्द्रिका ।
क्षुधा स्यात्क्रोधिनी पश्चात् क्रियोत्कारी समृत्युका ॥२३१॥

---

१. प्रोक्तो मातृकान्यासविस्तरः - इति पा. मेरौ ।
२. छन्दः स्यादस्य - इति पा. मेरौ ।
३. तदर्धिका - इति पा मेरौ ।
४. द्युतिर्लक्ष्मीः - इति पा. उचितः ।
५. वह्लादिनी - इति पा. मेरौ ।
६. माया - इति पा. मेरौ ।

पीता श्वेतारुणा [1] पश्चादशितानन्दयान्विता ।
उक्ता कलामातृकैवं स्थानेऽकारादिके न्यसेत् ॥२३२॥
तत्र नादात्मनो जाताः स्वरजास्तु सदाशिवात् ।
अक्षमालां पुस्तकं च पाशञ्चापि कपालकम् ॥२३३॥
हस्तैर्दधत्यः श्वेताभाः श्वेताम्वरविभूषणाः ।
अकाराद् ब्रह्मणो जाताः कचवर्गकला दश ॥२३४॥
पीता अक्षस्रजं पद्ममभयं च कमण्डलुम् ।
हस्तैर्दधत्यो ध्येयास्ताः पीतगन्धानुलेपनाः ॥२३५॥
विष्णोरुकारात् सञ्जाताष्टतवर्गकला दश ।
श्यामा अभयशङ्खाब्जवरहस्ताः समीरिताः ॥२३६॥
भकाराद्रुद्रतो जाताः पयवर्गाः कला नव ।
शरच्चन्द्रनिभा हस्तैरभयं शूलमेव च ॥२३७॥
कपालं च वरं ध्येया दधत्य इति साधकैः ।
शकारादिकपञ्चानामीश्वराद्बिन्दुतो भवेत् ॥२३८॥
अभयं हरिणं टङ्कं बलं च करपल्लवैः ।
दधत्यो रक्तवर्णाश्च ध्येया न्यासे कलात्मके ॥२३९॥
केशवादिमातृकायाः साध्यो नारायणो मुनिः ।
अमृताद्या तु गायत्री छन्दो लक्ष्मीर्हरिः सुरः ॥२४०॥
द्विरुक्तैः शक्तिश्रीकामैः षडङ्गानि समाचरेत् ।
शङ्खचक्रगदापद्मं कुम्भादर्शाब्जपुस्तकम् ॥२४१॥
बिभ्राणौ मेघचपलावर्णौ लक्ष्मीहरी भजेत् ।
शक्तयस्तु प्रियाङ्केषु निषण्णाः सस्मिताननाः ॥२४२॥
एवं ध्वात्वा न्यसेच्छक्तिश्रीकामपुटिताक्षरम् ।
तारादिहृदयान्तोऽथ केशवाद्याश्च शक्तयः ॥२४३॥

---

[1]. पश्चादसितानतया चिता – इति पा.मेरौ ।

भ्यान्ता नमोन्ता उच्चार्य स्थानेऽकारादिके न्यसेत् ।
कला मात्रास्तु शाक्तानां नित्योऽयं विष्णुसेविनाम् ॥२४४॥
केशवः कीर्तिसंयुक्तः कान्तिर्नारायणान्विता ।
माधवस्तुष्टिसंयुक्तो गोविन्दः पुष्टिसंयुतः ॥२४५॥
विष्णुश्च धृतिसंयुक्तः शान्तियुङ् मधुसूदनः ।
त्रिविक्रमः क्रियायुक्तो वामनोऽपि दयान्वितः ॥२४६॥
श्रीधरो मेधया युक्तो हृषीकेशश्च हर्षया ।
पद्मनाभयुता श्रद्धा लज्जा दामोदरान्विता ॥२४७॥
वासुदेवश्च लक्ष्मीयुक् [1]सरस्वत्यास्तुकर्षणः ।
प्रद्युम्नः प्रीतिसंयुक्तोऽनिरुद्धो रतिसंयुतः ॥२४८॥
[2] चक्री गदाब्जया दुर्गा शार्ङ्गी तु प्रभया युतः ।
खड्गी तु सत्यया युक्तः शङ्खी [3] चण्डीसमन्वितः ॥२४९॥
हली वाणीसमायुक्तो मुशली च विलासिनी ।
शूली च विजयायुक्तः पाशी विरजयान्वितः ॥२५०॥
अङ्कुशी विश्वया युक्तो मुकुन्दो [4] विनयान्वितः ।
नन्दजः सुनदायुक्तो नन्दी [5] स्मृत्या समन्वितः ॥२५१॥
नर ऋद्ध्या नरकजित्समृद्ध्या शुद्धियुग्धरिः ।
कृष्णो बुद्ध्या भूत्या सत्यो मतियुक्सात्त्वतः स्मृतः ॥२५२॥
शौरिक्षमे शूरदमे जनार्दन उमान्वितः ।
भूधरः क्लेदिनीयुक्तो विश्वमूर्तिश्च क्लिन्नया ॥२५३॥

---

[1] मधुसूदनःसरस्वती - इति पा. मेरौ ।
[2] चक्री जया गदी दुर्गा - इति मा. मेरौ ।
[3] श्रद्धा - इति पा. मेरौ ।
[4] विनयान्वितः विनदान्वितः - इति पाठौ द्वौ ।
[5] सत्यासमन्वितः - इति पा. मेरौ ।

वैकुण्ठो वसुधायुक्तो वसुदापुरुषोत्तमौ ।
बली तु परया युक्तो [1] बलानुजपरायणे ॥२५४॥
बालसूक्ष्मे वृषघ्नस्तु सन्ध्यायुक्सरया वृषः ।
[2] हंसः स्याद्दक्षिणामूर्त्तिगायत्रीच्छन्द ईरितः ॥२५५॥
अर्धादिजो हरो देवो नियोगः सर्वसिद्धये ।
हलो बीजानि गुप्त्यै तु पादयोः स्वरशक्तयः ॥२५६॥
ह्रस्वदीर्घान्तरे कृत्वा प्रागवद् [3] वर्गान्हसौ मयम् ।
षड्दीर्घसंयुक्तान्कृत्वा षडङ्गादि न्यसेत्तनौ ॥२५७॥
बन्धूककाञ्चननिभं रुचिराक्षमालां
पाशाङ्कुशौ च वरदं निजबाहुदण्डैः ।
बिभ्राणमिन्दुशकलाभरणं त्रिनेत्र -
मर्धाम्बिकेशमनिशं वपुराश्रयामि ॥२५८॥
[4] हसौ ते मातृकायुक्ता देवान्ते च समुच्चरेत् ।
[5] ङेन्तङेन्तां च तच्छक्तिं नमोऽन्तां मातृकास्थले ॥२५९॥
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राण्यसून् वदेत् ।
शक्तिं क्रोधं तथात्मानं ङेन्तं यादि दशस्वपि ॥२६०॥
श्रीकण्ठपूर्णोदर्यौ चानन्तो विरजयान्वितः ।
सूक्ष्मेशः शाल्मलीयुक्तो लोलाक्षीयुक् त्रिमूर्तिकः ॥२६१॥
अमरेशो वर्तुलाक्ष्या [6] चार्धीशो दीर्घघोणया ।
भारभूतिर्दीर्घमुख्या तिथीशो गोमुखीयुतः ॥२६२॥
स्थाण्वीशो दीर्घजिह्वायुग्धरः कुण्डोदरीयुतः ।
ऊर्ध्वकेश्या च झिण्टीशो भौतिको विकृतास्यया ॥२६३॥

---

[1] प्रज्ञया वृषः - इति पा मेरौ ।
[2] हंसः प्रभासमायुक्तो वराहो निरयान्वितः ।
विमलो मेधया युक्तो नृसिंहो विद्युतान्वितः ॥ - इति पा. मेरौ ।
[3] हसौ - इति पाठान्तरम् ।
[4] हसौ - इति पा. मेरौ ।
[5] ङेन्तफेन्तकतच्छक्तिम् - इति पा. मेरौ ।
[6] वर्षीशो - इति पा. मेरौ ।

[1] सद्योजातो ज्वालामुख्याऽनुग्रहोल्कामुखीयुतः ।
अक्रूरः श्रीमुख्या महासेनो विद्यामुखीयुतः ॥२६४॥
[2] क्रोधेशश्च महाकाल्या चण्डेशेन सरस्वती ।
पञ्चान्तकः [3] सर्वसिद्धिर्गौर्या युक्तः प्रकीर्त्तितः ॥२६५॥
शिवोत्तमेशो विन्यस्यो युक्तस्त्रैलोक्यविद्यया ।
एकरुद्रो मन्त्रशक्त्या कूर्मेशश्चाष्टशक्तियुक् ॥२६६॥
एकनेत्रो भूतमात्रायुक्तः स्याच्चतुराननः ।
लम्बोदर्या युतः प्रोक्तस्त्वजेशो द्राविणीयुतः ॥२६७॥
सर्वेशो नागरीयुक्तः सोमेशः खेचरीयुतः ।
लाङ्गलीशश्च मञ्जर्या दारुकेशेन रूपिणी ॥२६८॥
[4] वीरिण्या चार्धनारीशो ह्युमाकान्तः पुनर्युतः ।
काकोदर्या तथाषाढी पूतनायुक्त ईरितः ॥२६९॥
दण्डीशो भद्रकालीयुगत्रीशो योगिनीयुतः ।
(मीनेशः शङ्खिनीयुक्तो मेषेशः तर्जनीयुतः ।
लोहितः कालरात्र्या च शिखीशः कुर्दिनीयुतः ॥ )
छगलाण्डः कपर्दिन्या [5] द्विरण्डेशश्च वज्रया ॥२७०॥
महाकालो जयायुक्तो वालीशः सुमुखीयुतः ।
[6] भुजगो रेवतीयुक्तो पिनाकी माधवीयुतः ॥२७१॥
खड्गीशो वारुणीयुक्तो वकेशो वायवीयुतः ।
श्वेतो [7] रक्षोऽवधारिण्या भृगुः सहजया युतः ॥२७२॥
नकुलीशो लक्ष्मीयुक्तः शिवेशो व्यापिनीयुतः ।
संवर्तको महामायायुक्त एतास्तु मातृकाः ॥२७३॥

---

[1] सद्यो ज्वालामुखीश्चानुग्रहश्चोल्कामुखीयुतः - इति पा. मंरौ ।

[2] क्रोधनश्च - इति पा. मंरौ ।

[3] सर्वसिद्धिगौरीयुक्तः - इति पा. मंरौ ।

[4] वारिण्या - इति पा. मंरौ ।

[5] द्विदण्डीशश्च पा. मंरौ ।

[6] भुजङ्गो रेवतीयुक्तो - इति पा. मंरौ ।

[7] विदारिण्या - इति पा मंरौ ।

१ श्रीकण्ठाद्या य ईशान्तास्तत्र नेशं प्रयोजयेत् ।
सर्वे रुद्राः स्मृता रक्ता धृतशूलकपालकाः ॥२७४॥
शक्तयो रुद्रपीठस्थाः सिन्दूरारुणविग्रहाः ।
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ॥२७५॥
येनोपास्या महाविद्या दश तस्याधिकारिता ।
भुवनेशीवीजपूर्वमातृकान्यसने सुराः ॥२७६॥
ऋषिः शक्तिस्तु गायत्री च्छन्दः स्यान्मातृकामयी ।
भुवनेशी देवताऽथ नियोगः स्वेष्टसिद्धिये ॥२७७॥
ह्रस्वदीर्घान्तरगतैः षड्वर्गैर्दीर्घसंयुतैः ।
२ प्रागवद्धरैः षडङ्गं स्यादङ्गुष्ठादि तथैव च ॥२७८॥
उद्यत्कोटिदिवाकरप्रतिभटोत्तुङ्गोरुपीनस्तनी ३
बद्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ।
बिभ्राणा करपङ्कजैर्जपवटीं पाशाङ्कुशौ पुस्तकं
दिश्यान्नो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥२७९॥
लज्जाबीजं पूर्वमुक्त्वा मातृकान्यास एव हि ।
भुवनेशी मातृकाणां ४ न्यासोक्तैर्यत्र साधने ॥२८०॥
श्रीबीजपूर्वकः कार्यो लक्ष्मीकामैर्गृहस्थितैः ।
ऋषिर्भृगुश्च गायत्रीच्छन्दो मातृस्वरूपिणी ॥२८१॥
लक्ष्मीस्तु देवता प्रोक्ता हरस्थाने शरौ कुरु ।
न्यासार्थं तु षडङ्गादि शेषं श्रीबीजपूर्वकम् ॥२८२॥
विद्युद्दामसमप्रभां हिमगिरि प्रख्यैश्चतुर्भिर्भुजैः
शुण्डादण्डसमुद्धृताऽमृतधरैरासिच्यमानामिमाम् ।

---

१ श्रीकण्ठाख्यादिमहेशान्तं पदं ङेन्तं प्रयोजयेत् - इति पा. मेरौ ।
२ प्रागवद्धरे - इति पा. मेरौ ।
३ प्रतिनिभो - इति पा. मेरौ ।
४ न्यासो नार्यत्यसाधने - इति पा. मेरौ ।

बिभ्राणां करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकम्
भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम् ॥२८३॥
कामनामन्त्रसिद्ध्यर्थं कामबीजादिपूर्वकम् ।
कुर्याच्च मातृकान्यासं मुनिः सम्मोहनो मतः ॥२८४॥
गायत्री च्छन्द उद्दिष्टं देवता मातृकामयी ।
संमोहनी नाम देवी पूर्वयुक्त्या षडङ्गकम् ॥२८५॥
बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुजनितं स्मरपञ्चबाणान् ।
विद्याञ्च हस्तकमलैर्दधतीं त्रिनेत्रां
ध्यायेत्समस्तजननीं नवचन्द्रचूडाम् ॥२८६॥
शक्तिश्रीकामबीजादिमातृकान्यासतो नृणाम् ।
शत्रुत्वाद्या मन्त्रदोषा नश्यन्ति बहुवर्णिताः ॥२८७॥
महासम्मोहन ऋषिर्गायत्री च्छन्द ईरितम् ।
संमोहनी नामदेवी न्यासः प्राङ्मातृकासमः ॥२८८॥
ध्यायेयमक्षवलयेक्षुशरासपाश-
पद्मद्वयाङ्कुशशरान्नव पुस्तकं च ।
आबिभ्रतीं निजभुजैररुणां कुचार्ताम्
संमोहिनीं त्रिनयनां नवचन्द्रचूडाम् ॥२८९॥
सर्वविघ्ननिरासार्थमवश्यं न्यासमाचरेत् ।
गणेशमातृकायास्तु मुनिर्गणक ईरितः ॥२९०॥
निवृद्गायत्रिका छन्दो देवः शक्तिविनायकः ।
स्मृत्या दीर्घाद्यया चाङ्गं कृत्वा ध्यायेद् गजाननम् ॥२९१॥
शूलाङ्कुशवराभीतिपाणिं रक्ताब्जहस्तयोः ।
प्रियमालिङ्गितं रक्तं त्रिनेत्रं गणपं भजे ॥२९२॥
एवं ध्यात्वा न्यसेत्स्वीयबीजपूर्वाक्षरान्वितम् ।
विघ्नेशो ह्रीसमायुक्तो विघ्नराजः श्रिया युतः ॥२९३॥

विनायकः पुष्टियुक्तः शान्तियुक्तः शिवोत्तमः ।
[1] विघ्नकृत्सृष्टिसंयुक्तो सरस्वत्या तु विघ्नहृत् ॥२९४॥
गणस्तु स्वाहया युक्त एकदन्तस्तु मेधया ।
द्विदन्तः कान्तिसंयुक्तः कामिन्या गजवक्त्रकः ॥२९५॥
निरञ्जनो मोहिनीयुक् कपर्दी तु [2] नदीयुतः ।
दीर्घजिह्वः पार्वतीयुग्ज्वालिन्या शङ्कुकर्णकः ॥२९६॥
वृषध्वजो नन्दया युक् सुयशोगणनायकौ ।
गजेन्द्रः कामरूपिण्या सूर्यकर्णस्तथोमया ॥२९७॥
त्रिलोचनस्तेजोवत्या लम्बोदरस्तु सत्यया ।
महानन्दश्च विघ्नेश्या चतुर्मूर्तिःस्वरूपया ॥२९८॥
सदाशिवः कामदायुगामोदो मदजिह्वया ।
दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकायुतः ॥२९९॥
प्रमोदः सितया युक्त एकपादो रमायुतः ।
द्विजिह्वो महिषीयुक्तः [3] शूलस्यापि भुजङ्गिनी ॥३००॥
वीरो विकर्णया युक्तः षण्मुखो भृकुटीयुतः ।
वरदो रज्जया वामदेवः स्याद्दीर्घघोणया ॥३०१॥
धनुर्धरावक्रतुण्डौ [4] द्विरण्डो जामिनीयुतः ।
सेनानी रात्रिसंयुक्तः कामान्धो ग्रामणीयुतः ॥३०२॥
मत्तः शशिप्रभायुक्तो विमत्तलोललोचने ।
मत्तवाहनचञ्चले जटी दीप्तिसमन्वितः ॥३०३॥
मुण्डी सुभगया युक्तः खड्गी दुर्भगया तथा ।
वरेण्यश्च शिवायुक्तो भगीयुग्वृषकेतनः ॥३०४॥
भक्तप्रियो भगिन्या तु गणेशो भोगिनीयुतः ।
मेघनादः सुभगया व्यापी स्यात्कालरात्रियुक् ॥३०५॥

---

[1] स्वस्ति संयुक्तो - इति पा. मेरौ ।
[2] नटीयुतः - इति पा. मेरौ ।
[3] शूलस्यापि तु जम्भिनी - इति पा. मेरौ ।
[4] द्विरदो यामिनीयुतः - इति पा. मेरौ ।

गणेश्वरः कालिकेति प्रोक्ता विघ्नेशमातृका ।
त्वगादियोगो यादीनां पूर्ववत्परिकीर्तितः ॥३०६॥
प्रपञ्चयागो न्यासोऽथ वक्ष्यते भुक्तिमुक्तिदः ।
महागणेशमन्त्रेण प्राणायामत्रयं चरेत् ॥३०७॥
ऋषिः प्रपञ्चयोगस्य गणकश्छन्द ईरितम् ।
गायत्री तु निवृत्पूर्वा महागणपतिः सुरः ॥३०८॥
शीर्षादिषु त्यसेत्तांश्च गँ बीजं चापि गुह्यके ।
स्वाहाशक्तिः पादयोश्च नियोगोऽभीष्टसिद्धये ॥३०९॥
ॐ श्रीं ह्रीं क्लीं ग्लौं गमिति पूर्वं षड्दीर्घयुक्तकम् ।
उच्चार्य कुर्यादङ्गानि तथाङ्गुष्ठादिषु न्यसेत् ॥३१०॥
तालत्रयं तथाऽस्त्रेण कृत्वा दिग्बन्धमाचरेत् ।
तर्जन्यङ्गुष्ठशब्देन दशदिक्ष्वथ चिन्तयेत् ॥३११॥
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा -
दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ।
बीजापूरगदाधनुस्त्रिशिरयुक्चक्राब्जपाशोत्पल-
ब्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहन्तं भजे ॥३१२॥
महागणपतेर्मन्त्रमष्टवारं जपेत्ततः ।
गमित्येकाक्षरं बीजं गणकोऽस्य मुनिर्मतः ॥३१३॥
देवो विघ्नेश्वरश्छन्दो निवृद्गायत्रीनामकम् ।
प्रपञ्चाख्यस्य योगस्य साङ्गतासिद्धिहेतवे ॥३१४॥
चतुश्चत्वारिंशत्सङ्ख्यजपार्थं विनियोजनम् ।
अथ षड्दीर्घयुक्तेन कुर्यादङ्गानि गेन तु ॥३१५॥
[1] दन्तपाशाङ्कुशवरकरं त्र्यक्षं च तुन्दिलम् ।
सिन्दूराभं चन्द्रमौलिं सर्पभूषं गलन्मदम् ॥३१६॥

---

[1] गदापाशाङ्कुशकरं त्र्यक्षं च तुन्दिलं वरम् - इति पा. भेदः ।

एकवारं जपेत्पश्चाद् गणानान्त्वेति वैदिकम् ।
गणेशमालामन्त्रस्य मुनिस्तु गणकः स्मृतः ॥३१७॥
छन्दोऽमितं गणपतिर्देवता परिकीर्तिता ।
ह्रीं क्रौँ तारो नमः सर्वङेऽन्तं विद्याधिपं ततः ॥३१८॥
सर्वार्थसिद्धिदायेति सर्वदुःखप्रशेति च ।
ततो [1] गणप एह्येहि [2] भगवन्खादयेति च ॥३१९॥
स्तम्भयेति द्वयं ह्रीं गँ गाँ नमोऽप्यग्निगेहिनी ।
क्रौँ ह्रीं पञ्च पञ्चाशद्वर्णो मन्त्रः समुच्यते ।३२०॥
जपेदिदं चतुर्वारं मुन्यादिसहितं न्यसेत् ।
न्यासपूर्वं त्रिवारं तु मातृकाध्यानपूर्वकम् ॥३२१॥
स्वरादिसप्तवर्गैस्तु ग्रहान् [3] स समुदीरितः ।
[4] प्रपञ्चयागमन्त्रस्य मुनिर्ब्रह्मा समीरितः ॥३२२॥
परमाद्या समाख्याता गायत्री च्छन्द उत्तमम् ।
महः परं समाख्यातं देवता चिन्मयात्मकम् ॥३२३॥
भव्यन्ते [5] बोधितं नित्यं सर्वव्यापि निरञ्जनम् ।
विलोमगैः [6] पञ्चपरैः प्रपञ्चमनुसंस्थितैः ॥३२४॥
ह्रस्वदीर्घान्तःस्थकादिवर्गैः पूर्वसमन्वितैः ।
तारामायादिकै [7] रस्त्रैर्युक्तैर्हरिहराक्षरैः ॥३२५॥
षडङ्गानि प्रकुर्वीत जातियुक्तानि देशिकः ॥३२६॥

---

[1] सनाय - इति पा. मेरौ ।

[2] वादयेति च - इति पा. मेरौ ।

[3] सप्त प्रविन्यसेत् - इति पा. मेरौ ।

[4] मुखे बाह्वोः पादयोश्च जठरे हृदये क्रमात् ।
तारो माया च हंसश्च सोहं स्वाहेति वै पुनः ।
प्रपञ्चयागमन्त्रोऽयमष्टार्णः समुदीरितः ॥
- इति अधिकः प्रासङ्गिकः पाठो मेरौ ।

[5] अबाधितम् - इति पा. मेरौ ।

[6] पञ्चवर्णैः - इति पाठो मेरौ ।

[7] रेतैः - इति पाठो मेरौ ।

वेदादिपञ्च-मनुभिः परिचीयमानं
[1] मानैरगम्यमनिशं जगदेकमूलम् ।
सच्चित्समस्तगमनश्वरमच्युतं तत्
तेजः परं भजत पूर्णकृपाम्बुराशिं ॥३२७॥
वेदादिमाययोरन्ते [2] अकाराद्यान्सविन्दुकान् ।
पृथगुच्चार्य हंसः सोहं स्वाहेति वदन्हृदि ॥३२८॥
विभावयेदिमान्वर्णानात्मवह्नौ जुहोम्यहम् ।
एवं हुत्वा [3] क्षकारान्तानकाराद्यान्पुनर्हुनेत् ॥३२९॥
विसर्गान्तान्क्षकारान्तान् विन्यसेन्मातृकास्थले ।
एवं प्रपञ्चयागाख्यो मातृकान्यास ईरितः ॥३३०॥
आत्मविद्याशिवैस्तत्त्वैः स्वत्वन्यासं समाश्रयेत् ।
पादादिनाभिपर्यन्तमात्मतत्त्वं प्रकीर्तितम् ॥३३१॥
नाभ्यादि हृदयान्तं हि विद्यातत्त्वं प्रकीर्तितम् ।
हृदयाद्बिन्दुपर्यन्तं शिवतत्त्वं प्रकीर्तितम् ॥३३२॥
मूलमन्त्रं त्रिखण्डान्ते क्रमेणैव प्रविन्यसेत् ।
सर्वमन्त्रं समुच्चार्य सर्वाङ्गे व्यापकं शिवे ॥३३३॥
सर्वतत्त्वमिदं प्रोक्तं सर्वदेवत्वकारकम् ।
तिथितत्त्वानि देवेशि आत्मतत्त्वे भवन्ति हि ॥३३४॥
पञ्चविंशतितत्त्वानि विद्यातत्त्वे भवन्ति हि ।
षट्त्रिंशच्चैवतत्त्वानि शिवतत्त्वे भवन्ति हि ॥३३५॥
अथ पञ्चाशत्तत्त्वानि सर्वतत्त्वे भवन्ति हि ।
एवन्न्यासान्तरे योगपीठाख्यं न्यासमाचरेत् ॥३३६॥
तत्पूर्वमुक्तञ्च ततः स्वेष्टमन्त्रस्य सञ्चरेत् ।
प्राणायामत्रयं कृत्वा मूलमन्त्रेण साधकः ॥३३७॥

---

[1] मानं निरस्य मुनिभिः - इति पा. मेरौ ।
[2] क्षकारान्तान् - इति पा. मेरौ ।
[3] क्षकारान्तानकारान्तान् - इति पा. मेरौ ।

विन्यसेत्तदृषिं च्छन्दो देवताश्च यथाविधि ।

**[1] ऋष्यादिन्यासस्थानानि मुद्राश्च –**

ऋषिं न्यसेन्मूर्ध्नि देशे छन्दस्तु मुखपङ्कजे ॥३३८॥
देवतां हृदये चैव बीजन्तु गुह्यदेशके ।
शक्तिञ्च पादयोश्चैव सर्वाङ्गे कीलकं स्मृतम् ॥३३९॥
ऋष्यादीन् विन्यसेद्देवि चतुर्थीहृदयान्तकान् ।

**मुद्राः –**

ऋषिच्छन्दोदेवतानां न्यासेऽप्यङ्गुलयः स्मृता ॥३४०॥
चतस्रोऽङ्गुष्ठसहिताः [2] शक्त्यन्तं विन्यसेत्ततः ।
कीलकं व्यस्तहस्ताभ्यां सर्वाङ्गे साधकाग्रणीः ॥३४१॥

**[3] अथवा –**

विनाङ्गुष्ठैरङ्गुलिभिः संयुताभिर्ऋषिं न्यसेत् ।
वामाग्राभिः पुनस्ताभिर्विन्यसेन्मुखपङ्कजे ॥३४२॥
सर्वाभिर्हृदये प्रोक्ता गुदे[4] पादे तथाग्रतः ।
कराभ्यां विन्यसेद्धीमान् सर्वाङ्गे च क्रमाद् विदुः ॥३४३॥

**अङ्गन्यासमुद्राः –**

कनिष्ठाङ्गुष्ठरहितैस्त्रिभिस्तु हृदि विन्यसेत् ।
मध्यमातर्जनीभ्यान्तु न्यसेच्छिरसि मन्त्रवित् ॥३४४॥
अङ्गुष्ठेन शिखां न्यस्य दशभिः कवचं न्यसेत् ।
हृद्गतैर्नेत्रविन्यासं विन्यसेत्परमेश्वरि ॥३४५॥

---

[1] आगमोक्तेन मार्गेण न्यासान्नित्यं करोति यः ।
करान्गन्यासमुख्यांस्तु न्यासानन्यात् समाचरेत् ॥
– इति ख.मा. अधिकः पाठः ।

[2] सहिता – इति ख. मा. पा. ।

[3] अथवा – इति ख. मा. न प्राप्यते ।

[4] पादे – इति ख.मा. त्रुटितः ।

तर्जनीमध्यमाभ्यान्तु ततोऽस्त्रं विन्यसेत्प्रिये ।
षडङ्गं विन्यसेन्मन्त्री हृदयाय नमो वदेत् ॥३४६॥
स्वस्वमन्त्रं समुच्चार्य शिरसे वह्निवल्लभा ।
स्कन्धमध्ये न्यसेत्पश्चाच्छिखायै वषडित्यपि ॥३४७॥
कवचाय बाहुमूले कूर्चबीजं समुच्चरेत् ।
नेत्रत्रयाय वौषडित्यन्तं च नेत्रयोर्न्यसेत् ॥३४८॥
करयोर्विन्यसेन्मन्त्री अस्त्राय च फडित्यपि ।

**अथास्यार्थमाह -**

हृदयायेति शब्देन हृत्स्थो देवः सविग्रहः ॥३४९॥
उच्यते नम इत्यस्य ज्ञानं तद्विषयं परम् ।
शिरःशब्दो देवताया उत्कृष्टत्वाभिधायकः ॥३५०॥
स्वाहेति विषयाः सर्वे देवतायां समर्पिताः ।
शिखायै च स्वरूपत्वं वषडपि तदुच्यते ॥३५१॥
देवताया व्यापकत्वं कवचायाभिधीयते ।
हुमपि व्यापकं तेजो देवतायाः प्रकाश्यते ॥३५२॥
नेत्रशब्देन देवस्य प्रकाश्यत्वं प्रकाश्यते ।
वौषडपि तदैवोक्तः मन्त्रशब्देन वारणम् ॥३५३॥
अनिष्टस्य फट्शब्देन दाहकं तेज उच्यते ।
ज्ञात्वैवमङ्गमन्त्रार्थमङ्गन्यासं करोति यः ॥३५४॥
प्रचयास्तस्य सर्वार्थाः पूज्यते त्रिदशैरपि ।
कराङ्गन्यासमुख्यांस्तु न्यासानन्यान्समाचरेत् ॥३५५॥
आगमोक्तेन मार्गेण न्यासान्नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥३५६॥

योे न्यासकवचच्छन्नो मन्त्रं जपति यं प्रिये ।
दृष्ट्वा विघ्नाः पलायन्ते सिंहदृष्टा यथा गजाः ॥३५७॥
अकृत्वा न्यासजालं यो मूढात्मा कुरुते जपम् ।
विघ्नैः स बाध्यते नूनं व्याघ्रैर्मृगशिशुर्यथा ॥३५८॥
न्यासानां प्रचुरत्वेन फलानामपि भूरिता ।
उक्तन्यासो न हि त्याज्यस्त्वधिकं कामतश्चरेत् ॥३५९॥

इति श्रीतन्त्रचिन्तामणौ
साधारणनित्यार्चनायां पूजामण्डपे
प्रवेशनादिन्यासजालान्तनिर्णयनामा
षोडशः प्रकाशः ।

*****

# सप्तदशः प्रकाशः

**अन्तर्विधिः -**

एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ।
ध्यानं कुर्यात्ततो मन्त्री तत्तत्कल्पोक्तवर्त्मना ॥१॥
तदपि द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ।
आत्मनो हृदयाम्भोजे कर्णिकाकेशरोज्ज्वले ॥२॥
प्रफुल्ले सोमसूर्याग्निमण्डलेन विराजिते ।
स्वीयेष्टदेवतां तत्र यजेदागमबोधिताम् ॥३॥
एवं यद्वेदनं तद्धि सगुणं ध्यानमुच्यते ।
अथान्तर्यजनं वक्ष्ये दृष्टादृष्टफलप्रदम् ॥४॥
योगिनां येन जायन्ते अधीरा मानवाः सदा ।

**देव्युवाच -**

वाह्यपूजां विना स्वामिन् कथमन्तःप्रपूजनम् ॥५॥
पूजाज्ञानं यदा जातं तदान्तःपूजनं भवेत् ।
सामग्रीज्ञानहीनत्वात्कथमन्तःप्रपूजनम् ॥६॥

**श्रीशिव उवाच -**

सत्यमेतन्महेशानि रहस्यं शृणु यत्नतः ।
विष्ठापूर्णे स्वोदरे तु वहिःशुद्धौ तु किं फलम् ॥७॥
अन्तःशुद्धिं समासाद्य वहिःशुद्धिं समाचरेत् ।
वहिःपूजाविधौ देवि सामग्री [1] दुर्मिला कलौ ॥८॥
व्यङ्गता जायते सत्यं सर्वत्र पूजने शिवे ।
तत्साङ्गतासिद्धिहेतोरन्तः पूजा प्रकीर्तिता ॥९॥
भावनामात्रगम्येयं कोटिरत्नानि कल्पयेत् ।
अन्तःपूजाविहीनेन कृतं तदफलं भवेत् ॥१०॥

---

[1] दुर्लभा - इति पा. उचित: ।

संयोगं तु विना देवि यो गर्भाधानमिच्छति ।
स चान्तःपूजनं त्यक्त्वा बहिःपूजां समिच्छति ॥११॥
स दरिद्री महाघोरी कथमत्र सुखं भवेत् ।
अन्तःपूजां समासाद्य बहिःपूजां समाचरेत् ॥१२॥
सम्भाव्य पूजनं स्वान्ते तथैव पूजयेद् बहिः ।

**श्रीदेव्युवाच -**

तथ्यमुक्तं त्वया देव संशयो मेऽस्ति शङ्कर ॥१३॥
बहिःपूजनमासाद्य चान्तःपूजां समाचरेत् ।
एवं क्रमेण देवेशि पूजा किन्न भविष्यति ॥१४॥

**शिव उवाच -**

[1] मृदपक्वं प्रकर्तव्यः सुन्दरः स तु जायते ।
अन्तर्न्यूनं बहिःपूर्णं बहिर्न्यूनतरं भवेत् ॥१५॥
अन्योऽन्याश्रयसंयोगात्पूजनं सफलं भवेत् ।
देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् ॥१६॥
तस्माद्देवत्वमासाद्य चान्तःपूजादिमार्गतः ।
गुरोर्ध्यानं प्रकुर्वीत यथापूर्वं विशालधीः ॥१७॥

इति ब्रह्ममुहूर्त्तकृत्यम्

स्नानं बुधस्ततः कुर्यात्सच्चिदानन्दसिद्धये ।
स्नायाच्च विमले तीर्थे पुष्करे हृदयाश्रिते ॥१८॥
बिन्दुतीर्थे नरः स्नायात्पुनर्जन्म न विद्यते ।

इति स्नानम्

मूलाधारात्कुण्डलिनीमुत्थाप्य योजयेच्छिवे ॥१९॥
शिवशक्त्योः समायोगो यस्मिन्काले प्रजायते ।
सा सन्ध्या कुलनिष्ठानां समाधिस्थैः प्रगीयते ॥२०॥ इति सन्ध्या

---

[1] मृदपक्वं समासाद्य यथा देवघटो भवेत् ।
घटः पक्वमृदा देवि पूर्ववत् किं भविष्यति ॥
अपक्वां मृत्दमानीय यथा देवि घटो भवेत् ।
ततः पक्वः प्रकर्तव्यः सुन्दरः स तु जायते ॥ - इति ख. मा. अधिकः पाठः ।

चन्द्रार्कानलसङ्घट्टाद् गलितं यत्परामृतम् ।
तेनामृतेन दिव्येन तर्पयेत्परदेवताम् ॥२१॥
ब्रह्मरन्ध्रादधोभागे यच्चान्द्रं पात्रमुत्तमम् ।
कलासारेण सम्पूर्य तर्पयेत्तेन खेचरीम् ॥२२॥
इति तर्पणम्

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे ।
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के ।
वासान्ते बालमध्ये डफकठसहिते कण्ठमूले स्वराँश्च
हक्षौ कोदण्डमध्ये न्यसतु विमलधीर्न्याससम्पत्तिसिद्ध्यै ॥२३॥
इत्यन्तर्मातृकान्यासः

**आन्तरषडङ्गन्यासः-**

सहस्रारे मणिनिभे सर्ववर्णविभूषिते ।
अकथादित्रिरेखाढ्ये हलक्षत्रयभूषिते ॥२४॥
तन्मध्ये परविन्दुञ्च सृष्टिस्थितिलयात्मकम् ।
एवं समाहितमनाःध्यायेन्न्यासोऽयमान्तरः ॥२५॥
मूलादि ब्रह्मरन्ध्रान्तं विन्दुं ध्यायेच्चिदात्मकम् ।
[1] विन्दुस्रुतसुधाधारैस्तर्पयन्मातृकां न्यसेत् ॥२६॥
एकैकं वर्णमुच्चार्य मूलाधाराद् भ्रुवान्तिकम् ।
नमोऽन्त इति विन्यास आन्तरः परिकीर्तितः ॥२७॥
हृद्यात्मनो हृदात्माऽयं हृदये स्याच्चिदात्मकः ।
क्रियते तत्परत्वेन हृन्मन्त्रेण ततः परम् ॥२८॥
सर्वज्ञादिगुणोत्तुङ्गे सच्चिद्रूपे परात्मनि ।
क्रियया विषयाहारः शिरोमन्त्रेण देशिकैः ॥२९॥

---

[1] श्लोकौ २६, २७ ख.मा न. प्राप्येते ।

हृच्छिरोरूपचिद्धामलयता भावना दृढा।
क्रियते निजदेहस्य शिखामन्त्रेण देशिकैः ॥३०॥
मन्त्रात्मकस्य देहस्य मन्त्रवाह्येन तेजसा।
सर्वतो वर्णमन्त्रेण क्रियतेऽहन्यसंवृतिः ॥३१॥
यद्ददाति परं ज्ञानं सच्चिद्रूपे परात्मनि।
हृदयादिमयं तेजः स्यादेतन्नेत्रसंज्ञितम् ॥३२॥
आध्यात्मिकादिरूपञ्च साधकस्य विनाशयेत्।
अविद्याजालमस्त्रं तत्परं धाम समीरितम् ॥३३॥

**ध्यानम् –**

किरणस्थं तदग्निस्थं चन्द्रभास्करमध्यगम्।
महाशून्ये लयं कृत्वा पूर्णस्तिष्ठति योगिराट् ॥३४॥
यज्जीवब्रह्मणोरैक्यं सोऽहं स्यामिति वेदनम्।
तदेव निर्गुणं ध्यानमिति वेदविदो विदुः ॥३५॥
इति ध्यानम्

**अर्चनम् –**

अर्चयेद् विविधैः पुष्पैस्तत्क्षणात्तन्मयो भवेत्।
न्यासस्तन्मयताबुद्धिः सोऽहंभावेन पूजयेत् ॥३६॥
अमायामनहङ्कारमरागममदं तथा।
अमोहकमदम्भमद्वेषाक्षोभकौ ततः ॥३७॥
अमात्सर्यमलोभञ्च दशपुष्पं विदुर्बुधाः।
अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः ॥३८॥
दयापुष्पं क्षमापुष्पं ज्ञानपुष्पं च पञ्चमम्।
इत्युक्तैरुत्तमैः पुष्पैः पूजयेत्परदेवताम् ॥३९॥
इत्यर्चनम्

माला पञ्चाशिकी प्रोक्ता सूत्रं शक्तिशिवात्मकम्।
ग्रथिता कुण्डली शक्तिः कलान्ते मेरुसंस्थितिः ॥४०॥
इति जपः

**होमः -**

मूलाधारे गते कुण्डे देवताग्निसमुज्ज्वले ।

धर्माधर्मान्विते त्र्यस्रे मूलमन्त्रपुरस्सरम् ॥४१॥

अहं जुहोमि स्वाहेति प्रत्येकं जुहुयात्सुधीः ।

अहं नाऽसत्यपैशुन्यकामक्रोधादिकं हविः ॥४२॥

मन एव स्रुवः प्रोक्तः उन्मनी स्रुगुदीरिता ।

**मूलान्तहोमः -**

नाभौ चैतन्यरूपाग्नौ हविषा मनसा स्रुचा ॥४३॥

ज्ञाने प्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम् ।

**स्वाहेति प्रथमाहुतिः**

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ॥४४॥

सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।

**स्वाहेति द्वितीयाहुतिः -**

प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ॥४५॥

धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् ॥४६॥

**स्वाहेति तृतीयाहुतिः -**

अन्तर्निरिन्धननिबन्धनमेधमाने

मायान्धकारपरिपन्थिनि संविदग्नौ ।

कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ

विश्वं जुहोमि वसुधादि च खावसानम् ॥४७॥

**स्वाहेति चतुर्थाहुतिः -**

इत्यन्तर्यजनं कृत्वा साक्षाद् ब्रह्ममयो भवेत् ।

न तस्य पापपुण्यानि जीवन्मुक्तो भवेद् ध्रुवम् ॥४८॥

**इत्यन्तर्यागः**

**बहिर्यजनम् -**

मूलमन्त्रेणाथ वामे स्वस्य देवाग्रतश्चरेत्

वृत्तेन वेष्टि सम्यक् त्रिकोणं चन्दनाम्भसा ॥४९॥

तद्वहिश्चतुरस्रं च विदध्यान्मत्स्यमुद्रया ।
सम्पूज्य गन्धैर्देवार्घ्यमण्डलाय नमोऽणुना ॥५०॥
अङ्गानि चतुरग्न्यादिकोणेषु पुरतस्तथा ।
दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत् ॥५१॥
आधारेण विना भ्रंशो न तृप्यन्ति च मातरः ।
तस्माद् विधिवदाधारं त्रिपदं वा चतुष्पदम् ॥५२॥
पद्माभं वा त्रिकोणं वा योन्याभं धातुजं तु तत् ।
मूलान्ते वाऽमुकाधारपात्रं संस्थापयामि च ॥५३॥
उक्त्वा शङ्खादिकाधारं मण्डले स्थापयेदथ ।
मं रं धर्मप्रदेत्युक्त्वा वदेद्दशकलात्मकम् ॥५४॥
ङेन्तं वह्नेर्मण्डलं च देवनाम च कीर्तयेत् ।
ततोऽर्घ्यपात्राधाराय नमः प्रोक्त्वा प्रपूजयेत् ॥५५॥
वह्नेर्दश कलाः पूज्यास्तत्र प्रोक्तं प्रदक्षिणम् ।
अस्त्रमन्त्रेण च ततः कनकादिविनिर्मितम् ॥५६॥
अर्घ्यादिपात्रमथवा शङ्खमस्त्राणुना जलैः ।
प्रक्षाल्यामुकदेवार्घ्यपात्रं संस्थापयाम्यहम् ॥५७॥
एवमुक्त्वा तदाधारे संस्थाप्यैवं वदेत् पुनः ।
अर्थप्रदे द्वादशेति कलात्मने वदेत्ततः ॥५८॥
सूर्यमण्डलमुच्चार्य ङेन्तं देवस्य नाम तु ।
अर्घ्यपात्राय च नमो मनुनानेन पूजयेत् ॥५९॥
तत्पात्रमथ तत्रैव भावयेद् भूमिमण्डलम् ।
षट्कोणं तत्र चाङ्गानि पूजयेत्पूर्ववत्ततः ॥६०॥

कला द्वादश सूर्यस्य प्रोक्ता: [1] पात्रे प्रदक्षिणम् ।
ततः सुधामयैस्तोयैर्मूलान्ते मातृकां पठेत् ॥६१॥
विलोमां पूरयेत्तस्मिन् पूजको मनुनाऽमुना ।
[2] ॐ शं कामप्रदेत्युक्त्वा षोडशेति कलात्मने ॥६२॥
[3] नमः पञ्चदशार्णोऽयं मन्त्रः शङ्खप्रपूरणे ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपान् ॥६३॥
दूर्वा इत्यर्घ्यपात्रस्य प्रोक्तं द्रव्याष्टकं सुराः ।
तत्तोयं गन्धपुष्पाद्यैः पूजयित्वा समर्पयेत् ॥६४॥
कलाषोडशकं चान्द्रं पश्चात्सर्वकलासु च ।
प्राणप्रतिष्ठां कुर्वीत पूजान्ते साधकस्ततः ॥६५॥
प्रागवत्तीर्थं समावाह्य मूलमन्त्रेण तत्र तु ।
संयोज्य नेत्रमन्त्रेण पुष्पं न्यस्य [4] शिखाणुना ॥६६॥
प्रदर्श्य गालिनीं मुद्रा मुद्रया धेनुसंज्ञया ।
अमृतीकृत्य विधिवत्सुधाबीजेन साधकः ॥६७॥
ध्यात्वेष्टदेवतां तत्र सकलीकरणं चरेत् ।
अङ्गन्यासेन चास्त्रेण कलयेच्च दिशो दश ॥६८॥
[5] नेत्रमन्त्रेण संवीक्ष्य मुद्रया शङ्खसंज्ञया ।
अवष्टभ्य ततो दीप्यमुद्रया योनिरूपया ॥६९॥
गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम् ।
षडङ्गानि च संपूज्य मन्त्रयेन्मूलमन्त्रतः ॥७०॥

---

[1] तत्र - इति पा. मेरौ ।
[2] क्ष.यम् - इति ख.मा.पा., मेरौ तु ॐ सोममण्डलायेति षोडशेति कलात्मने - इति पाठः ।
[3] अमुकार्घ्यामृतायेति - इति पा. मेरौ ।
[4] शिरोणुना - इति पा. मेरौ ।
[5] तत्र - इति पा. मेरौ

अष्टकृत्वस्ततश्चार्घ्यं च्छादयेन्मत्स्यमुद्रया ।

**गालिन्यादिमुद्राः -**

कनिष्ठाङ्गुष्ठकौ [1] सक्षौ करयोरितरेतरम् ॥७१॥
तर्जनी मध्यमानामासहिता भुग्नवर्जिता ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरिपातिता ॥७२॥
अन्योऽन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ।
तथाच तर्जनी मध्या धेनुमुद्राऽमृतप्रदा ॥७३॥
वाममुष्ट्यन्तरेऽङ्गुष्ठं निवेश्य संहताङ्गुलिम् ।
दक्षिणस्य करस्यैव वामाङ्गुष्ठेन संस्पृशेत् ॥७४॥
शङ्खमुद्रेयमाख्याता विद्वद्भिश्च सुसम्मता ।
मध्यमे कुटिले कार्ये तर्जन्युपरिसंस्थिते ॥७५॥
अनामिके मध्यगते तथैव च कनिष्ठिके ।
सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ॥७६॥
योनिमुद्रा समाख्याता त्रैलोक्योत्पत्तिमातृका ।
दक्षपाणिपृष्ठदेशे वामपाणितलं क्षिपेत् ॥७७॥
अङ्गुष्ठौ चालयेत्पश्चान्मुद्रेयं मत्स्यरूपिणी ।

**इति विशेषार्घ्यविधिः**

**अर्घ्यादिपात्रसंख्या -**

अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत् ॥७८॥
तथाचमनपात्राणि स्युरप्येकतरं भवेत् ।
एकं पात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः ॥७९॥
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे ।
इहलोके च दारिद्र्यं मृते च नरकं व्रजेत् ॥८०॥
ततः साधारकं पात्रं पुरतः स्थापयेद् बुधः ।
तत्पार्श्वे पाद्यपात्रञ्च तत्पार्श्वेऽर्घ्यप्रदानकम् ॥८१॥

---

[1] सक्तौ - इति ख.मा.पा. ।

आचमनीयं च तत्पार्श्वे तद्वामे मधुपर्ककम्।
पुनराचमनीयं च स्नानीयं च क्रमान्न्यसेत् ॥८२॥
तच्छङ्खस्थं जलं किञ्चित्कुम्भतोये विनिक्षिपेत्।
एकैकपात्रं मूलेन ज्येष्ठं कृत्वाऽभिमन्त्रयेत् ॥८३॥
मधुपर्कं च सक्षौद्रं दधि तच्चेन्न लभ्यते।
दध्नि दुग्धं गुडं क्षौद्रे घृतप्रतिनिधिर्नहि ॥८४॥
परमं [1] यत्पदं देवा मधुसंज्ञं तदुच्यते।
[2] तदाऽप्येते येन कर्म तत्प्रोक्तं मधुपर्ककम् ॥८५॥
कांस्यस्य वाऽथ रौप्यस्य [3] शैवे शङ्खवरो हरौ।
महाशङ्खो वाममार्गे [4] स्फाटिकं ग्रहनायकम् ॥८६॥
दक्षिणे प्रोक्षणीपात्रमादायाद्भिः प्रपूरयेत्।
[5] किञ्चिदर्घ्यन्तु संगृह्य प्रोक्षण्यम्भसि योजयेत् ॥८७॥
पुनराचमनीयार्घ्यपात्रं संस्थापयेत्ततः।
पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ॥८८॥
जातीलवङ्गकं कौलैः कृतमाचमनीयकम्।
कुशपुष्पयवव्रीहिवहुमूलतमालकम् ॥८९॥
[6] दापयेत्प्रोक्षणीपात्रं मन्त्रितं प्रणवेन च।
शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ॥९०॥
द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः।
अथार्घ्यादिकपात्राणां फलं वक्ष्ये शुभाशुभम् ॥९१॥
सर्वकामप्रदं स्वर्णं रौप्यमायुः सुतप्रदम्।
सौभाग्यं ताम्रपात्रेण धर्मवृद्धिस्तु मृण्मये ॥९२॥

---

[1] तत्पदं देवि - इति पा. मेरौ।
[2] तदाप्यायनं यत्कर्म - इति पा. मेरौ।
[3] शैवशङ्खवरो - इति पा. मेरौ।
[4] स्फाटिकं ग्रहनायकं - इति पा. मेरौ।
[5] किञ्चिदर्घ्याम्बु - इति पा. मेरौ।
[6] पातयेत्प्रोक्षणीपात्रे ललितम् - इति पा. मेरौ।

नारिकेले देवतुष्टिः पुष्टिदं काचसम्भवम् ।
लक्ष्मीप्राप्तिर्विल्वपात्रे ब्राह्मण्यं ब्रह्मवृक्षजे ॥९३॥
मारणोच्चाटने लौहं[1] स्तम्भः पाषाणजे भवेत् ।
मन्त्रस्याराधने काष्ठं वाममार्गे तु तौम्बिकम् ॥९४॥
रत्नादीनां तु पात्राणि शुभरेखाङ्किताानि च ।
अर्घ्यनैवेद्यपूजार्थं[2] बलिदाने प्रकल्पयेत् ॥९५॥
पात्राणामादरः कार्यः पात्राण्येवोत्तमानि तु ।
बलिहोमक्रियाद्यं हि विना पात्रं न सिद्ध्यति ॥९६॥
षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम् ।
मध्यमं तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम् ॥९७॥
वस्वङ्गुलविहीनं तु न पात्रं कारयेत्क्वचित् ।
नाभिविवररूपाणि पुण्डकरीकाकृतीनि च ॥९८॥
शङ्खनीलोत्पलाभानि पात्राणि परिकल्पयेत् ।
श्वेतादीन्यतिशस्तानि विप्रादीनां क्रमेण च ॥९९॥
सेचयेत्प्रोक्षणीपात्रतोयैर्मूलास्त्रमुच्चरेत् ।
आत्मानं यागवस्तूनि पूजाद्रव्यादिमण्डलम् ॥१००॥
दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ।
[3] योगपीठन्यासदेवाँस्तदा स्थानेषु पूजयेत् ॥१०१॥
मणिपीठे भावनया ततः पूज्या स्वदेवता ।
आत्मानं देवतारूपं ध्यायेन्मूलेन पञ्च तु ॥१०२॥
पुष्पस्याञ्जलयो देवा मस्तके हृदये गुदे ।
पादयोः सर्वगात्रे च पूजयेच्चन्दनादिभिः ॥१०३॥
चतुर्भिरुपचारैश्च नैवेद्यं च निवेदयेत् ।
गुरूपदिष्टविधिना शेषमन्यत्समापयेत् ॥१०४॥

---

[1] स्तम्भे पाषाणजम् - इति पा. भेरौ ।
[2] अञ्चलिदाने - इति पा. भेरौ ।
[3] योगपीठे न्यासदेवांस्तत्स्थानेषु - इति पा. भेरौ ।

प्रोक्षण्यद्भिः प्रयुञ्जीत सर्वमेतत्समाहितः ।
पूजाचक्रं समभ्युक्ष्य बहिर्यागं ततश्चरेत् ॥१०५॥
स्वर्णादिरचिते पात्रे कल्पोक्तं यन्त्रमालिखेत् ।
दक्षिणावर्त्ततो लेख्यं यन्त्रं दक्षिणपूजने ॥१०६॥
वामक्रमेण कौलादौ गुप्तमेतत् प्रकाशितम् ।
पूजायन्त्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च ॥१०७॥
लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ।
वाममार्गे लिखेदाद्यपुष्पेण यदि मन्त्रकम् ॥१०८॥
यदि तल्लभ्यते देव लाक्षारससमन्वितम् ।
कस्तूरीकुङ्कुमाक्तं च वटीकृत्य तु गोपयेत् ॥१०९॥
यन्त्रराजं समालिख्य पूजयेद्यदि साधकः ।
षण्मासं पूजनात्तत्र त्वरितं सिद्धिमाप्नुयात् ॥११०॥
युवत्या अप्रसूताया अभावे गृह्यते रजः ।
तदभावे तरुण्यास्तु नीरोगाया रजो मतम् ॥१११॥
द्रावणाम्बुजनिश्चैव संयोगोत्थोऽथवा भवेत् ।
तदभावे तु रुधिरं महिषस्य प्रशस्यते ॥११२॥
तदभावे तु कुसुमं ग्राह्यं चैवापराजितम् ।
तस्योर्ध्वभागे निःक्षिप्य घर्षितं रक्तचन्दनम् ॥११३॥
तदागतं मूलमार्गात्तेन यन्त्रं समालिखेत् ।
तदभावे तु सुरया संघृष्टरक्तचन्दनैः ॥११४॥
यथोक्तं विलिखेद्यन्त्रं तुष्टा भवति देवता ।
नवमो न प्रकाशोऽस्ति वाममार्गे सुरोत्तमाः ॥११५॥

**यन्त्रस्याऽऽवश्यकता –**

यन्त्रं मन्त्रमयं प्रोक्तं यन्त्रात्मा देवतेति च ।
देहात्मनोर्यथा भेदो यन्त्रदैवतयोस्तथा ॥११६॥
शरीरमेव जीवस्य दीपस्य स्नेहवत्तिप्रिये ।
सर्वेषामपि देवानां तथा यन्त्रं प्रतिष्ठितम् ॥११७॥

आदौ लिखेद्यन्त्रराजं देवतायाश्च विग्रहम् ।
कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ॥११८॥
यन्त्रमित्याहुरेतस्मिन्देवः प्रीणाति तत्त्वतः ।
विना यन्त्रेण पूजायां देवता न प्रसीदति ॥११९॥

**मतान्तरम् -**

वामे कौले यन्त्रपीठे मूर्तौ पूजा च दक्षिणे ।

**पीठपूजा -**

एवं पीठं विनिर्माय पूजयेत्पीठदेवताः ॥१२०॥
गुरुपङ्क्तिरुदक्पूज्या महागणपतेः [1] परम् ।
पूजयेदतलादीनि देवस्याधस्तु सप्त च ॥१२१॥
मण्डूकश्चापि तस्योर्ध्वे रुद्रकालानलस्ततः ।
मूलप्रकृतिमाधारशक्तिं कूर्ममनन्तकम् ॥१२२॥
वराहं तस्य दंष्ट्राग्रे पृथिवीमर्चयेत्पुनः ।
तस्यां सुधार्णवं [2] तस्मिन्द्वीपं च नवरत्नजम् ॥१२३॥
स्वर्णशैलं च तन्मध्ये तदूर्ध्वं नन्दनं वनम् ।
तन्मध्ये कल्पवृक्षञ्च तन्मध्ये रत्नभूमिकाम् ॥१२४॥
स्वर्णप्राकारमप्यन्तस्तन्मध्ये रत्नमण्डपम् ।
तस्यान्तः [3] स्वर्णवेदीञ्च रत्नसिंहासनं पुनः ॥१२५॥
वेदीमध्ये भावनीयं पूजयेच्चन्दनादिना ।
पूजाचक्राधारपीठं सिंहासनमिति स्मरेत् ॥१२६॥
तत्पादेषु यजेत्सम्यगाग्नेयादि शिवान्तकम् ।
धर्मं वृषतनुं रक्तं ज्ञानकृष्णं च सिंहवत् ॥१२७॥
वैराग्यं भूतवत्पीतमैश्वर्यं कृष्णहस्तिवत् ।
अधर्मादींश्चित्रवर्णान् पीठस्याधः समर्चयेत् ॥१२८॥

---

[1] अवाक् - इति पा. मेरौ ।
[2] दीपम् - इति पा. मेरौ ।
[3] स्वर्णवेदी च - इति पा. मेरौ ।

मायाविद्येच तन्मध्येऽनन्तं [1] तल्पाकृतिं यजेत् ।
तस्य मूर्ध्नि यजेत्पद्ममष्टप्रकृतिपत्रकम् ॥१२९॥
आनन्दकन्दकं संविन्नालं विकारकेशरम् ।
कर्णिकां मातृकारूपां तत्पत्रेषु क्रमाद्यजेत् ॥१३०॥
[2] सिद्धिरष्टौ क्रमात्प्रोक्तास्त्वणिमा च प्रकामता ।
लघिमेशित्वमहिमा वशित्वं प्राप्तिगौरवे ॥१३१॥
अधोऽधः कर्णिकायास्तु सोमः सूर्यस्तथाऽनलः ।
गुणान् सत्त्वादिकाँस्तत्र [3] तद्वदग्नित्रयं यजेत् ॥१३२॥
ब्रह्मविष्णुमहेशाँश्च ततो दिक्षु च मध्यतः ।
ज्ञानं मायां कलां विद्यां परपूर्वं च तत्त्वकम् ॥१३३॥
केशरेषु तथा मध्ये पूर्वादिषु यथाक्रमम् ।
तत्तन्मन्त्रोक्तपीठस्य नवशक्तीः प्रपूजयेत् ॥१३४॥
पीठमन्त्रेण गन्धाद्यै[4]: पीठमध्ये ततोऽर्चयेत् ।
[5] चतुर्थीनामसंयुक्तैः स्वैः स्वैर्दैवतनामभिः ॥१३५॥
मध्ये पुष्पाञ्जलिं दद्यात्पीठमन्त्रेण साधकः ।
मूलमन्त्रं समुच्चार्य षष्ठ्यन्तं पीठनाम च ॥१३६॥
मूर्तिं च कल्पयामीति मूर्तिमध्ये विनिःक्षिपेत् ।
पुनर्मूलं समुच्चार्य देवनाम ततः परम् ॥१३७॥
मूर्तिञ्च पूजयामीति [6] ताः पुष्पेण समर्चयेत् ।
अथेष्टदेवता प्रीत्यै यजेदायतनान्यपि ॥१३८॥
इशेऽजेनेशजशिवा हरावीशेशजेनसाः ।
रवावीशेशजाऽजोमा देव्यां विशिगभास्कराः ॥१३९॥

---

[1] तत्त्वाकृतिम् - इति पा. मेरौ ।
[2] सिद्धीरष्टौ क्रमात्प्रोक्ताः - इति पा. उचित ।
[3] तद्वदग्रे - इति पा. मेरौ ।
[4] पीठं समन्ततोऽर्चयेत् - इति पा. मेरौ ।
[5] नमसा युक्तैः - इति पा. मेरौ ।
६. वौ - इति पा. मेरौ ।

गणेशेऽजेशभादेव्योऽभ्यर्च्या ईशादिकोणतः ।
एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ॥१४०॥
देवताशापमाप्नोति रौरवं नरकं व्रजेत् ।
तन्त्रेण पूजयेद्यन्त्रं स दैवं शापमाप्नुयात् ॥१४१॥
आवासदेवतामेकामर्चयेच्चान्यदेवताम् ।
अन्ययन्त्रेऽन्यपूजा वा देवताशापकारिणी ॥१४२॥
शालग्रामोऽथवा यन्त्रं स्थाप्यं चैकतमं शिवे ।
शालग्रामं तथा यन्त्रं द्वयमेकत्र नार्चयेत् ॥१४३॥
१ वाणलिङ्गं यदा प्राप्तं शालग्रामस्तदा न वै ।
शालग्रामो यदा प्राप्तस्तदा यन्त्रं न पूजयेत् ॥१४४॥
शालग्रामे जीवचक्रे सर्वान् देवान् प्रपूजयेत् ।
यो भावो यस्य वै प्रोक्तस्तेन भावेन तिष्ठति ॥१४५॥
पूजनं बहुमूर्त्तीनामेकपीठे भवेद्यदि ।
पृथक् चन्दनपुष्पाणि धूपदीपादितन्त्रतः ॥१४६॥
खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ।
व्यङ्गेऽनर्हे पशुस्पृष्टे पतिते दुष्टभूमिषु ॥१४७॥
अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिताः ।
दशस्वेतेषु नो कुर्युः सन्निधानं दिवौकसः ॥१४८॥
गणेश-सूर्यविष्ण्वीशदेवीनां पूजनं क्रमात् ।
दश स्थानानि देवानां पूजार्थं कल्पितानि च ॥१४९॥
सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ।
मन्त्रस्तु जीववत्प्रोक्तः प्रतिमाद्यं शरीरवत् ॥१५०॥
सिद्धायामपि सामग्र्यां विना मन्त्रं फलं न हि ।
शिवलिङ्गे मणौ यन्त्रे शालग्रामे घटे रवौ ॥१५१॥

---

१ पंचायतनपक्षी चंद्र्द्वितीयं पूजयंत्सदा ।
दिव्यचक्रं यदा प्राप्तं जीवचक्र तदा न च ॥
जीवचक्रं यदा प्राप्तं बाणलिङ्गं न चार्चयेत् । ख. मा. इत्यधिकः पाठः ।

स्थण्डिलेऽग्नौ मूर्ध्नि हृदि स्थानेष्वेतेषु पूजयेत् ।
भूमावपि कृता पूजा पुत्रायुर्धननाशिनी ॥१५२॥

**ईश्वर उवाच -**

शालग्रामसमुत्पत्तिं शृण्वन्तु परमाद्भुताम् ।
गण्डक्या प्राक्तपस्तप्तं भवन्तु मम देवताः ॥१५३॥
सर्वे पुत्राः सुखं दातुं जनानामिति ते सुराः ।
तस्यास्तु तपसा हृष्टा ब्रह्मविष्णुमहेश्वराः ॥१५४॥
वरं दातुं समुद्युक्ता वव्रे सा स्वस्य पुत्रताम् ।
अशक्तास्तं वरं दातु तथा शप्तास्तया क्रुधा ॥१५५॥
प्रवारणं मम सुराः कृतं यस्मात्पुनः पुनः ।
कीटयोनिं [1] प्रपद्येथाः क्रुधा ते ह्याशपँश्च ताम् ॥१५६॥
अविचार्य वयं शप्तास्त्वया यत्तपसोद्धते ।
तेन कर्मविपाकेन जडा कृष्णा नदी भव ॥१५७॥
अन्योऽन्यशापं श्रुत्वेत्थं महाकोलाहलोऽभवत् ।
प्रकम्पिताः सुराः सा च ब्रह्माणं ते व्यजिज्ञपन् ॥१५८॥
ब्रह्मंस्त्राहि महाशापादन्योऽन्यपतितान्क्रुधा ।
इति देववचः श्रुत्वा ब्रह्मा शङ्करमब्रवीत् ॥१५९॥
शिवः प्रोवाच धातारमहं संहारकारकः ।
त्वं सृष्टिकर्ता विष्णुस्तु पालको बुद्धिमत्तरः ॥१६०॥
स प्रष्टव्यो यथासौख्यमुभयोः शं भवेदिति ।
इति माहेश्वरं श्रुत्वा वचनं विष्णुरब्रवीत् ॥१६१॥
शृणु ब्रह्म महादेव शृणु देवि गजानन ।
मद्गणौ ब्राह्मणौ ग्राहमातङ्गौ शापतोऽत्र तु ॥१६२॥
भविष्यतस्तयोर्मोक्षं करिष्यामि कलेवरम् ।
शीर्णं भविष्यति यदा तन्मेदोमज्जसम्भवाः ॥१६३॥

---

[1] प्रपद्यध्वम् - इति पा. उचित ।

पाषाणान्तर्गताः कीटा वज्राख्याः प्रभविष्वथ ।
अत्रैव गण्डकी पुण्या गङ्गातुल्या महानदी ॥१६४॥
गण्डक्यां गिरिराजस्य दक्षिणे दशयोजनम् ।
विस्तीर्णं तन्मतं क्षेत्रं पुण्यक्षेत्रं महीतले ॥१६५॥
चक्रतीर्थमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ।
[1] शालग्रामगता देवा देवद्वारावती गता ॥१६६॥
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ।
सर्वदेवप्रीतिकरा भुक्ति-मुक्तिप्रदायिनी ॥१६७॥
भवन्त्वस्यान्तु पाषाणा ये तदन्तर्गताः सुराः ।
पार्थिवांशं विना सर्वे वज्रकीटा भवन्त्विति ॥१६८॥
अनेनैव तु गण्डक्याः पुत्रत्वं भवतामपि ।
भविष्यति तदन्तश्च चिह्नं तद्देवतोद्भवम् ॥१६९॥
विज्ञाय येऽर्चयिष्यन्ति सा प्रीता तस्य देवता ।
न यन्त्रस्य न मूर्तेश्च न वृक्षस्यापि पूजनात् ॥१७०॥
सन्तोषो जायते तेषां गण्डक्यश्मार्चनाद्यथा ।
इति विष्णुवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥१७१॥
कीदृक् पूज्या शिला विष्णो किञ्चिह्ना कस्य वल्लभा ।
किं फलं चाधिकारी कः केन मार्गेण तद् वद ॥१७२॥
इति ब्रह्मवचः श्रुत्वा विष्णुर्वचनमब्रवीत् ।
स्वीयवर्णा शिला पूज्या ब्राह्मणाद्यैः सुखाप्तये ॥१७३॥
स्निग्धा शिला मन्त्रसिद्धं रुक्षाऽसिद्धिं करोति च ।
मेचका कीर्तिदा धौताङ्गारवत् सा यशोहरा ॥१७४॥
पाण्डुरा पापशमनी मलिना पापधीकरा ।
पीता पुत्रफलं [2] दद्यादारवर्णा सुतान् हरेत् ॥१७५॥

---

[1] शालग्रामशिला यत्र यत्र द्वारावती शिला. - इति पा. मेरौ । अयं पाठः समुचितो भाति ।
अयं पाठः समुचितो भाति ।
[2] दद्यादाम्रवर्णा - इति पा. मेरौ ।

नीला संदिशते लक्ष्मीं धूमाभा हरते मतिम् ।
रोगप्रदा रक्तवर्णा सिन्दूराभा महाकलिम् ॥१७६॥
दारिद्र्यकारिणी वक्रा समा सर्वार्थसाधिका ।
स्थूला निहन्ति चैवायुः सूक्ष्मा १ स्वल्पमृतिं हरेत् ॥१७७॥
पूजाफलं लाञ्छितया निष्फलं २ लाञ्छितं विना ।
कपिला चित्तवैकल्यं नेत्ररोगञ्च कर्बुरा ॥१७८॥
३ भग्ना भङ्गकरी ज्ञेया वहुचक्रावमानताम् ।
लक्षणान्तरहीना चेदेकचक्रा वियोगताम् ॥१७९॥
वृहन्मुखी कलत्रघ्नी वृहच्चक्रा सुतान्हरेत् ।
संलग्नचक्रा त्वसुखं वद्धचक्रा महागदम् ॥१८०॥
भग्नचक्रा तु दारिद्र्यं सर्वनाशं त्वधोमुखी ।
कुष्ठादिकं व्यालमुखी विषमा विविधापदम् ॥१८१॥
विकृताऽऽवर्तनाभिश्च ४ विकारात् कुरुते वहून् ।
वंशच्छेदो गृहस्थानां नारसिंह्यां प्रजायते ॥१८२॥
रेखावर्त्ता दुःखदात्री यथा सूक्ष्मा तथा५ सुखम् ।
यथा स्निग्धा तथा लक्ष्मीस्तद्विभेदानतः शृणु ॥१८३॥
लक्ष्मीहरिः स विज्ञेयो यत्र पद्म सचक्रकम् ।
केवला वनमाला वा गृहस्थानामभीष्टदः ॥१८३॥
वासुदेवः स विज्ञेयो यद्द्वारे चक्रयुग्मकम् ।
निरन्तरं समं वाऽपि स श्वेतः पापनाशनः ॥१८५॥
संकर्षणः स विज्ञेयः प्राक्पश्चाच्चक्रयुग्मकम् ।
संलग्नं पूर्वभागस्थं ६ महद्रक्तः सुशोभनः ॥१८६॥

---

१ मतिम् - इति पा. मंरी ।
२ लाग्छनम् - इति पा. मंरी ।
३ लग्नाभग्ना कलिं दद्याद् वहुचक्रा प्रधानताम् - इति पा. मंरी ।
४ विज्ञानं कुरुते बहु - इति पा. मंरी ।
५ तथामृतम् - इति पा. मंरी ।
६ महद्रत्नं सुशोभनम् - इति पा. मंरी ।

प्रद्युम्नः सूक्ष्मचक्रः स्याच्छिद्रं दीर्घं विचित्रितम् ।
शुषिरान्तर्बहुच्छिद्रं पीतमिष्टप्रदायकम् ॥१८७॥
अनिरुद्धस्तु नीलाभो वर्तुलश्चातिशोभनः ।
रेखाद्वयं तु तद्द्वारि पृष्ठं पद्मेन लाञ्छितम् ॥१८८॥
केशवः स तु विज्ञेय एकं वा द्वयमेव वा ।
प्रागवा पश्चाच्च चक्रं स्याच्चतुःकोणः स भाग्यकृत् ॥१८९॥
नारायणः श्यामवर्णो नाभौ चक्रं तथोन्नतम् ।
दीर्घरेखासमायुक्तं दक्षिणे सुकरं पृथु ॥१९०॥
हरिरूपा शिला सा स्याद्यस्या उर्ध्वं मुखं भवेत् ।
हरिवद्दृश्यते द्वारं भुक्तिमुक्तिप्रदा तु सा ॥१९१॥
परमेष्ठी स विज्ञेयः पद्मचक्रान्वितस्तु यः ।
विल्वाकृतिश्च शुक्लाभः पृष्ठे च सुषिरं महत् ॥१९२॥
विष्णुस्तु कृष्णवर्णः स्यात्स्थूले चक्रे [1] सुशोभने ।
द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः ॥१९३॥
नरसिंहस्तु कपिलः पृथुवक्त्रो बृहन्मुखः ।
त्रयो वा पञ्च वा तत्र विन्दवो गृहिणां न सत् ॥१९४॥
कपिलो नरसिंहस्तु गुडलाक्षानिभो भवेत् ।
[2] स्थूलवक्त्रं द्वयं मध्ये द्वारे रेखा सुशोभना ॥१९५॥
महानृसिंहो विज्ञेयः पूर्वोक्तैर्लक्षणैर्युतः ।
रेखाश्चकेशराकारा मुखं दीर्घं भयानकम् ॥१९६॥
लक्ष्मीनृसिंहो विज्ञेयश्चतुश्चक्र[3] त्रिबिन्दुकः ।
पूर्वोक्तलक्षणैर्युक्तो वनमालाविराजितः ॥१९७॥
वराहोऽसौ शक्तिलिङ्गं चक्रे च विषमे तथा ।
इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितो भवेत् ॥१९८॥

---

[1] शुभानने - इति पा. मेरौ ।
[2] स्थूलचक्रद्वयं मध्ये - इति पा. मेरौ ।
[3] सबिन्दुक - इति पा. मेरौ ।

पृथ्वी [1] वाराहनाम्नी सा या वराहाकृतिः शिला ।
[2] आभुग्ना चैव रेखैका गतराज्यप्रदायिका ॥१९९॥
मत्स्याख्या सा शिला ज्ञेया बिन्दुत्रयविभूषिता ।
कांस्याभा सा स्वर्णसमा दीर्घा सा भुक्तिमुक्तिदा ॥२००॥
कूर्माख्या तु शिला पृष्ठे वर्तुला चोन्नता भवेत् ।
हरितं वर्णमाधत्ते कौस्तुभेन च चिह्निनता ॥२०१॥
शिलाकूर्मः स विज्ञेयः कूर्माकारस्तु यो भवेत् ।
चक्राङ्किता च या वृत्ता पूजिता सा पदप्रदा ॥२०२॥
हयग्रीवोऽङ्कुशाकारा रेखा चक्रसमीपगा ।
बहुविन्दुसमायुक्तं पृष्ठं नीरदनीलकम् ॥२०३॥
शेषः सौम्यो हयग्रीवो हयग्रीवसमा शिला ।
दीर्घया रेखया युक्ता रेखा वा तादृशी भवेत् ॥२०४॥
हयशीर्षः स विज्ञेयो मुखं यस्य हयाकृति ।
पद्माकृतिर्भवेद्वाऽपि साक्षमालं शिरस्तथा ॥२०५॥
वैकुण्ठस्तिलवर्णाभश्चक्रमेकं तथा ध्वजः ।
द्वारोपरि तथा रेखा [3] पूजाकारा सुशोभना ॥२०६॥
श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ।
कदम्बकुसुमाकारो रेखापञ्चकभूषितः ॥२०७॥
वामनः स तु विज्ञेयो योऽतिह्रस्वश्च वर्तुलः ।
अतसीकुसुमप्रख्यो विन्दुनोपरिशोभितः ॥२०८॥
दधिवामननामा तु ऊर्ध्वाधश्चक्रसंयुतः ।
[4] महाद्युतिरतिह्रस्वः सुभिक्षाः क्षेमदायकः ॥२०९॥

---

[1] वराह पा. मेरौ ।
[2] अभुग्ना पा. मेरौ ।
[3] पूजकाय सुशोभनः - इतिपा. मेरौ ।
[4] महाद्युतिश्च ह्रस्वाश्च - इति पा. मेरौ ।

सुदर्शनस्तथा देवः श्यामकर्णो महाद्युतिः ।
वामपार्श्वे तथा चक्रं रेखैक्येन तु दक्षिणा ॥२१०॥
सहस्रार्जुननामाऽसौ नानारेखामयी भवेत् ।
[1] चक्राकारा यत्र पङ्क्तिः स नष्टद्रव्यदायकः ॥२११॥
स्थूलदामोदरो यस्य मध्ये चक्रं प्रतिष्ठितम् ।
दूर्वाभो द्वारसंकीर्णः पीतरेखो धनप्रदः ॥२१२॥
राधादामोदरो ज्ञेयो यश्चचक्रद्वयलाञ्छितः ।
सूक्ष्मं भवेच्च विवरं पूजितः सुखदः सदा ॥२१३॥
अनन्तो बहुवर्णः स्यान्नागभोगेन चिह्नितः ।
अनेकचक्रसम्भिन्नः सर्वकामफलप्रदः ॥२१४॥
पुरुषोत्तमनामाऽसौ यस्य दिक्षु विदिक्षु च ।
ऊर्ध्वान्यास्यानि दृश्यन्ते पुरुषार्थफलप्रदः ॥२१५॥
योगेश्वरः स विज्ञेयो लिङ्गं यस्य शिरोगतम् ।
ब्रह्महत्यादिपापानां नाशको योगसिद्धिदः ॥२१६॥
पद्मनाभस्तथा रक्तः पङ्कजच्छत्रसंयुतः ।
[2] तुलस्या पूजितो नित्यं दरिद्रस्त्वीश्वरो भवेत् ॥२१७॥
रश्मिज्वालो हिरण्यास्यश्चन्द्राभः स्फटिकोपमः ।
अथवा जायते नानास्वर्णरेखाभिरन्वितः ।२१८॥
गरुडः स [3] तु विज्ञेयो मध्यपक्षद्वयान्वितः ।
सुदीर्घा दृश्यते रेखा स सर्पविषनाशकः ॥२१९॥
जनार्दनः स विज्ञेयः केवलानि स्फुटानि च ।
यस्योदरे च चत्वारि चक्राणि पितृतृप्तिकृत् ॥२२०॥
लक्ष्मीनारायणो ज्ञेयो वनमालाङ्कितोदरः ।
सूक्ष्मद्वारश्चतुश्चक्रो भुक्तिमुक्तिप्रदायकः ॥२२१॥

---

[1] वक्राकारा यत्र पंक्तिः - इति पा. मेरौ ।
[2] तुलस्या पूजयित्वा तं दरिद्रोऽपीश्वरो भवेत् - इति पा. मेरौ ।
[3] स. विभुर्ज्ञेयो - इति पा. मेरौ ।

हृषीकेश: स विज्ञेयो योऽर्धचन्द्राकृतिर्भवेत् ।
तमभ्यर्च्य लभेत्स्वर्गं विषयाँश्च समीहितान् ॥२२२॥
लक्ष्मीनरहरिर्ज्ञेय: कृष्णवर्ण: सविन्दुक: ।
वामपार्श्वे समे चक्रे गृहस्थाभीष्टदायक: ॥२२३॥
त्रिविक्रमस्तु विज्ञेय: श्यामवर्णो महाद्युति: ।
वामपार्श्वे चक्रयुग्ममेका रेखा तु दक्षिणे ॥२२४॥
कृष्णो ज्ञेय: शिला कृष्णा [1] सचक्रा वा विचक्रिका ।
प्रदक्षिणावर्तकृतवनमालाविभूषिता [2] ॥२२५॥
चतुर्मुख: स विज्ञेयो द्वे चक्रे मध्यदेशत: ।
चतस्र: पार्श्वगा रेखा वेदशास्त्रागमप्रद: ॥२२६॥
विष्णोर्भेदा इमे प्रोक्ता अत्रैवाऽऽवाहयेद्धरिम् ।
विसर्जयेच्च पूजान्ते प्रतिष्ठां नात्र कारयेत् ॥२२७॥
शालग्रामा: समा: पूज्या: समेषु द्वितयं नहि ।
असमानैव पूज्यन्ते [3] एक: पूज्यतमो मत: ॥२२८॥
शिला द्वादश यो नित्यं भक्त्या सम्पूजयेन्नर:।
दिने दिने धर्मवृद्धि: पापनाश: प्रजायते ॥२२९॥
शालग्रामशतं यस्तु भक्त्या सम्पूजयेन्नर: ।
शतं दिनानि यस्तेन कृतकाम: स सिद्ध्यति ॥२३०॥
शालग्रामा मत्स्वरूपा: शृणु तेषां तु लक्षणम् ।
यत्सेवनाद् भवेदिष्टमिह लोके परत्र च ॥२३१॥
शिवनाम: स विज्ञेय: स लिङ्गाकारतां गत: ।
[4] स्वयंभूलिङ्गाकृतिमान् मन्त्रसिद्धिविधायक: ॥२३२॥

---

[1] सचक्रं वा विचक्रक: - इति पा. मेरौ ।
[2] वनमालाविभूषित: - इति पा. मेरौ ।
[3] सर्वकामफलार्थिभि: - इति पा. मेरौ ।
[4] स्वयन्तु - इति पा. मेरौ ।

[1] त्रैयम्बकः स विज्ञेयो यो बिन्दुत्रयभूषितः ।
शूलाकारा तथा रेखा गतपुंस्त्वप्रदायकः ॥२३३॥
धूर्जटिः स तु विज्ञयो यत्र रेखा [2] जटासमाः ।
तिस्रो यत्र प्रदृश्यन्ते सोऽर्चितो ज्ञानदायकः ॥२३४॥
शम्भुस्तु पाण्डुरो ज्ञेयो बिन्दुः कृष्णस्तु मस्तके ।
विल्वप्रमाणस्तेजस्वी पूजितः स्त्रीवशङ्करः ॥२३५॥
ईश्वरः स तु विज्ञेयो रक्तो बिन्दुस्तु मस्तके ।
एकचक्रो द्विचक्रो वाऽभ्यन्तरेऽधश्च गोपदम् ॥२३६॥
मृत्युञ्जयः स विज्ञेयो ह्यपमृत्युविनाशकः ।
अधश्चक्रं तदूर्ध्वं च श्वेता रेखा त्रिशूलभाक् ॥२३७॥
चन्द्रशेखरनामासावर्द्धचन्द्राकृतिस्तु [3] के ।
मध्यचन्द्रद्वयं तस्य सेवनाद्रोगनाशनम् ॥२३८॥
रुद्रः स एवं विज्ञेयः कपिलो मूर्ध्नि लक्षितः ।
चक्रमध्ये भवेद्रेखा मारयेद्रिपुसन्ततिम् ॥२३९॥
शालग्रामानथो वक्ष्ये [4] शक्तिकीटसमुद्भवान् ।
येषां पूजनतो देवी भवानी सुप्रसीदति ॥२४०॥
श्रीविद्या सा तले चक्रमूर्ध्वं छत्रं प्रदृश्यते ।
बाह्यघटाङ्कितो मूर्धा स्निग्धा [5] श्यामाऽखिलेष्टदा ॥२४१॥
महाकाली तु सा ज्ञेया योनिचिह्नसमन्विता ।
रुक्षा स्थूला चिपिट्टा च वाममार्गेण पूजयेत् ॥२४२॥
वाराही तु वराहस्य चिह्नेनान्तःसमन्विता ।
स्नापिता बलिरक्तैः सा यदर्थं भक्षयेच्च तम् ॥२४३॥

---

[1] त्र्यम्बकः स तु - इति पा. मेरौ ।
[2] वातायुष्ट्वप्रदायकः - इति पा. मेरौ ।
[3] वर्द्धचन्द्रस्तु मस्तके - इति पा. मेरौ ।
[4] शाक्तान् कीटसमुद्भवान् - इति पा. मेरौ ।
[5] सेवाऽखिलेष्टदा - इति पा. मेरौ ।

द्विच्छिद्राद्या: सर्वशिलास्त्रिकोणेनाङ्किताश्च या: ।
यदायुधाकृतिश्चार्धं तान्देवीं तत्र निर्दिशेत् ॥२४४॥
देवी शिला सचक्रा या दक्षमार्गेण तां यजेत् ।
सार्चिता वाममार्गेण लोकद्वयसुखावहा ॥२४५॥
या चक्ररहिता देवी शिलां तां वामतोऽर्चयेत् ।
स्पर्श: कार्यो न विप्राणां न गवां क्षोभकृद् भवेत् ॥२४६॥
सौरी शिला दुर्लभैव प्राय: कलियुगे सुरा: ।
स्फटिकाभा भवेत्सा तु घर्मयुक्ता विमुञ्चति ॥२४७॥
१ तुलस्यूर्ध्वस्थिता वह्निं साऽभिषिक्ता प्रवर्षणम् ।
कुरुते शपथो २ मिथ्याकृतोऽस्यां कुष्ठकारक: ॥२४८॥
गणेश: स तु विज्ञेयो य: ३ स्वशुण्डाङ्कितो भवेत् ।
शुण्डाकारा शिला वाऽपि गजाननसमाऽपि वा ॥२४९॥
यस्या मध्ये महच्चक्रं सूक्ष्मचक्रं च यद्दिशि ।
सा शिला तस्य दिक्पस्य संख्या तद्दिशि राज्यदा ॥२५०॥
अर्द्धचन्द्राकृतिर्यत्र दृश्यते शकलद्वयम् ।
सा त चन्द्रशिला त्र्यस्रयुक्ता भौमशिला मता ॥२५१॥
वाणाकारेण चिह्नेन ज्ञेया बुधशिला सुरा: ।
दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता ॥२५२॥
पञ्चकोणा तु शुक्रस्य चापाकारा शनेर्मता ।
शूर्पाकारा तु राहो: स्यात्केतोस्तु ध्वजरूपिणी ॥२५३॥
प्राप्ते कलियुगे घोरे वामाचारे विमिश्रिते ।
भस्याभक्ष्यविचारादिरहिते म्लेच्छसङ्कुले ॥२५४॥
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्जिते ।
क्व शिष्य: क्व गुरुर्मन्त्र: क्व जप: क्व च सिद्धय: ॥२५५॥

---

१ सूर्यस्योर्ध्वस्थितम् - इति पा. मेरौ ।
२ मिथ्याकृते स्यात्कुष्ठकारिका - इति पा. मेरौ ।
३ यस्तु - इति पा. मेरौ ।

अयुताब्दे कलेर्याते त्यजेद्विष्णुशिला महीम् ।
[1] तदर्धा जाह्नवीतोयं तदर्धा देवता शिला: ॥२५६॥
जप एवं कलौ श्रेयाञ्छालग्रामार्चनं तथा ।
शालग्रामे तथा यन्त्रे सहसैव प्रसीदति ॥२५७॥
शालग्रामे तथा यन्त्रे विद्यमाने महेश्वरि ।
देव: कुत्र वसेद्देवि स्थानद्वितयकं भवेत् ॥२५८॥
शालग्रामो भवेद्यन्त्रं शालग्रामो गृहं भवेत् ।
यन्त्रं तु गृहमित्युक्तं गृहस्था देवता मता ॥२५९॥
प्रतिमा च प्रकर्तव्या यथोक्ता शुभलक्षणा ।
दिव्यचक्रे जीवचक्रे शालग्रामे तथैव च ॥२६०॥
वाणलिङ्गे महेशानि नावाहनविसर्जने ।

**आवाहनादिकम् -**

सूर्यार्घ्यदानसमये दानं विभवत: परम् ॥२६१॥
आवाहनादिकं कुर्यान्मूर्त्यादौ [2] नवधा तु तत् ।
आदावावाहनं कार्यं त्रिर्जपेन्मूलमन्त्रकम् ॥२६२॥
स्वलोकात्सूक्ष्मरूपेण देव आगत्य मूर्तिषु ।
स्थित एवं भावयित्वा सुषुम्णावर्त्मना सुधी: ॥२६३॥
आनीय तेज: स्वस्थानान्नासिकारन्ध्रनिर्गतम् ।
करे पुष्पाञ्जलौ स्थाप्यं तद्दद्याद्देवमूर्धनि ॥२६४॥
देवस्य तेजस्तन्मूर्तौ आवाहन्याख्यमुद्रया ।
स्थापयेदुच्चरन्मूलमेतदावाहनं मतम् ॥२६५॥
विभोर्निवेशनं यन्त्रे स्थापनं कथितं बुधै: ।
तत: संस्थापनं कुर्यादिह तिष्ठेह तिष्ठ च ॥२६६॥
मूलान्ते देवतानाम तस्यान्ते च पठेदिति ।
आस्थापनीयमुद्रां च दर्शयित्वा विभावयेत् ॥२६७॥

---

[1] तदर्धं जाह्नवीतोयं तदर्धं देवताशिला - इति पा. मेरौ ।
[2] त्रिविधा तु तत् - इति पा. मेरौ ।

[1] जातः स्थिरो देव इति पश्चात् संप्रार्थयेदिति ।
देवेश भक्तिसुलभ सर्वावरणसंयुत ॥२६८॥
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ।
एवं संप्रार्थ्य देवेशं सन्निधापनमाचरेत् ॥२६९॥
पूजां प्रयुज्यमानान्तु गृहीत्वाऽनुग्रहादिकम् ।
कर्त्तुं सामर्थ्यमस्यास्तु तत्सान्निध्यं प्रवक्ष्यते ॥२७०॥
मूलमन्त्रं समुच्चार्य संबुध्येत्तां च देवताम् ।
इह त्वं सन्निधेहीति द्विरुक्त्वा स्वस्य सन्निधौ ॥२७१॥
स्थितं देवं तोषयेच्च सन्निधापनमुद्रया ।
आकर्मकाण्डपर्यन्तं सान्निध्यमेहि भो वदेत् ॥२७२॥
ससन्निरोध उद्दिष्टो भक्तितो मन्त्रविस्तरैः ।
सन्निरोधं ततः कुर्यान्मूलमुच्चार्य देवताम् ॥२७३॥
सम्बुद्ध्य तां समुच्चार्य सन्निरुद्धो भवेति च ।
द्विरुच्चरेत् कृपापूर्णां भक्तिभावनिरोधिताम् ॥२७४॥
प्रतिमायां [2] स्थिरीजातां देवतामिति चिन्तयेत् ।
सम्मुखीकरणं कुर्यान्मूलमुच्चार्य देवताम् ॥२७५॥
सम्बुद्ध्य तां [3] वदेतश्च पश्चात् संमुखो भव इत्यपि ॥
ध्यायेत्स्वसंमुखं देवं सुप्रसन्नाननाम्बुजम् ॥२७६॥
संमुखीकरणीं मुद्रां दर्शयेदिति तत्स्मृतम् ।
आनन्दायतनं तत्त्वं सच्चिदानन्दलक्षणम् ॥२७७॥
तदत्र सकले व्याप्तं ध्येयं स्यादवगुण्ठनम् ।
ततोऽवगुण्ठनं कुर्यान्मूलमुच्चार्य [4] देवताम् ॥२७८॥
सम्बुध्य तामवगुण्ठितो भवेति प्रदर्शयेत् ।
अवगुण्ठनमुद्रां च दर्शयेच्चिन्तयेदिति ॥२७९॥

---

[1] या तु स्थिरा देवतेति - इति पा. मेरौ ।
[2] स्थिरं यातम्- इति पा. मेरौ ।
[3] वदेत्पश्चात् - इति ख.मा.पा. ।
[4] मन्त्रवत् - इति पा. मेरौ ।

भक्त्या संमोहितं देवं विस्मयोत्फुल्ललोचनम् ।
सकलीकरणं चैतद्देवस्य हृदयादिषु ॥२८०॥
षडङ्गमन्त्रान् विन्यस्य मूलमुच्चार्य देवताम् ।
सम्बुध्यन्ताञ्च सकलीकृतो भव वदेत्ततः ॥२८१॥
ध्यायेदङ्गानि देवे तु प्रतिष्ठा अङ्गदेवताः ।
यस्माद् भिन्नस्वभावानां पदभिन्नं प्रयोजनम् ॥२८२॥
अङ्गानामङ्गिना सार्धं सकलीकरणाद् भवेत् ।
अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् ॥२८३॥
अमृतीकरणं वक्ष्ये पीठे संस्थाप्य देवताम् ।
बद्ध्वा सम्यग्धेनुमुद्रां देवमूर्ध्नि प्रवर्षणम् ॥२८४॥
जायते चामृतश्चेति ध्यायन्नर्घ्योदकेन च ।
त्रिःसिञ्चेन्मूलमन्त्रेण [१] दीपिनी मन्त्रतस्त्रिधा ॥२८५॥
अकारादिक्षकारान्तमातृकाभिस्त्रिधा पुनः ।

**दीपिनीमन्त्रः -**

वाग्भवं वदयुग्मं च वाग्वादिनि च वाग्भवम् ॥२८६॥
क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभमित्यपि ।
कुरु युग्मं कामबीजं [२] सौः मोक्षं कुरुयुग्मकम् ॥२८७॥
प्रासादश्च [३] पराप्रासादः सप्तत्रिंशदक्षरः ।
दीपिनी-मनुराख्यातो[४] देवतेजोऽभिवृद्धिकृत् ॥२८८॥
मूलं संबोधनान्तं च देवनामामृतीकृतः ।
[५] भवेहि च वदेदित्थममृतीकरणं स्मृतम् ॥२८९॥
क्षमा तस्यापराधानां विज्ञेया परमीकृतिः ।
परमीकरणं वक्ष्ये महामुद्रां च बन्धयेत् ॥२९०॥

---

[१] दीपिनीमन्त्रमन्त्रितम् - इति पा. मेरौ ।
[२] ॐ - इति पा. मेरौ ।
[३] पुनः प्रासादः - इति पा. मेरौ ।
[४] देवताया हि वृद्धिकृत् - इति पा. मेरौ ।
[५] भवेति च - इति पा. अन्यत्र ।

उच्चार्य मूलं देवं च पूर्वपत्परमीकृतिः ।
कृतो भवेति च प्रोच्य ध्यायेद्देवस्य मस्तके ॥२९१॥
[1] परमामृतवृष्टिञ्च देवस्य हृदयं स्पृशन् ।
कुर्यात्प्राणप्रतिष्ठां च मम स्थाने वदेत्तथा ॥२९२॥
देवतानामशेषं तु तत् सर्वं [2] प्राग्वदेव हि ।

**आवाहनादिमुद्रालक्षणम् –**

हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणोः ॥२९३॥
अङ्गुष्ठौ निःक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥
अधोमुखी त्वियं वै स्यात्स्थापनीति निगद्यते ॥२९४॥
उच्छ्रिताङ्गुष्ठमुष्ट्यास्तु योगात्सन्धापनी मता ।
अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधनी मता ॥२९५॥
उत्तानमुष्टियुगला सम्मुखीकरणी मता ।
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ॥२९६॥
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ।
देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः ॥२९७॥
अमृतीकरणं धेनुमुद्रया सोक्तैव ............।
अन्योऽन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुलिः ॥२९८॥
महामुद्रेयमुदिता परमीकरणे प्रिये ।
एताः प्रयोजयेन्मुद्रा देवताऽऽह्वानकर्मणि ॥२९९॥
तत्तद्दैवतकल्पोक्तास्ततो मुद्राः प्रदर्शयेत् ।
ॐ क्लीमिति तु बीजाभ्यां मुद्राया बन्धनं स्मृतम् ॥३००॥
दर्शयेन्मूलमन्त्रेण हंसबीजेन संत्यजेत् ।
[3] मुदं स्वरूपलाभाभ्यां देहद्वारेण चात्मनः ॥३०१॥

---

[1] परमामृतवृद्धिञ्च - इति पा. मेरौ ।
[2] प्राग्वत्तदेव हि - इति पा. मेरौ ।
[3] मुदं स्वां पुरयन्त्यध्वा - इति पा. मेरौ ।

[1] या अर्पयन्त्यो यत्नेन मुद्रास्ताः शक्तयो मताः ।
मोदयन्ति ग्रहादिम्यः पापौघं द्रावयन्तिच ॥३०२॥
मोदनं द्रावणं यस्मादतो मुद्राः प्रकीर्तिताः ।
यथा वालस्याभिनयं दृष्ट्वा हृष्यन्ति मातरः ॥३०३॥
तथा भक्तकृतां मुद्रां दृष्ट्वा हृष्यन्ति देवताः ।
न जातु दर्शयेन्मुद्रां महाजनसमागमे ॥३०४॥
क्षुभ्यन्ति देवतास्तस्य किं फलं तु कृतं भवेत् ।
ततः संपूजेयेद्देवं शक्त्या लभ्योपचारकैः ॥३०५॥
आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् ।
मधुपर्कमाचमनं स्नानं वस्त्रमलङ्कृतिः ॥३०६॥
गन्धपुष्पाणि धूपं च दीपनैवेद्यचन्दनम् ।
प्रयोजयेदर्चनायामुपचारांश्च षोडश ॥३०७॥
दशोपचारा मध्या स्यात्सा गृहस्थैर्विधीयते ।
अर्घ्यं पाद्यं तथाऽऽचामो मधुपर्कस्तथाऽऽचमः ॥३०८॥
गन्धादयो निवेद्यान्ता उपचारा दश स्मृताः ।
गन्धादयो निवेद्यान्ताः पूजा पञ्चोपचारिका ॥३०९॥
अगृहस्थैर्गृहस्थैर्वा कर्तव्या कार्यतत्परैः।
सपर्या त्रिविधा प्रोक्ता तासामेकतमं श्रयेत् ॥३१०॥
उपचारेषु सर्वेषु यत्किञ्चिद्दुर्लभं भवेत् ।
तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ॥३११॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ।
आदौ [2] कुर्याद्द्विदिकस्तु वेदमन्त्रेण पूजनम् ॥३१२॥
ततश्च तान्त्रिकैर्मन्त्रैर्वामी शूद्रश्च तन्त्रतः ।
[3] अहं हं हं इदमिदमिदं गृहाण ठद्वयम् ॥३१३॥

---

[1] या अर्पयन्त्ययत्नेन - इति पा. मेरौ ।
[2] देशिकस्तु - इति पा. मेरौ ।
[3] ॐ अं हं हृं - इति पा. मेरौ ।

योज्यः सर्वोपचारेषु मन्त्रः पञ्चदशाक्षरः ।
पठेद्वा वैदिकस्यान्ते [1] तन्त्रमन्त्रं तु वैदिकः ॥३१४॥
सर्वत्र वह्निजायायाः स्थाने शूद्रो नमः पठेत् ।

**आसनम् -**

देवस्य वामभागे तु दद्यान्मूलेन चासनम् ॥३१५॥
पौष्पं दारुमयं वास्त्रं चार्मं कौशं च तैजसम् ।
पौष्पं पुष्पादिरचितं कुशसूत्रादिसंयुतम् ॥३१६॥
नानावर्णसुगन्धं च कोमलं सर्वकामदम् ।
यस्य यानि निषिद्धानि पुष्पाण्युक्तानि तैः कृतम् ॥३१७॥
केवलैरासनं हन्ति साधकस्य मनोरथान् ।

**आसनभेदाः -**

यज्ञदारुसमुद्भूतं वैल्वं वा चन्दनोद्भवम् ॥३१८॥
[2] गम्भार्या वा विष्टरो वा श्रीपर्ण्या वेप्सितप्रदम् ।
सकण्टकं क्षीरयुतं तालशालविवर्जितम् ॥३१९॥
चैत्ये श्मशाने सम्भूतं वर्जयेच्च विभीतकम् ।
रोमजं वाल्कलं कौशजातं कार्पाससम्भवम् ॥३२०॥
वास्त्रं चतुर्विधं श्रेष्ठं [3] तूर्यं पूर्वमुदाहृतम् ।
सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च ॥३२१॥
गजानां तुरगाणां च कृष्णसारस्य चर्मणा ।
आसनं निर्मितं श्रेष्ठं निषिध्दं खारकौक्कुरम् ॥३२२॥
शृगालस्य वृषस्यापि गोः शशस्य कपेस्तथा ।
कुशः काशः शरो ग्रन्थिर्यवो दूर्वाश्च [4] वल्कजाः ॥३२३॥

---

[1] तत्र तन्त्रं तु वैदिकः - इति पा. मेरौ ।
[2] गम्भार्या वा समाख्यातं श्रीपर्णस्येप्सितप्रदम् - इति पा. मेरौ ।
[3] पूर्वम्- इति पा. मेरौ ।
[4] वल्वजाः - इति पा. मेरौ ।

[१] गोकेशमुञ्जौ कुन्दश्च पूर्वाभावे परः परः ।
योगपीठस्य सदृशमेतेषामासनं स्मृतम् ॥३२४॥
पूर्वं पूर्वं श्रेष्ठतमं कौशं दशविधं स्मृतम् ।
[२] स्वर्णतारताम्रसदवङ्गानां तु परं परम् ॥३२५॥
हीनं निषिद्धं लौहं च कांस्यं सैसं च पैत्तलम् ।

**स्वागतम् -**

साङ्गं सावरणं देवं पूजार्थमिह चागतम् ॥३२६॥
इति ध्यात्वा तु मूलान्ते स्वागतं परिकीर्त्तयेत् ।

**अर्घ्यदानम् -**

ततोऽर्घ्यं मूर्ध्नि दद्याच्च कालोऽस्य त्रिविधो मतः ॥३२७॥
आगताय तथार्चायां स्नातुमासनगाय च ।
पूजान्ते गन्तुकामाय देवायार्घ्यं प्रदापयेत् ॥३२८॥

**पाद्यदानम् -**

अर्घ्यद्रव्ययुतैस्तोयैरुपचारमनुं पठन् ।
आगते स्नानकाले च नैवेद्योपक्रमेऽपि च ॥३२९॥
त्रिविधः पाद्यकालः स्यात्पाद्यं स्यात्पादधावनम् ।
सुगन्धमृत्तिकाभिर्वा गन्धपिष्टातकैरपि ॥३३०॥
सम्यक्क्षालनपूर्वं तु शीतैर्वोष्णजलैर्भवेत् ।

**आचमनीयम् -**

पाद्ये च मधुपर्के च स्नाने वस्त्रोपवीतयोः ॥३३१॥
भोजने चाचमः शुद्धतोयैः षोढा प्रकीर्तितः ।

**मधुपर्कः -**

क्षौद्रं कृत्वा कांस्यपात्रे दद्याद्देवमुखाम्बुजे ॥३३२॥

---

[१] वीरणं च नडो गुन्द्रः - इति पा. मेरौ ।
[२] सुवर्णतारताम्राणां सवङ्गानां परं परम् - इति पा. मेरौ ।

दिवसे दधिसंयुक्तमुपचारमनुं पठन् ।

**पुनराचमनीयम् -**

जातीफललवङ्गैलाचन्द्रकङ्कोलचूर्णयुक् ॥३३३॥
पुनराचमनीयार्थं तोयं देवमुखेऽर्पयेत् ।

**स्नानीयम् -**

सुगन्धतैलैरभ्यज्य सुगन्धामलकादिभिः ॥३३४॥
उद्वर्त्तनैर्विधायाथ स्नापयेदुष्णवारिणा ।
गन्धोदकैश्च मूलेन यथाशक्त्यभिषेचयेत् ॥३३५॥
क्षीरदध्याज्यमधुभिः खण्डेन च पृथक् पृथक् ।
नारिकेलोदकेनाऽपि तथा तालफलाम्बुना ॥३३६॥
गन्धद्रव्यैश्च बहुभिस्तथा गन्धोदकेन च ।
ऐक्षवेणोदकेनापि सकर्पूरादिगन्धिना ॥३३७॥
[1] कदलीपनसाऽऽम्रोत्थरसेनाऽपि सुगन्धिना ।
शतं सहस्रमयुतं शक्त्या वाऽप्यभिषेचयेत् ॥३३८॥
शङ्खं [2] सम्पूर्य तेनैव स्नापयेत्तमनन्यधीः ।
सर्वेषां प्रीतिदः शङ्खो न सूर्यस्य कदाचन ॥३३९॥
पञ्चामृतैस्तीर्थतोयैरभिषिक्तः शिवो मुदम् ।
लभते [3] नान्य शङ्खोदैस्ततः शुद्धोदकेन च ॥३४०॥
स्नानं पुरुषसूक्तेन कार्यं मूलेन [4] वामिभिः ।

**वस्त्रम् -**

[5] विष्णवे बगलामुख्यै पीतकौशेयमम्बरम् ॥३४१॥
शिवाय च सरस्वत्यै पार्श्वनाथाय शुभ्रकम् ।
रक्तं शक्त्यर्कविघ्नानां भौमसौगतयोरपि ॥३४२॥

---

[1] कदलीपनसाऽश्वत्थरसेनाऽपि सुगन्धिना - इति पा. मेरौ ।
[2] संपूज्य - इति पा. मेरौ ।
[3] नाथ - इति पा. मेरौ ।
[4] वा त्रिभिः - इति पा. मेरौ ।
[5] प्रदेयं विष्णवे मुख्यम् - इति पा. मेरौ ।

कृष्णं भैरवकाल्यादे राधादेर्नीलमम्बरम् ।
अच्छिद्रं मलहीनं च [1] सदासपत्रधारितम् ॥३४३॥
कार्पासजं वा कौशेयं राङ्कवं वा विशिष्यते ।
तैलादिदूषिताद्रोगः सच्छिद्राद्व्रात्यता भवेत् ॥३४४॥
परकीयाच्च दारिद्र्यं जीर्णादायुःक्षयो भवेत् ।
दग्धाद्विपद्भवेद्दास्यं दत्ते गात्रावलम्बिते ॥३४५॥
सूचीविद्धात्स्फोटकादि मलिनात्कान्तिहीनता ।
उप्तकेशे पुत्रनाशः [2] पूजनादौ प्रयोजिते ॥३४६॥
मिथ्याऽभिशापो भवति श्लेष्ममूत्रादिदूषिते ।
ततः पूर्वोदितं वस्त्रं तथा वैभवकल्पितम् ॥३४७॥
[3] दद्याच्च देव्या भावेऽपि केवलं कुसुमन्तथा ।
वस्त्रार्पणेन तु विना पूजा भवति निष्फला ॥३४८॥
अतो दद्यात्पुष्पमपि वस्त्राभावे सुरेश्वरि ।

**यज्ञोपवीतभूषणे –**

यज्ञोपवीतं दत्त्वाऽथ भूषणानि समर्पयेत् ॥३४९॥
ङेन्तं नमोन्तं तन्नाम पूजनादौ प्रयोजयेत् ।
तानि नानाविधानि स्युर्मुकुटादिकभेदतः ॥३५०॥
स्त्रीपुंप्रभेदतश्चापि विज्ञेयानि विचक्षणैः ।

**चन्दनम् –**

चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम् ॥३५१॥
कर्पूरागुरुकस्तूरिहिमाम्बुक्षोदितं शुभम् ॥
चूर्णं घृष्टं धूमसारः सम्मर्दः प्राणिसम्भवः ॥३५२॥
गन्धः पञ्चविधो ज्ञेयो मोददः स्वर्गवासिनाम् ।
प्रशस्तगन्धयुक्तानां पत्रचूर्णानि यानि च ॥३५३॥

---

[1] सचदनन्यधारितम् - इति पा. मेरौ ।
[2] श्चाधौते दीनता भवेत् - इति ख.मा.पा. ।
[3] दद्याद्देव्या अभावेऽपि - इति ख.मा.पा. ।

तानि गन्धाह्वयानि स्युश्चूर्णजः प्रथमः स्मृतः ।
घृष्टो मलयजो गन्धः सरलो देवदारुजः ॥३५४॥
कृष्णागुरुः कदम्बश्च द्वितीयोऽयं प्रकीर्त्तितः ।
शतपत्रीरसे मग्नाच्चन्दनागुरुकादिकात् ॥३५५॥
[1] पिठरीयन्त्रतः काचकूप्यां सिद्धस्तृतीयकः ॥३५६॥

कृष्णगुरुश्चन्दनदेवदारु-
कालीयकं वालकभद्रमुस्तम् ।
शिलारसः कुन्दरकोलकञ्च
सेवन्तिकाकेतुनगाहलीनाः [2] ॥३५७॥
मृत्कर्परैः संयुतकाचकुप्यां
दत्त्वा मुखं [3] मुद्रय लोहसूत्रैः ।
निष्कासितो धूमरसस्तु तस्य
सौगन्धिकैः काचकटोरके यः ॥३५८॥
महामोदनामा सुहामोदकारी
तथा भूतयक्षोरगातङ्ककारी ।
ज्वरारोचकच्छर्दिशङ्कापहारी
ललाटे स्थितो दृष्टिदोषापहारी ॥३५९॥
[4] यथाभागमनेकास्तु सुगन्धा गन्धवारिभिः ।
मर्दिताः स चतुर्थस्तु सम्मर्द इति कीर्त्यते ॥३६०॥
कस्तूरिका चैकभागा द्वौ भागौ मुस्तकस्य च ।
तदर्धैलाजटामांसी त्वक्कुष्ठं च शिलारसः ॥३६१॥
चतुर्भागं वालकं च धृतभ्रष्टा तथा नखी ।
सुगन्धकोकिलालोहवालो राजवचा तथा ॥३६२॥

---

[1] पिप्पलीयन्त्रतः - इति पा. मंरी ।
[2] क्वकं तुरगाभिधानम् - इति पा. मंरी ।
[3] लोहमलोहसूत्रैः - इति पा. मंरी ।
[4] याथाभागमनेकं तु - इति पा. मंरी ।

अष्टौ भागाः केशरस्य मुरायाश्चैव षोडश ।
१ कृष्णागुरुश्चाकसीरं कालीयमथ वाधयः ॥३६३॥
२ भागाः सेवन्तिकाकस्य चन्देन विमर्दयेत् ।
कामोदनामा सम्मर्दो देवता राजतोषकृत् ॥३६४॥
३ कस्तूरिका चोतुमदः प्राणिजात इतीर्यते ।
पञ्चमोऽयं सुगन्धस्तु देवदानवतोषकृत् ॥३६५॥
गन्धाष्टकं च त्रिविधं शक्तिविष्णुशिवात्मकम् ।
४ चन्दनागुरुकर्पूरचोरकुंकुमरोचना ॥३६६॥
जटामांसीकपियुता शक्तेर्गन्धाष्टकं विदुः ।
चन्दनागुरुह्रीवेलकुष्ठकुङ्कुमसेव्यका ॥३६७॥
जटामांसी मुरमिति विष्णोर्गन्धाष्टकं स्मृतम् ।
चन्दनागुरुकर्पूरतमालजनकुङ्कुमम् ॥३६८॥
कुशीतकुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ।

**पुष्पविधिः -**

अथ पुष्पस्य महात्म्यं लेशमात्रं वदाम्यहम् ॥३६९॥
यज्ज्ञात्वा साधकः सिद्धिं लभेन्नूनं न संशयः ।
पुण्यसंवर्द्धनाच्चापि पापौघपरिहारकः ॥३७०॥
पुण्यमात्रप्रदानाच्च पुष्पमित्यभिधीयते ।
पुष्पैर्देवाः प्रसीदन्ति पुष्पे देवाश्च संस्थिताः ॥३७१॥
किञ्चातिबहुनोक्तेन पुष्पस्यातिमतल्लिका ।
परं ज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति ॥३७२॥
त्रिवर्गसाधनं पुष्पं पुष्टिश्रीस्वर्गमोक्षदम् ।
पुष्पमूले वसेद् ब्रह्मा पुष्पमध्ये तु केशवः ॥३७३॥
पुष्पाग्रे च महादेवः सर्वे देवा स्थिता दले ।

---

१ कृष्णागुरुश्च कालीयं तद्भागाष्टकमुच्यते - इति पा. मेरौ ।
२ तथा संवन्तिकाकस्य भागानेकत्र मर्दयेत् - इति पा. मेरौ ।
३ कास्तूरिकश्चौतुमदः प्राणजातः - इति पा. मेरौ ।
४ ३६२ (ख), ३६३ क, ख. ३६४ क श्लोकाः - इति ख.मा.पा न प्राप्यन्ते ।

तस्मात्पुष्पैर्यजेद्देवं नित्यं भक्तियुतो नरः ॥३७४॥
पुष्पं पञ्चविधं प्रोक्तं पर चापरमेव च ।
उत्तमं मध्यमं हीनं तेषां वक्ष्यामि लक्षणम् ॥३७५॥
परं सुवर्णपुष्पं स्यात्तत्सदा योग्यमेव हि ।
अत्यागपूर्वकं देवायार्चनार्हं पुनर्भवेत् ॥३७६॥
अपरं राजतं पुष्पं ताम्रजं च प्रकीर्तितम् ।
सदा योग्यं चेदमपि त्रिवर्षं चैकवर्षकम् ॥३७७॥
तुलसी केतकी पद्मं करवीरं च मालती
पञ्चैतान्युत्तमान्याहुर्मध्यमानि तथा दश ॥३७८॥
मल्लिकाकुन्दमन्दारतगरार्जुनकिंशुकाः ।
पारिजातमशोकञ्च विल्वं चम्पकमेव च ॥३७९॥
एतद्भिन्नं सुवर्णं च सुगन्धं हीनमुच्यते ।
तत्तन्मन्त्रविधानेषु विहितानि समर्पयेत् ॥३८०॥
नानोपहारवलिभिर्नानापुष्पैर्मनोरमैः ।
अपामार्गदलैर्भृङ्गैस्तुलसीवर्जितैः शुभैः ॥३८१॥
[1] द्रोणपुष्पैर्विशेषेण वज्रपुष्पेण मिश्रितैः ।
पुष्पाण्यपि तथा दद्याद्रक्तकृष्णासितानि च ॥३८२॥
श्वेतपुष्पं जपापुष्पं करवीरं तथा प्रिये ।
नगरं मालती जाती सेवन्ती यूथिका तथा ॥३८३॥
धत्तूराशोकवकुलश्वेताकृष्णापराजिताः ।
कपुष्पं विल्वपत्रं चम्पकं नागकेशरम् ॥३८४॥
माल्लिका [2] झिण्टिका काञ्ची रक्तं यत्परिकीर्तितम् ।
[3] अष्टम्यां च विशेषण तुष्टा भवति कालिका ॥३८५॥

---

[1] पूजनीया सदा भक्त्या नृणं शीघ्रफलप्रदा ।
सुगन्धैः श्वेतलौहित्यैः कुसुमैरर्चयेत्कुलैः ॥
विल्वैर्मरुवकाद्यैश्च तुलसी वर्जितैः शुभैः - इति ख.मा. अधिकः पाठः ।

[2] रिण्टिका - इति पा. मेरौ ।

[3] अर्कपुष्पं कोकनदं वर्वरं च प्रियम्वदा । आम्रजाम्बुकदम्बानि कुमुदाम्रादिकानि च ॥
सर्वधान्योद्भवं पुष्पं रम्भानिम्बसमुद्भवम् - इति ख.मा. अधिकः पाठः ।

पद्मपुष्पेण रक्तेन सन्तुष्टाः सर्वदेवताः ।
कृष्णा वा यदि वा शुक्ला कालिका वरदा भवेत् ॥३८६॥
श्मशानधुस्तुरेणैव तुष्टा धूमावती परा ।
वन्यैः पुष्पैश्च विविधैस्तुष्टा भवति सर्वदा ॥३८७॥
आमलक्यास्तु पत्रेण तुष्टा भवति पार्वती ।
अपराजिता फलं वक्तुं मया देवि न शक्यते । ३८८॥
अपराजिताप्रियतरं प्रियं देव्या न विद्यते ।
अपराजितायां सापर्णा स्थिता पूर्वं शतं समाः ॥३८९॥
योनिरूपेण तत्रासौ स्थित्वा प्राङ् निर्गता शिवा ।
करवीरे लिङ्गरूपे शिवो वसति वै सदा ॥३९०॥
शिवशक्त्योश्च संयोगात् [1] करवीरापराजिता ।
रक्तचन्दनमिश्रेण तयोर्योगेन पूजयेत् ॥३९१॥
तुष्यते परमेशानि सा पूजा सफला स्मृता ।
पुष्पैररण्यसम्भूतैः पद्मैर्वा गिरिसम्भवैः ॥३९२॥
स्वारामोद्भवपुष्पैर्वा त्रिसन्ध्याश्वेतलोहितैः ।
करवीरः पञ्चवर्णः कालीताराप्रगोचरः ॥३९३॥
चूडामणिं प्रवक्ष्यामि सर्वपुष्पोत्तमोत्तमम् ।
चूडामणिर्दशविधो नवरत्नप्रभेदतः ॥३९४॥
दशमं सर्ववर्णाद्यं पुष्पेन्द्रसंज्ञकं भवेत् ।
केतकी द्विविधा प्रोक्ता पुंस्त्रीभेदक्रमेण च ॥३९५॥
पुंभेदेऽपि द्विधा प्रोक्ता पीतश्वेतप्रभेदतः ।
स्त्रीभेदेऽपि द्विधा प्रोक्ता पीतश्वेतप्रभेदतः ॥३९६॥
पुंभेदे कठिनः प्रोक्तः स्त्रीभेदे कोमला मता ।
मल्लिका वेदधा प्रोक्ता तत्क्रमं शृणु पार्वति ॥३९७॥

---

[1] करवीरापराजिते - इति पा. उचितः ।

श्वेता द्विपुष्पा षट्पुष्पा पुष्पगुच्छा तथा परा ।
नव पुष्पा परा प्रोक्ता रक्तपुष्पा परा भवेत् ॥३९८॥
पीतपुष्पा मेचका च धूसरा पञ्चवर्णजा ।
मालती पञ्चधा प्रोक्ता तद्भेदान् संशृणु प्रिये ॥३९९॥
गन्धराजा सर्वगन्धा तथा श्रीखण्डगान्धिका ।
कस्तुरी गन्धसंयुक्ता चतुर्थी केतकी मता ॥४००॥
मालती स्वर्णभाजातिश्वेता रक्तसिता परा ।
रक्तवर्णा परा ज्ञेया पञ्चवर्णा तथा परा ॥४०१॥
एते भेदा मया प्रोक्ता गोपिता यामलादिके ।
डामरे गोपिता देवि तव स्नेहादिहोदिता: ॥४०२॥
गोपनीया महेशानि संक्षेपादेतदेव तु ।
यूथिका मालती जाती मल्लिका नवमल्लिका ॥४०३॥
कस्तूरी गन्धिका देवि तथैवागुरुगन्धिका ।
नखगन्धासलाकाद्या मालती वेदगान्धिका ॥४०४॥
स्वर्गे तु मालती प्रोक्ता रक्ता पातालगोचरा ।
जाती यूथी तथा मल्ली मृत्युलोके प्रकीर्तिता ॥४०५॥
रक्तमल्ली पीतमल्ली वर्णपञ्चकरूपिणी ।
त्रिशक्तिलोके देवेशि सर्वदेवप्रपूजने ॥४०६॥
एतद्रूपं विचिन्त्यैव पूजयेच्चीनसुन्दरीम् ।
एतद्रहस्यं संप्रोक्तं पुण्यानां निर्णयामृतम् ॥४०७॥
जाता न तृप्तिर्देवेश विशेषं वद सत्त्वरम् ।
मालती राजमल्ली च जाती यूथी जयन्तिका ॥४०८॥
मालती लघुयूथी च मल्ली चेति क्रम: स्मृत: ।
श्वेता श्रीमाली गदिता जाती रक्ततरा मता ॥४०९॥
मालतीदलपत्रा च रक्तश्वेता त्रिसारसा ।
राजमल्ली महेशानि वहुपत्रातिगन्धिनी ॥४१०॥
शतपत्रा राजमल्ली कलापत्रा तु मल्लिका ।
पञ्चपत्रा भवेज्जाती सप्तपत्रा तु मालती ॥४११॥

यूथी सूक्ष्मा च द्विविधा रसगन्धा मनोहरा ।
मालती स्वर्णभा जाती श्वेता रक्तसिता मता ॥४१२॥
रक्तवर्णा पञ्चवर्णा पीतकृष्णा[1] परा स्मृताः ।
कस्तूरी गन्धिका देवि तथैवागुरुगन्धिका ॥४१३॥
अश्वगन्धा मलाकाख्या वेदयुक्ता तु मालती ।
सर्वदेवविधौ शस्ता पूजासाङ्गार्थहेतवे ॥४१४॥
चम्पकपुष्पदानेन स्वर्णं वहुविधं लभेत् ।
नागकेशरदानेन रूपवान् सुभगो भवेत् ॥४१५॥
पुन्नागस्य च पुष्पेण द्वारशान्तिर्भवेत् सदा ।
केशरस्य प्रदानेत शत्रून्नाशयते ध्रुवम् ॥४१६॥
पारिजातपारिभद्रदानादायुः प्रवर्धते ।
कुन्दपुष्पप्रदानेन कामानाप्नोति वै ध्रुवम् ॥४१७॥
जातीमालतीकुब्जेन शीघ्रं तुष्यन्ति मातरः ।
कोकिलाख्यप्रदानेन ह्यकालमरणं हरेत् ॥४१८॥
ओण्ड्रपुष्पप्रदानेन तुष्यते परमेश्वरी ।
यथा छागादिबलिना तथा तुष्यति निश्चितम् ॥४१९॥
दत्ते चैव जपापुष्पे पट्टवस्त्रफलं लभेत् ।
व्रहहत्यादिकं पापं क्षणान्नश्यति निश्चितम् ॥४२०॥
करवीरेण पुष्पेण पूजयेज्जगदीश्वरीम् ।
प्रतिपुष्पेण मन्त्रेण योजयित्वा निशासु वै ॥४२१॥
लभते वाञ्छितान्ः कामान् आज्ञासिद्धिश्च लभ्यते ।
लोहितो वाऽथ रक्तो वा करवीरस्तु सिद्धिदः ॥४२२॥
बन्धूकस्य प्रदानेन पट्टवस्त्रं च लभ्यते ।

**पुष्पमाला –**

एकजातीयकैः पुष्पैर्भिन्नजातीयकैरपि ॥४२३॥

---

[1] "परा" - इति ख.मा. त्रुटितम् ।

माला तथैकवर्णा स्याद्भिन्नवर्णाऽपि वा प्रिये ।
सा पुनस्त्रिविधा ज्ञेया परिणाहवशेन तु ॥४२४॥
पतेद् हृदयपर्यन्तं या माला नित्यमालिनी ।
रक्षिका सा परिज्ञेया सर्वावरतया स्थिता ॥४२५॥
अधोऽवलम्बिनी नाभेः कौसुमीया स्रगुच्यते ।
साधारणी परिज्ञेया मध्यमा पूर्वतोऽधिका ॥४२६॥
आगुल्फलम्बिनी या तु पादपद्मोपरि स्थिता ।
वनमालेति विख्याता सर्वाभ्यः स्रग्भ्य उत्तमा ॥ ४२७॥
किञ्चिद्विशेषमत्रापि तमपि व्याहरामि ते ।
करवीरैर्जपापुष्पैर्वकैर्दमनकैरपि ॥४२८॥
नीलोत्पलैः सरसिजैर्लवङ्गैर्नागकेशरैः ।
जातीभिर्मालतीभिश्च मल्लिकाचम्पकादिभिः ॥४२९॥
रचिता या भवेयुर्हि स्रजः परमशोभनाः ।
मालाभ्योऽन्याभ्य एतास्तु देव्याः प्रीतिप्रदायिकाः ॥४३०॥
अतोऽन्येषु प्रसूनेषु तिष्ठत्सु वरवर्णिनि ।
अभीभिः कुसुमैस्तासां ग्रथने यत्नमाचरेत् ॥४३१॥
स्वद्रव्यैः पूजयेद्विद्यां जवायावकसिन्दुरैः ।
चन्दनं रक्तसंज्ञं तु शोणितं समुदाहृतम् ॥४३२॥

**रहस्यपुष्पम् –**

योनिपुष्पं महेशानि वज्रपुष्पं निगद्यते ।
आषोडशादनूढाया उत्तमं सर्वसिद्धिदम् ॥४३३॥
वलात्कारेण ऊढाया मध्यमं भोगवर्द्धनम् ।
रजोयोगवशादन्यदधमं सुखदायकम् ॥४३४॥
स्वयम्भूकुसुमं देवि त्रिविधं भुवि जायते ।
सर्वैः पुष्पैः सदा पूज्या विहिताविहितैरपि ॥४३५॥
कर्तव्या सर्वदेवानां भक्तियोगोऽत्र कारणम् ।
न स्वर्णैर्न च रत्नैश्च न स्पर्शमणिभिः शुभैः ॥४३६॥

न हि तृप्यति देवेशि कालिका भक्तवत्सला ।
तस्माद्योनिभवं पुष्पं पूजार्थं सङ्ग्रहेच्छिवे ॥४३७॥
रहस्यातिरहस्यं च कथ्यते शृणु साम्प्रतम् ।
अवीरा पञ्चधा प्रोक्ता रक्ता श्वेता परा मता ॥४३८॥
श्वेतपीता पीतरक्ता रक्ता श्वेता परा मता ।
एवं भेदान्तरे सैव नवधा परिकीर्तिता ॥४३९॥
अवीरा कुसुमेनैव पूजयेत्सर्वदेवताः ।
रतिपुष्पं कामपुष्पं देवपुष्पं क्रमेण च ॥४४०॥
सेवन्ती बहुधा ख्याता तद्भेदान् शृणु पार्वति ।
श्वेतपीता तथा रक्ता त्रितयं त्रितयं त्रिषु ॥४४१॥
सिन्दूरा दिव्यवर्णा च हरिद्रा च परा भवेत् ।
रतिपुष्पमिदं प्रोक्तं कामपुष्पं शृणु प्रिये ॥४४२॥
पीतगुच्छास्वरूपं च रक्तं गुच्छस्वरूपकम् ।
पीतरक्तं रक्तपीतं सूक्ष्ममध्यं महेश्वरि ॥४४३॥
षड्भेदा सूक्ष्मभेदे तु अतिसूक्ष्मेऽपि षड् भवेत् ।
एवमष्टादशविधं कामपुष्पं महेश्वरि ॥४४४॥
देवपुष्पं प्रवक्ष्यामि येन देवीमयोऽर्चनात् ।
श्वेतरक्तं दिव्यरूपं सिन्दूरसन्निभं तथा ॥४४५॥
अपरं श्वेतपीतं च पञ्चवर्णमथापरम् ।
रतिपुष्पं पञ्चवर्णं सुन्दरीलोकगोचरम् ॥४४६॥
(कामपुष्पं पञ्चवर्णं कालिकानामगोचरम् ।
देवपुष्पं नन्दवर्णं तारिणीलोकगोचरम् ॥)

**पुष्पग्रहणोपायः -**

सूत्रेण पट्टवस्त्रेण वीरवस्त्रेण पार्वति ।
काश्मीरवस्त्रसूत्रेण पट्टसूत्रेण पार्वति ॥४४७॥
कस्तूरी कुङ्कुमन्तत्र चन्दनागुरुकादिकम् ।
नानासुगन्धिकं दत्त्वा ह्येकीकृत्य तु साधकः ॥४४८॥
अष्टगन्धेन वा पुष्पैः संयुक्तं पुष्पमाहरेत् ।

एतेनाक्षतयोगेन पूजयेत्परमेश्वरीम् ॥४४९॥
आसनार्थे च पूजार्थे होमार्थे च क्रमाद्विदुः ।
स्वयम्भूसंयुतं पुष्पं सिद्धपुष्पं विदुर्बुधाः ॥४५०॥
रतिमाल्यानि देवेशि न च पर्युपितानि च ।
सिद्धपुष्पाणि ख्यातानि गन्धर्वप्रीतिदानि च ॥४५१॥
सदा शुद्धानि पुष्पाणि नवीनानि दिने दिने ।
एतत्सर्वं समादाय तारां कालीञ्च पूजयेत् ॥४५२॥
पुष्पदानफलात्कोटिगुणितं फलमाप्नुयात् ।

**अविहितपुष्पाणि –**

नार्पयेद् भूमिपतितं कोरकं कृमिभक्षितम् ॥४५३॥
अङ्गलग्नं समाघ्रातं म्लानं पर्युषितं तथा ।
उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् ॥४५४॥
अशुद्धपात्रप्राण्यङ्गवासोभिः कुत्सितात्मभिः ।
आनीतं तन्निषिध्दं स्यान्मध्याह्नस्नानतस्तथा ॥४५५॥
स्वयं विकसितैः पुष्पैः स्वयं च पतितैर्भुवि ।
भूगतं वर्जयेपुष्पं शेफालीवकुलं विना ॥४५६॥
कालिकाभिस्तथा त्याज्या विना चम्पकपद्मकैः ।
विल्वस्य खदिरस्यैव तथा धात्रीदलस्य च ॥४५७॥
तमालस्य च पत्रस्य छिन्नभिन्नं न दुष्यति ।
विष्णुक्रान्ता जवा नागकेशरं वालपल्लवम् ॥४५८॥
वन्धूकं चैव मन्दारं सवृन्तेन समर्चयेत् ।
देवीपूजा सदा कार्या जलजैः स्थलजैरपि ॥४५९॥
विहिताविहितैर्वाऽपि भक्तियुक्तेन चेतसा ।
पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ॥४६०॥
दुःखदं तत्समाख्यातं यथोत्पन्नं तथार्पणम् ।
चित्रपूजासु सर्वासु न विरुद्धस्य दूषणम् ॥४६१॥
अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधौ च तत् ।
न पर्युषितदोषोऽस्ति तुलसीविल्वचम्पके ॥४६२॥

जलजे बकुलेऽगस्त्ये मालाकारगृहेषु च ।
पुष्पैः पर्युषितैर्नष्टैः कृमिकीटविदारितैः ॥४६३॥
न पूजयेद्धोमयेच्च देवताशापमाप्नुयात् ।
विल्वपत्रं च तुलसी स्वयम्भूस्वर्णपुष्पकैः ॥४६४॥
न पर्युषितरूपत्वं निर्माल्यत्वं महेश्वरि ।
चतुर्णां देववेवेशि न मया कीर्तितं भुवि ॥४६५॥
नृसिंहं च शिवं चैव न केतक्या समर्चयेत् ।
श्वेतकृष्णतुलस्या च कालिकां न स्पृशेत्क्वचित् ॥४६६॥
कमलं दशरात्रं च जाती दिनत्रयं तथा ।
चम्पकः पञ्चरात्रं च किंशुको दिनसप्तकम् ॥४६७॥
करवीरोऽष्टदिवसं केतकी दशपञ्च च ।
कुन्दो नेत्रदिनं देवि मुनिपुष्पं च दाडिमी ॥४६८॥
जपापुष्पं ततो द्राक्षा दिवसद्वयगोचरा ।
शतपुष्पं पुण्यराजो गन्धराजस्तथैव च ॥४६९॥
भगपुष्पं महेशानि वेदरात्रं न दुष्यति ।
नारदस्य मतेनैव कथ्यते शृणु साम्प्रतम् ॥४७०॥
विल्वापामार्गधात्र्यश्च तुलसी त्रिंशदादितः ।
षट्त्रिंशान्तं महेशानि न च पर्युषितानिच ॥४७१॥
एकेन करवीरेण सहस्रेण शतेन च ।
यां च सम्पूज्य देवेशि मन्त्ररूपो नरो भवेत् ॥४७२॥
एकेन करवीरेण मां च संपूजयेत् प्रिये ।
तेन संपूजितं देवि जगत् स्थावरजङ्गमम् ॥४७३॥
करवीरे शक्तिबिन्दौ तत्राहं निवसाम्यहम् ।
केतकीकुटजेनेशं नार्चयेदक्षतैर्हरिम् ॥४७४॥
न दूर्वयाऽर्चयेद्दुर्गां विल्वपत्रैर्दिवाकरम् ।
लम्बोदरं तुलस्या च वृन्तहीनैः समर्चयेत् ॥४७५॥
पीता कृष्णा कलौ त्याज्या श्वेता रक्ता प्रपूजने ।
काली तारा रोचनी वा विधौ पीतां विवर्जयेत् ॥४७६॥

कृष्णा रक्ताऽपि संवर्ज्या नान्या जाती न मालती ।
पञ्चवर्णां राजमल्लीं श्रीविद्यायां विवर्जयेत् ॥४७७॥
हरिणा मालती त्याज्या सूर्ये शम्भौ विशेषतः ।
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ॥४७८॥
तुलसीं मालती चैव कालीताराविधौ त्यजेत् ।
विल्वं मरुवकं चैव वीरकर्मणि वर्जितम् ॥४७९॥
देवीनामर्कमन्दारावादित्ये तगरं तथा ।
गणेशाय च सूर्याय [1] यस्तु पुष्पमतिप्रियम् ॥४८०॥
पुष्पाभावे प्रवालैर्वा तदभावे च कारकैः ।
तदभावे फलैः पत्रैस्तदभावे [2] तृणाङ्कुरैः ॥४८१॥
[3] कदलं दाडिमं कोलं जम्बुचिञ्चामलाम्रकम् ।
मातुलुङ्गं च जाम्बीरं पनसं श्रेष्ठमुच्यते ॥४८२॥
पूजयेत्परमेशानि पुष्पाभावे तु पत्रकैः ।
पत्राणामप्यलाभे तु द्रुमगुल्मोद्भवादिभिः ॥४८३॥
तद्भावानामलाभे तु तत्फलेन प्रपूजयेत् ।
अक्षतैर्वा जलैर्वाऽपि तदभावे तु सर्षपैः ॥४८४॥
सितैस्तेषामलाभे तु मानसं पूजनं चरेत् ।
[4] अतः परं पुष्पदानमाकर्णय शुचिस्मिते ॥४८५॥
तत्तत्पुष्पस्य नामापि नम इत्यक्षरद्वयम् ।
उच्चार्य दद्यात्तद्देव्यै सर्वकामार्थसिद्धये ॥४८६॥
अङ्गुष्ठतर्जनीभ्यां च चक्रे पुष्पं निवेदयेत् ।
पुष्पं सुशोभनं देवि सौरभ्येण समन्वितम् ॥४८७॥

---

[1] रक्तपुष्पमतिप्रियम् - इति पा. मेरौ ।
[2] तृणैः कुशैः - इति पा मेरौ ।
[3] कपित्थम् - इति पा. मेरौ ।
[4] ४८५ (ख), ४८६ क.ख - इति श्लोकौ ख.मा. न. प्राप्येते ।

मया निवेदितं भक्त्या सुपुष्पं प्रतिगृह्यताम् ।
अथ पुष्पोपचारान्ते कुर्यादावरणार्चनम् ॥४८८॥
मन्त्रसंपुटितैर्वर्णैर्मातृकायाः सबिन्दुकैः ।
क्रमेण गन्धपुष्पाद्यैर्देवस्याङ्गे समर्चयेत् ॥४८९॥
लयाङ्गत्वेन मातृणां स्थानाङ्गेषु ततः परम् ।
[1] प्रथमावरणं पूज्यं तदन्ते देवतां यजेत् ॥४९०॥
पुनरावरणं चेष्ट्वा देवतामर्चयेत्तथा ।
एवं समर्च्य सर्वास्ता यथोक्ता वृत्तिदेवताः ॥४९१॥
अथ सर्वज्ञता तृप्तिरनादिबोधसंज्ञिका ।
स्वतन्त्रतान्या नित्या स्यादलुप्तशक्तिरेव च ॥४९२॥
षडङ्गदेवता ह्येता नामतः परिकीर्तिताः ।
केशरेष्वग्निकोणादौ हृदयादीनि पूजयेत् ॥४९३॥
[2] नेत्रमग्रे दिशास्वस्त्रं ध्यातव्याश्चाङ्गदेवताः ।
तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ॥४९४॥
वरदाभयधारिण्यः प्रधानतनवःस्त्रियः ।
अग्नीशासुरवायव्यमध्यदिक्षु क्रमात्स्थिताः ॥४९५॥
वायव्यादीशपर्यन्तं गुरुपङ्क्तिं समर्चयेत् ।
तस्मात्सर्वत्र देवेश संक्षेपाच्छृणु तान् गुरून् ॥४९६॥
आदौ सर्वत्र देवेश मन्त्रदः प्रथमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठी त्वहं ततः ॥४९७॥
सर्वमन्त्रेषु विद्यासु स्वयं प्रकृतिरूपिणी ।
ततः पुरुषरूपञ्च कथिता गुरुसन्ततिः ॥४९८॥
येषु येषु च मन्त्रेषु ये ये गुरुगणाः स्मृताः ।
ते ते पूज्याः सपर्यादौ संक्षेपाद् गदितं मया ॥४९९॥

---

[1] आदायावरणम् - इति पा. मेरौ ।

[2] नेत्रं मध्ये - इति पा. मेरौ ।

देवस्य पुरतः प्राची ज्ञेयाऽऽवरणपूजने ।
तदादि परिवाराणां प्रादक्षिण्येन पूजनम् ॥५००॥
अङ्गमन्त्रास्तु पूजायामोंनमोंन्ताहुतौ तथा ।
स्वाहान्ता अथ देवस्याभिमुखं ताः समास्थिताः ॥५०१॥
ततो यजेल्लोकपालान्स्वस्वदिक्षु व्यवस्थितान् ।
आयुधानि तदग्रे च तेषां ध्यानमथोच्यते ॥५०२॥
इन्द्रं सुराधिपं [1] पीतमैरावतगतं विभुम् ।
सहस्रनेत्रं द्विभुजं [2] पीतवज्रधरं भजे ॥५०३॥
अग्निं तेजोऽधिपं रक्तं श्वेतशक्तिकरं प्रभुम् ।
सुभूषणं मेषवाहं [3] वन्दे रक्तान्तलोचनम् ॥५०४॥
यमं प्रेताधिपं कृष्णं महिषोपरि संस्थितम् ।
कालदण्डधरं क्रूरं वृतं दूतैर्भयानकैः ॥५०५॥
रक्षोऽधिपं च निर्ऋतिं शवासनसमास्थितम् ।
धूम्राभं खङ्गहस्तं च पिङ्गलश्मश्रुकूर्चकम् ॥५०६॥
मकरे संस्थितं विद्युन्निभं पाशकराम्बुजम् ।
शुभ्राङ्गं तुन्दिलं वन्दे वरुणं यादसां पतिम् ॥७०७॥
वायुं [4] प्राणाधिपं धूम्रं रक्ताङ्कुशकरं परम् ।
[5] वातप्रमीसमारूढं धावन्तं वेगतो भजे ॥५०८॥
यक्षपतिं कुवेरं च शुक्लं शुक्लगदाधरम् ।
नरसिंहासनारूढं [6] मेदलं चित्रिणीयुतम् ॥५०९॥
विद्याधिपं नीलशूलधरं वृषभवाहनम् ।
त्रिनेत्रं भालचन्द्रं च जटाजूटधरं सितम् ॥५१०॥

---

[1] पीठमैरावनगतम् - इति पा. मेरौ ।
[2] पीठवज्रधरम् - इति पा. मेरौ ।
[3] देवं रक्तान्तलोचनम् - इति पा. मेरौ ।
[4] प्राणप्रियम् - इति पा. मेरौ ।
[5] वानप्रस्थसमारूढम् - इति पा. मेरौ
[6] पानपात्रयुतं भजे - इति पा. मेरौ ।

गौरं नागाधियं मूर्ध्नि फणामण्डलभूषितम् ।
पीनोत्तुङ्गं चक्रधरमनन्तं विश्वगं भजे ॥५११॥
लोकाधिपं विधातारं रक्तं पद्मकरं शुभम् ।
हंसारूढं वेदपाठं कुर्वन्तं तमहं भजे ॥५१२॥
पुनर्मूलं समुच्चार्य साङ्गायै सपरीति च ।
वारायै नाम देव्यश्च चतुर्थ्यन्तमुदीरयेत् ॥५१३॥
नम इत्यर्चयेद् गन्धपुष्पाद्यैः साधकस्त्रिधा

**धूपदानम् -**

हृताशेषमहादोषपूतिगन्धप्रभावतः ॥५१४॥
परमानन्दजननाद् धूप इत्यभिधीयते ।
धूपपात्रं ततोऽस्त्रेण [1] क्षालयेत्पूजयेत्ततः ॥५१५॥
हृदाणुनाथ चास्त्रेण घण्टां संपूज्य वादयेत् ।
इत्थं धूपं प्रकुर्वीत ताम्रकांस्यादिनिर्मिते ॥५१६॥
भाजने द्विपदे भुग्ननाले पद्माकृतौ शुभे ।
साराङ्गारविनिक्षिप्तैर्गुग्गुल्वगुरुवृक्षजैः ॥५१७॥
निर्यासाद्युत्थितैर्धूपैर्गन्धद्रव्यैरथोदितैः ।
[2] धूपं दहेद् गणेशस्य प्रियः प्रोक्तस्तु गुग्गुलुः ॥५१८॥
सर्जं देव्या महेशस्य निर्यासो देवदारुजः ।
विष्णोः कृष्णागुरुः [3] शीतं भास्करस्य प्रियं मतम् ॥५१९॥
जटामांस्या गुग्गुलुना चन्दनागुरुकैस्तथा ।
चन्द्रैरजनिसंयुक्तैर्माक्षिकैः सह कुङ्कुमैः ॥५२०॥
सर्पिःसंमिश्रितैर्दद्याद्देव्यै धूपं महेश्वरि ।
[4] सगुग्गुलुगुरूशीरसिताज्यमधुचन्दनैः ॥५२१॥

---

[1] लक्षयेत् - इति पा. मेरौ ।
[2] धूपो देयां - इति पा. मेरौ ।
[3] सिह्लम् - इति पा. मेरौ ।
[4] सगुग्गुल्वगुरूशीर - इति पाठ उचितः ।

साराङ्गारविनिक्षिप्तैर्धूपं नीचैः प्रधूपयेत् ।
शक्तेर्दशाङ्गं वक्ष्यामि शैलेयं मलयोद्भवम् ॥५२२॥
नखं कुष्ठं सर्जरसमेकैकांशं प्रकल्पयेत् ।
शिलारसागुरुजटामांसीभागद्वयं मतम् ॥५२३॥
[1] षण्माक्षिकं सिता चाष्टौ धूपोऽयं शक्तिमोहनः ।
हरीतकीसर्जरसमुरामांस्यः कुभागिकाः ॥५२४॥
लाक्षा त्रिभागा चत्वारो भागाः शैलजमुस्तयोः ।
पञ्चभागं नखं प्रोक्तं षड्भागं कुष्ठमुच्यते ॥५२५॥
[2] द्वादशाङ्गोगुडाकेशविघ्नविष्णुदशाङ्गकः ।
मधु मुस्ता घृतं गन्धो गुग्गुल्वगुरुशैलजम् ॥५२६॥
सरलं [3] सिह्लसिद्धार्थौ शेषदेवदशाङ्गकः ।
गुग्गुलुं सरलं दारु पत्रं मलयसम्भवम् ॥५२७॥
ह्रीबेलमगुरुं कुष्ठं गुडसर्जरसं समम् ।
हरीतकी नखी लाक्षा जटामांसी च शैलजम् ॥५२८॥
षोडशाङ्गं विदुर्धूपं दैवे पैत्र्ये च कर्मणि ।
अथवाऽगुरुकर्पूरं चन्दनैः सह गुग्गुलुम् ॥५२९॥
मधुसर्पिर्जटामांसी शैलजं कुङ्कुमं तथा ।
एभिर्विमिश्रितः कार्यो धूपोऽयं पार्वतीप्रियः ॥५३०॥
लोहवालौ षोडशाङ्गौ त्रिविद्यायां प्रकीर्तितौ ।
कालीविद्याविधौ देवि [4] अगुरुश्च दशाङ्गकम् ॥५३१॥
अष्टादशाङ्गं श्रीखण्डं ताराविद्याविधौ स्मृतम् ।
छिन्नविद्याविधौ देवि पञ्चाङ्गं गुग्गुलुस्तथा ॥५३२॥
कृष्णागुरुं पीतसारो ब्रह्मास्त्रमनुगोचरम् ।
आलोड्य गुरुचन्दनं मातङ्ग्यां परिकीर्तितम् ॥५३३॥

---

[1] षड्भागम् - इति पा. मेरौ ।
[2] द्वादशांशोऽगुरुः केशविघ्नौ विष्णुदशाङ्गकः - इति पा. मेरौ ।
[3] सिद्धसिद्धार्थैः - इति पा. मेरौ ।
[4] ह्यगुरुश्च - इति पाठ उचितः ।

कस्तूरी चैव कर्पूरमष्टगन्धस्तथैव च।
भैरव्यां कीर्त्तितं देवि न विनैव शिलारसम् ॥५३४॥
भुवनेश्या मया प्रोक्तं श्रीखण्डं कमलामनौ।
लाक्षागुडो हि धूम्रायां सिद्धविद्याविधौ शिवे ॥५३५॥
मधुमुस्तं घृतं गन्धं गुग्गुलुं गुडशैलजम्।
चन्दनं सिह्लसिद्धार्थौ दशाङ्गो धूप इष्यते ॥५३६॥
सिताज्यमधुसम्मिश्रं गुग्गुल्वगुरुचन्दनम्।
षडङ्गधूपमेतन्तु सर्वदेव प्रियं सदा ॥५३७॥
अस्त्रेण धूपदीपादीन् संपूज्य दापयेत्ततः।
यथा गन्धस्तथा देवि धूपं दद्याद्विचक्षणः ॥५३८॥
वनस्पतिरसोत्पन्नो गन्धाढ्यो धूप उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥५३९॥
वामतस्तु तथा धूपमग्रे वामस्तु दक्षिणे।
न धूपं वितरेद् भूमौ नासने न घटे तथा ॥५४०॥
यथा तथाऽऽधारगतं कृत्वा तं विनिवेदयेत्।
मेदमज्जायुतो नेष्टो विष्णवे दारुसम्भवः ॥५४१॥
[1] ततः समर्पयेद् धूपं घण्टावादनपूर्वकम्।
यस्याः शब्देन विघ्नास्तु यान्ति सर्वे दिशो दश ॥५४२॥
व्याधयो दुर्ग्रहाः सर्वे तथोग्राश्च विनायकाः।
दुःस्वप्ना राक्षसा दुष्टा वेताला भैरवा शिवाः ॥५४३॥
[2] डाकिन्यो भूतसङ्घाश्च सर्पकर्कोटकादयः।
बलिकामा हन्तुकामा रतिकामास्तथा परे ॥५४४॥
घण्टानिनादश्रवणाद्धतवीर्या भवन्ति च।
तस्मात्सर्वप्रयत्नेन पूजाकाले सदा हरेत् ॥५४५॥

---

[1] ५४२, ५४३ - इति श्लोकौ ख.मा. न प्राप्येते।
[2] ५४४, ५४५ - इति श्लोकौ ख.मा. न प्राप्येते।

**घण्टापूजनमन्त्रः -**

तारो जयध्वनिपदं [1] मन्त्रमस्मेग्निगेहिनी ।
एकादशाक्षरो मन्त्रो घण्टायाः सर्वसिद्धिदः ॥५४६॥
पूजयित्वा स्वमन्त्रेण [2] घण्टां तन्नादपूर्वकम् ।
दीपं दद्यात्तु विभवे नानावाद्यपुरस्सरम् ॥५४७॥
आवाहनेऽर्घ्ये धूपे च पुष्पे नैवेद्यदीपयोः ।
घण्टानादं प्रकुर्वीत विशेषाद्धूपदीपयोः ॥५४८॥
पूजाकालं विनाऽन्यत्र कुर्यादस्याः [3] प्रवादनम् ।
नानया च विना पूजां कारयेत्सिद्धिलालसः ॥५४९॥

**दीपविधिः -**

दीर्घासनमहाध्वान्ताहङ्कारपरिवर्जनात् ।
परतत्त्वप्रकाशाच्च दीप इत्यभिधीयते ॥५५०॥
घृतदीपःप्रथमतस्तिलतैलसमुद्भवः ।
सार्षपः फलनिर्यासजातो वा वारिजोद्भवः ॥५५१॥
दधिजश्चान्नजश्चैव दीपाः सप्त प्रकीर्तिताः ।
पद्मसूत्रभवा वर्त्तिर्दर्भसूत्रभवाऽथवा ॥५५२॥
जालजा वादरी वाऽपि तूलकोषोद्भवाऽथवा ।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधाः स्मृताः ॥५५३॥
[4] वर्त्तिः श्वेताऽथवा रक्ता न पीता नासिताऽपिच ।
निर्वीजं वाऽथ कार्पासं तज्जातास्तन्तवोऽथवा ॥५५४॥
प्रशस्ता दीपवर्तिः स्यात्कदाचिन्नूतनाम्बरम् ।
शाणं वादरजं वास्त्रं जीर्णं मलिनमेव च ॥५५५॥

---

[1] मन्त्रमानंग्निगेहिनी - इति पा. मेरौ ।
[2] घण्टां तन्त्रादपूर्वकम् - इति ख.मा.पा. ।
[3] न वादनम् - इति पा. मेरौ ।
[4] वर्त्यां कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।
आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥
- इति ख.मा. अधिकः पाठः ।

उपभुक्तं तु नादद्याद्वर्त्तिकार्थं कदाचन ।
दशां विवर्जयेत्प्राज्ञो यद्यद्वा हतवस्त्रजाम् ॥५५६॥
तैजसं राजसं लौहं मार्तिक्यं नारिकेलजम् ।
तृणराजोद्भवं वाऽपि दीपपात्रं प्रशस्यते ॥५५७॥
एवं दीपं प्रकुर्वीत नेत्ररञ्जनकारणम् ।
दीपं तु यागपर्यन्तमधोमुखं प्रकल्पयेत् ॥५५८॥
लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ।
न स दीप इहाऽऽख्यातो ह्यघवृद्धिस्तु संभृतः ॥५५९॥
गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया ।
उच्चैः प्रदर्शयेद्दीपं न च मेदादिना क्वचित् ॥५६०॥
न मिश्रीकृत्य दद्यात्तु दीपस्नेहान् घृतादिकान् ।
कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥५६१॥
दीपस्य धूपवत् पात्रे पद्माकारविनिर्मिते ।
प्रतिपत्रं प्रदीपं च वर्त्त्या गव्यघृताक्तया ॥५६२॥

**धूपदीपपात्रग्रहणम् –**

मध्यमाऽनामिकामध्य अङ्गुष्ठाग्रेण दापयेत् ।
उत्तोरणं त्रिधा कार्यं दीपं नेत्रान्तिकं प्रिये ॥५६३॥
धूपं नासाग्रपर्यन्तं दर्शयेत् प्रियवादिनि ।
पारावतभ्रमाकारं दीपं नेत्रादि दर्शयेत् ॥५६४॥
[1] दक्षिणे सर्पिषा दीपस्तिलतैलेन वा भृतः ।
सिता वर्तिर्दक्षिणतो रक्ता वर्तिस्तु वामतः ॥५६५॥
[2] वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ।
सर्वंसहा वसुमती सहते न त्विदं द्वयम् ॥५६६॥

---

[1] दक्षिणे सार्षपं तैलं तिलतैलस्य वामतः ।
- इति पा. मेरौ ।

[2] पात्रेषु - इति पा. मेरौ ।

अकार्यपादघातञ्च दीपतापं तथैव च ।
कुर्वंस्तु पृथिवीतापं यो दीपमुत्सृजेन्नरः ॥५६७॥
सतापपापं नरकं प्राप्नोत्येव न संशयः ।
नैव निर्वापयेद्दीपं लक्ष्मीनाशं करोत्यतः ॥५६८॥
नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् ।
दीपहर्ता भवेदन्धः काणो निर्वापको भवेत् ॥५६९॥
अङ्गुष्ठाग्रेण देवेशि धृत्वा दीपन्निवेदयेत् ।
उत्तोलनं तथा कुर्याद् गायत्र्या मूलयोगतः ॥५७०॥
पारावतभ्रमाकारं भ्रामयेच्च प्रदर्शयेत् ।
देवस्य सर्वावयवान् श्लोकमेकं ततः पठेत् ॥५७१॥
सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥५७२॥

**नैवेद्यम् -**

दक्षिणे वा पुरोभागे वामे वा मण्डलं लिखेत् ।
त्रिकोणवृत्तभूबिम्बमाधारशक्तिमर्चितम् ॥५७३॥
निवेदयेत् पुरोभागे गन्धं पुष्पं च भूषणम् ।
दीपान् दक्षिणतो दद्यात् पुरतो वा न वामतः ॥५७४॥
वामतस्तु तथा धूपमग्रतो वा न दक्षिणे ।
नैवेद्यं दक्षिणे वामे पुरतो न तु पृष्ठतः ॥५७५॥
मदिरां पृष्ठतो दद्याच्चाग्रतो न कदाचन ।
गन्धःपुष्पं तथा धूपो दीपो नैवेद्यमेव च ॥५७६॥
यस्मै यद्दीयते वस्त्रमलङ्कारादि काञ्चनम् ।
तेषां दैवतमुच्चार्य कृत्वा प्रोक्षणपूजने ॥५७७॥
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत् ।
विशेषार्घ्योदकेनैव चोपचारान् समुत्सृजेत् ॥५७८॥
अन्यतोयैर्यदुत्सृष्टमर्घ्यपात्रस्थितेतरैः ।
न गृह्णाति महादेवि दत्तं विधिशतैरपि ॥५७९॥

पाद्यमाचमनीयं च दत्त्वा नैवेद्यमर्पयेत् ।
निधाय स्वर्णजे पात्रे साधारं तच्च मण्डले ॥५८०॥
संस्थाप्य चतुरस्रे च संस्कुर्याच्छास्त्रमार्गतः ।
अस्त्रमन्त्रेण संप्रोक्ष्य चक्रमुद्राभिरक्षितम् ॥५८१॥
हस्तौ तु संमुखौ कृत्वा संलग्नौ संप्रसारितौ ।
कनिष्ठाङ्गुष्ठसंलग्नौ मुद्रैषा चक्रसंज्ञिका ॥५८२॥
स्पर्शदृष्ट्यादिदोषाँश्च वायुबीजेन शोषयेत् ।
स्पृशन्दक्षकराग्रेण बह्निनबीजेन निर्दहेत् ॥५८३॥
वं बीजेनामृतीकृत्य मूलमन्त्रेण तत्पुनः ।
स्पृशेत्कराभ्यां विधिवदष्टधा चाभिमन्त्रयेत् ॥५८४॥
धेनुमुद्रां प्रदर्श्याथ गन्धपुष्पैः समर्चयेत् ।
देवमभ्यर्च्य कुर्याच्च पुष्पाञ्जलिमनन्यधीः ॥५८५॥
हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण मम सिद्धये ॥५८६॥
मूलमन्त्रं समुच्चार्य स्वाहान्तं जलमर्पयेत् ।
कराभ्यां संस्पृशन्पात्रं नैवेद्यान्ते नमो वदेत् ॥५८७॥
देवस्य दक्षिणे हस्ते जलं दत्त्वा पठेदिदम् ।
अमृतोपस्तरणमसि स्वाहेति भवाक्षरः॥५८८॥
दर्शयेद्वामहस्तेन विकचोत्पलसन्निभाम् ।
दर्शयित्वा ग्रासमुद्रां पञ्च प्राणाहुतीश्चरेत् ॥५८९॥
कनिष्ठानामिकाङ्गुष्ठयोगः प्राणस्य मुद्रिका ।
तयोर्ग्रासं गृहीत्वा प्राणाय स्वाहेति संवदेत् ॥५९०॥
तर्जनीमध्यमाङ्गुष्ठयोगेनापानकं वदेत् ।
ङेन्तं स्वाहान्तमथ च व्यानाय च ततो वदेत् ॥५९१॥
स्वाहाथ मध्यमानामाङ्गुष्ठयोगेन निर्वपेत् ।
हित्वा कनिष्ठां सर्वाभिरुदानायाग्निगेहिनी ॥५९२॥
सर्वाभिस्तु समानाय स्वाहोक्त्वा ग्रासमर्पयेत् ।
ततः स्वर्णादिजे पात्रे सुतोयं धेनुमुद्रया ॥५९३॥

अमृतीकृत्य देवाय देयं मन्त्रमिमं पठन् ।
नमस्ते देवदेवेशि सर्वतुष्टिकरं वरम् ॥५९४॥
अन्नं निवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ।
परमानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥५९५॥
उक्त्वैवं देवतावामे जलपात्रं निवेशयेत् ।
त्रिभिर्वर्णैः प्रदातव्यं देवार्थं पाकभोजनम् ॥५९६॥
घृतपक्वं दुग्धसिद्धं साधितं केवलाग्निना ।
युक्तमैक्षवपङ्केन तच्छूद्रस्य प्रशस्यते ॥५९७॥
ततः पुष्पाञ्जलिं दद्यादस्त्रमन्त्रेण बन्धनम् ।
दिशां कृत्वा जवनिकां देवस्य परितो न्यसेत् ॥५९८॥
अमृततात्मकनैवेद्यं मम इत्युच्चरेत् पुनः ।
धेनुमुद्रां प्रदर्श्याथ भुञ्जानां देवतां स्मरेत् ॥५९९॥
अष्टोत्तरशतं जप्त्वा मूलमन्त्रं ददेज्जलम् ।
नैवेद्यान्ते चाचमनं दत्त्वा होमविधिं चरेत् ॥६००॥

**षोडशोपचारमुद्राः –**

आसने पद्ममुद्रा स्याद्धस्तद्वयमधोमुखम् ।
मुद्रैषा कुशलप्रश्ने तदैवोर्ध्वमुखं पुनः ॥६०१॥
मुद्रा स्यात्स्वागते चार्घ्ये मुद्रा त्वञ्जलिरूपिणी ।
अनामाङ्गुष्ठयोर्योगात्सैवोक्ता पाद्यमुद्रिका ॥६०२॥
उत्तानं दक्षहस्तं तु कृत्वान्तिमतलं सुधीः।
कनिष्ठहीना संयुक्ताश्चतस्रोऽङ्गुल्य उन्नताः ॥६०३॥
मुद्रैषाऽऽचमने प्रोक्ताऽधोमुखी सान्त्वनामयी ।
स्पृष्टाङ्गुष्ठा भवेन्मुद्रा मधुपर्के वरानने ॥६०४॥
अधोमुखी दक्षहस्तकृता मुष्टिः कनिष्ठया ।
विमुक्ता स्नानमुद्रैषा गदिता परमेश्वरि ॥६०५॥
उत्तानं दक्षिणं हस्तं कृत्वा तन्मध्यमा पुनः ।
अङ्गुष्ठेन स्पृशेदेषा मुद्रा वस्त्रस्य कीर्तिता ॥६०६॥

एषैवानामिकास्पर्शान्मुद्रा भूषणसंज्ञिका ।
कनिष्ठा स्पर्शतो ह्येषा उपवीतस्य मुद्रिका ॥६०७॥
ज्येष्ठाग्रेण कनिष्ठाग्रं स्पृशेद् गन्धस्य मुद्रिका ।
अधोमुखं करं कृत्वा तर्जन्यग्रेण योजयेत् ॥६०८॥
अङ्गुष्ठाग्रेण मुद्रेयं पुष्पाख्या परमेश्वरि ।
अङ्गुष्ठाग्रेण तर्जन्या स्पृशेदग्रं महेश्वरि ॥६०९॥
धूपमुद्रेयमुदिता सर्वदेवप्रियङ्करी ।
ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाः सुरार्चिते ॥६१०॥
दीपमुद्रेयमुदिता सर्वदेवाश्रया शुभा ।
अनामाग्रं स्पृशेद्देवि ज्येष्ठाग्रेण तु देशिकः ॥६११॥
नैवेद्यमुद्रा कथिता तत्त्वमुद्रेति कीर्तिता ।

**नित्यहोमविधिः-**

नित्यहोमविधिं वक्ष्ये सर्वार्थं येन विन्दति ॥६१२॥
संकल्प्य परमेशानि नित्यहोमविधिं चरेत् ।
विधिवद् वह्निमानीय क्रव्यादांशं परित्यजेत् ॥६१३॥
ततश्च मन्त्रमुच्चार्य कुण्डे वा स्थण्डिलेऽपि वा ।
भूमौ वा संस्तरेद् वह्निं व्याहृतित्रितयेन तु । ॥६१४॥
आहुतित्रयमुत्क्षिप्य षडङ्गहवनं ततः ।
ततो देवीं समावाह्य मूलेनैव १ षडाहुतिम् ॥६१५॥
सम्पूज्य मूलमनुना २ पञ्चविंशतिमाहुतिम् ।
हुनेदाज्येन हविषा तिलैर्वा पायसैः शुभैः ॥६१६॥
तण्डुलैस्तिल-संमिश्रैः कैवलैर्वाऽथ पुष्पकैः ।
अङ्गावरणदेवानामेकैकामाहुतिं हुनेत् ॥६१७॥
उद्वास्य देवं वह्निञ्च पूजास्थानं व्रजेत्ततः ।
उपविश्यासने मन्त्री दद्याद् भूतबलिं ततः ॥६१८॥

---

१. षडाहुतीः - इति पाठ उचितः ।
२. पञ्चविंशतिमाहुतीः - इति पाठः समीचीनः ।

वामिनस्तूपचारान्ते कुर्युर्मद्येन तर्पणम् ।
तेषामनित्यो होमस्तु नित्यं तर्पणसेवनम् ॥६१९॥
कृत्वा स्तुत्वा नमस्कृत्य विसृजेद् बिन्दुमण्डले ।

**भूतबलिदानम् -**

ईशाने मण्डलं कृत्वा साधारं तत्र निक्षिपेत् ॥६२०॥
अन्नव्यञ्जनतोयाढ्यं पात्रं पुष्पादिपूरितम् ।
तत्र भूतानि सम्पूज्य ततस्तेभ्यो बलिं हरेत् ॥६२१॥
ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥६२२॥
भूचरा खेचराश्चैव ये तिष्ठन्त्यन्तरिक्षगाः ।
सर्वे ते प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥६२३॥
वामहस्तेन तत्पात्रे जलधारां समर्पयेत् ।
पुष्पाञ्जलिं समादाय भूतानि प्रार्थयेदिति ॥६२४॥
भूतानि यानीह वसन्ति भूतले
बलिं गृहीत्वा विधितप्रयुक्तम् ।
संतोषमा:ाद्य व्रजन्तु सर्वे
[1] क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥६२५॥
दत्त्वा पुष्पाञ्जलिं नत्वा विहरन्तु यथासुखम् ।
भूतादीनीति नाराचमुद्रया विसृजेत्ततः ॥६२६॥
यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ।
वाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ॥६२७॥
देवं तृप्तमिति ध्यात्वा नैवेद्यं गतसारकम् ।
सञ्चिन्त्य रक्षोदिग्भागे पात्रं तु स्थापयेत्ततः ॥६२८॥
गोमयादिभस्तदस्त्रेण नैवेद्यस्थानशोधनम् ।
देवोच्छिष्टं गृहीत्वा तु निर्माल्यभोजिने नमः ॥६२९॥

---

1. समन्ततोऽन्यत्र - इति पा. मेरी ।

इत्यैशान्यां विनिक्षिप्य हस्तं प्रक्षालयेत्ततः ।
पुराचमनं दद्यात् करोद्वर्त्तनमेव च ॥६३०॥

## ताम्बूलम् -

ततो दद्याच्च ताम्बूलं विष्णवे द्वादशाऽङ्गकम् ॥६३१॥
खादिरैलालवङ्गेन्दुचूर्णपर्णतमालकम् ।
१ जातिकोश दलत्वग्भिः कस्तूरीकेशरैर्युतम् ॥६३२॥
२ पूगीफलमथप्रोक्तं दशाङ्गं भास्करस्य तु ।
मृगनाभितमालाभ्यां हीनं विघ्नेश्वरस्य तु ॥६३३॥
पञ्चाङ्गचूर्णखदिरपर्णपूगीफलेन्दुकम् ३. ।
शैवं देव्या जातिकोशयुतं तच्च महेशितुः ॥६३४॥
ततश्च मुकुटादीनि दद्याद् भूषणकानि च ।
दर्शयेच्च तथाऽऽदर्शं कल्पयेच्छत्रचामरे ॥६३५॥
शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ।
आरात्रिकं ततः कुर्याद्धर्मकामार्थसिद्धये ॥६३६॥

## आरात्रिकम् -

सौवर्णे राजते कांस्ये ४ लोकनेत्रमनोहरम् ।
कुङ्कुमेन लिखेत्पद्ममष्टपत्रं सुशोभनम् ॥६३७॥
दशदीपैर्विंशतिभिः पञ्चभिर्नवभिस्तु वा ।
अष्टभिस्तत्त्वसंख्याभिः कुर्यादारात्रिकं बुधः ॥६३८॥
त्रिकोणं चैत्र षट्कोणमधोबिन्दुं निपातयेत् ।
तत्तद्विद्यामयैः पत्रैर्विशेषार्घ्यमयेन वा ॥६३९॥
आदौ तु भैरवीयन्त्रे चक्रमुद्रां प्रदर्शयेत् ।
आरात्रिकं गृहाणेदं देवताप्रीतिहेतवे ॥६४०॥

---

१. जातीफलं च जाविश्री - इति पा. मेरौ ।
२. पीगं फलम् - इति पा. मेरौ ।
३. पूगफलेन्द्रकम् - इति पा. मेरौ ।
४ लोकनेत्रमनोहरे - इति पा. उचितः ।

मन्त्रेणानेन देवेशि कुर्दादारात्रिकं बुधः।
मापैस्तिलैस्तण्डुलैर्वा गौधूमैर्यवजैरपि ॥६४१॥
ओदनोत्था शर्करोत्था हरिद्राकेशरोद्भवाः।
अष्टगन्धोद्भवा गौडा दीपा यत्नेन कारयेत् ॥६४२॥
दीपानां रक्तपीतानां वश्यस्तम्भादिकं फलम् ।
महादीपं कर्णिकायां वसुपत्रेऽष्टदीपकान् ॥६४३॥
यवगोधूमरचितान् शर्करादुग्धसंयुतान् ।
वलयाञ्चितशोभाभिः शोभितान् घृतपूरितान् ॥६४४॥
अभिमन्त्र्य ततो मन्त्री रत्नेश्वर्या नवार्णतः ।
[1] श्रींह्रींग्लूँम्लूँमयौ [2] प्रागवत्ततः श्रींह्रीमिति क्रमात् ॥६४५॥
दलेश्वर्याः समुद्दिष्टास्ततो मूलेन तां यजेत् ।
ततस्तत्पात्रमुद्धृत्य मस्तकान्तं पुनः पुनः ॥६४६॥
नववारं भ्रामयेच्च चक्रमुद्रां प्रदर्शयेत् ।
देवं प्रणम्य च ततः प्राणायामत्रयं चरेत् ॥६४७॥
मूलमन्त्रेणाथ पूर्वं न्यासान् सर्वान्समाचरेत् ।
अष्टोत्तरसहस्रं तु [3] तदर्धं त्रिशतं तु वा ॥६४८॥
अष्टोत्तरशतं वाऽपि जपेन्मूलमतन्द्रितः ।
समाप्ते तु [4] जपन्मालां निदध्यान्मस्तकोपरि ॥६४९॥

**करमाला -**

अथवाङ्गुलिमालाभिर्जपं कुर्यात्तदुच्यते ।
द्विविधं तच्च प्रत्येकं सृष्टिसंहारभेदतः ॥६५०॥
अनामामध्यमारभ्य अनामामूलपर्वणि ।
त्रिपर्वं च कनिष्ठाया अनामाग्रं महेश्वरि ॥६५१॥

---

[1] स्लूँ - इति पा. मेरौ।
[2] त्वथ - इति पा. मेरौ।
[3] नवद्वे - इति पा. मेरौ।
[4] जपे मालाम् - इति पा. मेरौ।

मध्यमाग्राच्च तर्जन्या मूलपर्वान्तिमं शिवे ।
शक्तिमाला त्वियं प्रोक्ता संहाराद्वैष्णवी भवेत् ॥६५२॥
मध्यमामध्यमारम्भ तदग्रात्परमेश्वरि ।
अनामामध्यकस्याथ प्रदक्षिणमनु व्रजेत् ॥६५३॥
तर्जन्यग्रान्तकं देवि वसुपर्वाच्छिवाभिधा ।
संहाराद् भैरवीमाला तर्जन्यग्रान्तकं यदि ॥६५४॥
सौरमाला तु संप्रोक्ता संहाराद् गाणपी भवेत् ।
अनामामध्यमारम्भ मध्यमामध्यतः शिवे ॥६५५॥
अग्रक्रमेण देवेशि तर्जन्यग्रान्तकं शिवे ।
गायत्रीमालिका प्रोक्ता संहाराद्वटुकाभिधा ॥६५६॥
अनामामध्यमारभ्य मध्यमामध्यभागतः।
मूलभागक्रमेणैव प्रदक्षिणमनु व्रजेत् ॥६५७॥
चीनमाला तु संप्रोक्ता संहारात्क्षेत्रपालजा ।
मध्यमामध्यमारभ्य तर्जनीमध्यभागतः ॥६५८॥
अग्रक्रमेण देवेशि तर्जनीमूलतः शिवे ।
गान्धर्वमालिका प्रोक्ता संहाराद्वटवासिनः ॥६५९॥
तर्जनीमूलमारभ्य चाग्रभागक्रमेण च ।
प्रदक्षिणक्रमेणैव मध्यमामूलपर्वणि ॥६६०॥
मञ्जुघोषा मालिका तु संहारात्खेचरीविधौ ।
कनिष्ठाग्रं समारभ्य मूलाग्रान्तं क्रमेण च ॥६६१॥
तर्जनीमूलपर्यन्तं माला प्रोक्ता तु शाम्भवी ।
संहाराद्वारुणी माला धनदस्य प्रकीर्तिता ॥६६२॥
कनिष्ठामूलमारभ्य सर्पदण्डक्रमेण च ।
तर्जन्यग्रान्तकं देवि यक्षिणी मालिका मता ॥६६३॥
संहारात्किन्नरी माला महामानकरी परा ।
कनिष्ठामूलमारभ्य पङ्क्तिमार्गक्रमेण च ॥ ६६४॥
कनिष्ठाग्रान्तकं देवि जैनमाला प्रकीर्तिता ।
संहाराज्जैनमाला स्यादनामामूलतः शृणु ॥६६५॥

प्रदक्षिणक्रमेणैव तर्जनीमध्यमाङ्ककम् ।
माला चान्द्री तु सम्प्रोक्ता संहाराद्विधिमालिका ॥६६६॥
नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ।
काम्यमपि करे कुर्याद्यदि माला न विद्यते ॥६६७॥
अर्घ्यपात्राज्जलं हस्ते गृहीत्वेदं पठेत्पुनः ।
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥६६८॥
सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ।
देव्या वामकरे देयं सदा जपफलं शिवे ॥६६९॥
देवस्य दक्षिणे हस्ते तोयं दत्त्वा समर्पयेत् ।
जपं च जपमालाऽथ स्थाप्या रहसि वेष्टिता ॥६७०॥
ततस्तु वीरस्तुतिभिर्घण्टावादनपूर्वकम् ।
ब्राह्मणो वेदमन्त्राद्यैः क्षत्रियः संहितादिभिः ॥६७१॥
पौराणिकाद्यैर्वैश्यस्तु शूद्रस्तु प्राकृतादिभिः ।
कौलिकैः शक्तिसहितैस्तदुच्छिष्टं च सेवयेत् ॥६७२॥
मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम् ।
पठन्नरकमाप्नोति पितृभिः सह पापकृत् ॥६७३॥
यः शूद्रो बुद्धिपूर्वं तु शृणुयाच्छ्रावयेद् द्विजः।
वेदं तौ द्वौ दुःखयुक्तौ भवेतान्तत्र नारकौ ॥६७४॥
अधिकारमदाद्यस्तु धनस्य मदतोऽपि वा ।
शूद्रस्तु शृणुयाद्वेदं स निर्वंशश्च निर्धनः॥६७५॥
अज्ञानाच्चेच्छ्रुतो वेदः श्रावितो वा द्विजन्मना ।
प्रजापत्यत्रयं कृत्वा तौ द्वौ शुद्धौ भविष्यतः ॥६७६॥
ततोऽर्घ्यपात्रमादाय मूलमुच्चार्य मन्त्रवित् ।
साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ॥६७७॥
तत्सर्वं भगवन् देव गृहाणाराधनं परम् ।
इत्यर्घ्योदकमुत्सृज्य किञ्चिद् देवस्य दक्षिणे ॥६७८॥
करे समर्पयेद्विद्वान् कृतमाराधनं ततः ।
भक्त्या प्रणम्य देवेशं श्लोकैरेभिः क्षमापयेत् ॥६७९॥

यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद् गृहाणानुकम्पया ॥६८०॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि त्वं गतिः परमेश्वर ॥६८१॥
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥६८२॥
नाथ योनिसहस्रेषु यासु यासु व्रजाम्यहम् ।
तासु तासु सदा भक्तिरव्ययाऽस्तु सदा त्वयि ॥६८३॥
देवो दाता च भोक्ता च देवः सर्वमिदं जगत् ।
देवो जयति सर्वत्र यो देवः सोऽहमेव हि ॥६८४॥

**प्रणामप्रदक्षिणे –**

नमनं मानसं प्रोक्तं कायिकं वाचिकं तथा ।
त्रिविधे च नमस्कारे कायिकं चोत्तमं स्मृतम् ॥६८५॥
पौराणिकैर्वैदिकैर्वा क्रियते वाचिकं पुनः ।
मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः पुनः ॥६८६॥
यत्स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तो हि वाचिकस्तु ततः स्मृतः ॥६८७॥
जानुभ्यानवनीं गत्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कार उत्तमः कायिकः स्मृतः ॥६८८॥
पुटीकृत्य करौ शीर्षे दीयेते पादयोस्तथा ।
स्पृष्ट्वा च जानुशीर्षाभ्यां भवेदन्या नमस्कृतिः ॥६८९॥
पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥६९०॥
बाहुभ्यां च सजानुभ्यां शिरसा वचसा दृशा ।
पञ्चाङ्गोऽयं प्रणामः स्यात्पूजासु प्रवराविमौ ॥६९१॥
भूमौ निपत्य यः कुर्यात्कृष्णेऽष्टाङ्गनतिं सुधीः ।
सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात् ॥६९२॥

वेदविद्भ्यो धरां दत्त्वा यत्फलं लभते नरः ।
तत्फलं लभते भक्त्या कृष्णे कृत्वा प्रदक्षिणम् ॥६९३॥
शङ्खहस्ते च सर्वत्र दक्षिणं परिकीर्तितम् ।
एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद् विनायके ॥६९४॥
चत्वारि केशवे दद्याच्छिवे चार्धप्रदक्षिणम् ।
त्रिकोणाकारा सर्वत्र नतिः शक्तेः समीरिता ॥६९५॥
अर्धचन्दं महेशस्य पृष्ठतश्च समीरिता ।
शिवप्रदक्षिणे मन्त्री अर्धचन्द्रक्रमेण च ॥६९६॥
सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत् ।
प्रदक्षिणत्रयं कृत्वा नमस्कारं तु पञ्चकम् ॥६९७॥
पुनः प्रदक्षिणं कुर्यात्पुनर्जन्म न विद्यते ।
वृषस्य वृषणं स्पृष्ट्वा दक्षाग्रेऽङ्गुष्ठतर्जनी ॥६९८॥
शृङ्गमध्ये शिवं दृष्ट्वा पुनर्जन्म च विद्यते ।
वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् ॥६९९॥
षण्डं च सोमसूत्रं च पुनःषण्डं पुनर्वृषम् ।
पदे पदान्तरं गच्छेत् कलौ शरलवर्जितः ॥७००॥
वाचा स्तोत्रं मनोध्यानं चतुरङ्गप्रदक्षिणम् ।
सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम् ॥७०१॥
अपसव्यं न कुर्वीत कृत्वा चान्द्रायणं चरेत् ।
प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ॥७०२॥
दर्शयेद्दक्षिणं पार्श्वं मनसाऽपि प्रदक्षिणम् ।
त्रिधाऽववेष्टयेत्सम्यग् देवतायाः प्रदक्षिणे ॥७०३॥
एकहस्तप्रणामस्तु एकं वाऽपि प्रदक्षिणम् ।
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥७०४॥
दक्षिणाद् वायवीं गत्वा दिशं तस्माच्च शाम्भवीम् ।
ततश्च दक्षिणां गत्वा नमस्कारं त्रिकोणवत् ॥७०५॥

ब्रह्मार्पणस्य मनुना कुर्याद् ब्रह्मार्पणं ततः ।
[1] तारोदितः पूर्वमिति प्राणबुद्धीति संवदेत् ॥७०६॥
देहधर्माधिकारेति जाग्रत्स्वप्न [2] सुषुप्त्यव -
स्थासूक्त्वा मनसा वाचा कर्मणाऽभ्यन्तरा ततः॥७०७॥
यच्छब्दश्चोदरेणेति शिश्ना यच्च स्मृतं च यत् ।
उक्तं यच्च कृतं यच्च सर्वं ब्रह्मार्पणं भव ॥७०८॥
तु स्वाहेति च मन्त्रोऽयं षट्षष्ट्यर्णः समीरितः ।
उद्वासयेत्ततो देवं परिवारगणैः सह ॥७०९॥
इति पुष्पाञ्जलिं दत्त्वा प्रणम्य परिभावयेत् ।
देवस्याङ्गे विलीनं तद्रश्मिवृन्दमशेषतः ॥७१०॥
तेजोरूपं शिवं ध्यात्वा क्षमस्वेति पुनः पुनः ।
[3] क्षमाप्यारोपयेत्स्वीयहृदम्भोजे तु देवताम् ॥७११॥

**संहारमुद्रा -**

पृष्ठलग्नौ करौ कृत्वा द्व्यङ्गुल्यन्योन्यमध्यतः ।
परिवर्त्त्य ततः कुर्यात्तर्जन्यौ सरलाकृती ॥७१२॥
विसर्जने निगदिता मुद्रा संहारसंज्ञिका ।
गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर ॥७१३॥
एते ब्रह्मादयो देवा न विदुः परमं पदम् ।
विसृज्यानेन मन्त्रेण ततः पूरकवायुना ॥७१४॥
ध्यायँश्च मन्त्रेणानेन ध्यात्वा तां स्थापयेद् हृदि ।
तिष्ठ तिष्ठ परे स्थाने स्वस्थाने परमेश्वर ॥७१५॥
यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ।
इति संस्थाप्य सम्पूज्य स्वात्मानं तन्मयं स्मरेत् ॥७१६॥

---

1. तारस्तत्सत् - इति पा. मेरौ ।
2. सुषुप्तयः - इति पा. मेरौ ।
3. क्षमयारोपयेत् - इति पा. मेरौ ।

[1] ईशान्यां मण्डलं कुर्याद [2] वातपद्मविवर्जितम् ।
[3] निर्माल्यभोक्तुः पूजार्थं पञ्चायतनपूजने ॥७१७॥
कर्तव्यानि तु पञ्चैव [4] ईशादामध्यमर्चयेत् ।
लम्बोदरो गणेशश्च [5] तेजश्चण्डो विवस्वतः ॥७१८॥
विष्वक्सेनो हरेः प्रोक्त [6] ईश्वरी च महेशितुः ।
चण्डेश्वरो भवान्याश्च [7] मन्त्रोऽहं तादृशं चरेत् ॥७१९॥
लेह्यचोष्यान्नपानादि निर्माल्यं स्रग्विलेपनम् ।
निर्माल्यभोजिने तुभ्यं ददामि श्रीशिवाज्ञया ॥७२०॥
इति नैवेद्यशेषन्तु दत्त्वा नत्वा विसर्जयेत् ।
अथ ह्रीं ह्रीं सःबीजैस्तु [8] सहितेनामुना पुनः ॥७२१॥
मन्त्रेण भास्करायार्चामच्छिद्रार्थं निवेदयेत् ।
नमो विवस्वते तुभ्यं भास्वते विष्णुतेजसे ॥७२२॥
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ।
ततः कृताञ्जलिश्चित्तं स्थिरीकृत्य पठेदिति ॥७२३॥
यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ।
सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः ॥७२४॥
अर्घ्यतोयेन च ततो गन्धपूजावशेषितम् ।
आलोड्य किञ्चिन्मूलेन मन्त्रयेदष्टधा पुनः ॥७२५॥
प्रोक्षयेत्तेन तोयेन स्वात्मानं मूलमन्त्रतः ।
निर्माल्यं मस्तके धार्यं मूलमन्त्रेण मन्त्रिणा ॥७२६॥

---

१. ऐशान्याम् - इति पा. मेरौ ।
२. द्वारपद्मविवर्जितम् - इति ख.मा.पा. ।
द्वारि पद्मविवर्जितम् - इति पा. मेरौ ।
३. निर्माल्यं भोक्तुम् - इति पा.मेरौ ।
४. ईशानाद्यं समर्चयेत् - इति पा. मेरौ ।
५. चन्द्रो - इति पा. मेरौ ।
६. चण्डेश्वरी - इति ख.मा.पा. ।
७. मन्त्रैस्तादृशं चरेत् - इति पा. मेरौ ।
८. सहितैर्नमसा -इति पा. मेरौ ।

प्राश्य पादोदकं पश्चान्नैवेद्यं विभजेत् पुनः ।
तद्भक्तेभ्यः स्वयं भुक्त्वा तन्मयो विहरेत्सुखम् ॥७२७॥
शैवस्तु शिवनिर्माल्यप्रसादस्याधिकारवान् ।
अन्यो निरयमायाति न दोषः पञ्चसङ्गमे ॥७२८॥
स्वयंभूलिङ्गतीर्थे वा प्रसादं वाऽपि भक्तितः ।
अशैवा वाऽथ वा शैवा मुच्यन्ते पापराशितः ॥७२९॥
शूद्रसंस्थापितं लिङ्गं पूजयेद् वा नमेत वा ।
तत्सम्बन्धिप्रसादादि गृह्णन्निरयमाप्नुयात् ॥७३०॥
अयं पूजाविधिर्मुख्यो युष्मभ्यं संप्रकाशितः ।

**इति श्रीतन्त्रचिन्तामणौ**
**साधारणनित्यार्चनायामन्तयर्जनादिविर्सजनान्तनिर्णयनामा**
**सप्तदशः प्रकाशः ।**

*****

# अष्टादशः प्रकाशः

## कौलवामिनोर्नित्यार्चनम्

**कौलवाममार्गोत्पत्तिः -**

दक्षयज्ञे यदा देवि त्वया त्यक्तं कलेवरम् ।
अहं गृहीत्वा तत्स्कन्धे चितां प्रवेष्टुमुद्यतः ॥१॥
वडवाग्नेर्गवेषार्थं यत्र यत्राभवत् स तु ।
तत्र तत्र च शक्रेण तूर्णं निर्वापितं जलैः ॥२॥
एवं पर्यटतो वर्षं प्रस्वेदो मे महानभूत् ।
तद्बिन्दुपातनिर्दग्धा धरणीयं भविष्यति ॥३॥
तदा संप्रार्थितो विष्णुर्धरणीरक्षणाय च ।
तदाशु लघुभिर्बाणैस्त्वदङ्गानि समाच्छिनत् ॥४॥
चतुरशीति खण्डानि कृत्वाऽसौ पातयद् भुवि ।
वातेन वीजितश्चाहं प्रीतोऽहमखिलस्तदा ॥५॥
विष्णुश्च प्रकटीभूय पादयोः पतितो मम ।
उत्थाय च परिष्वक्तस्तव लोकश्च विस्मृतः ॥६॥
तावद् ब्रह्मादिका देवा नारदाद्या महर्षयः ।
मां तुष्टुवुस्तदा वाक्यं विष्णुः प्रोवाच पार्वति ॥७॥
ज्ञानदोऽसि महेश त्वं कथं मोहमुपागतः ।
सत्याः शरीरेण सह प्रवेष्टुं हव्यवाहनम् ॥८॥
अनुगच्छेत्पतिं नारी न पुमान् ताञ्च गच्छति ।
इति शास्त्रमनादृत्य कथं देव विमोहितः॥९॥
एवं वदति देवेशे ब्रह्मणा मां हरिं तथा ।
श्लेषालङ्कारवाक्यैश्च तुष्टुवुर्विधिना सह ॥१०॥
आवाभ्यान्तु तदा प्रोक्ता याजयध्वं वरं द्विजाः।
तदा तै ब्राह्मणैरुक्तं जातोऽयं धर्मविप्लवः ॥११॥

दक्षयज्ञाश्रितैः शैवा ब्राह्मण्याद् भ्रंशिता द्विजाः ।
यज्ञं गताश्च सर्वेऽपि शैवैः शप्ता द्विजातयः ॥१२॥
विष्णुना कर्तितैरङ्गैः सत्याश्चेदं धरातलम् ।
स्थले स्थले शवस्पर्शाद् ब्रह्मकर्मविवर्जितम् ॥१३॥
तस्माद्धरायाः संशुद्धिर्विप्राणां चापि शुद्धता ।
ब्रह्मवाक्यस्य सत्यत्वं यथा भवति तत्कुरु ॥१४॥
ततो ध्यात्वा मया प्रोक्तं सम्मतीकृत्य विष्णुना ।
यत्र वेदक्रिया ध्वस्ता तत्र तत्र प्रवर्त्यताम् ॥१५॥
ये विप्रा शापनिर्दग्धा ब्रह्मकर्मविवर्जिताः ।
तेषां तु कौलधर्मोऽयं भुक्तिमुक्त्योस्तु साधनम् ॥१६॥
ये विप्राः पीठसञ्जाताः शापनिर्दग्धविप्रताः ।
तेषां कुलेऽधिकारोऽयं मार्गस्यास्य प्रजायते ॥१७॥
तत्कुल एव पूज्यत्वात्कौलोऽयं मार्ग उच्यते ।
वाममार्गस्ततो न्यूनस्तेषां क्षत्रियवैश्यकौ ॥१८॥
यजमानस्तयोस्तत्राधिकारः समुदाहृतः ।
सिद्धान्तीयस्ततो न्यूनस्तत्र शूद्राधिकारता ॥१९॥
यो पारम्पर्यमज्ञात्वा कौलधर्मं विशन्ति ते ।
निःस्वाः सन्ततिहीनाश्च रोगिणो नात्र संशयः ॥२०॥
कौलज्ञाने ह्यसिद्धो यस्तद्द्रव्यं भोक्तुमिच्छति ।
स महापातकी देवि सर्वकार्यबहिष्कृतः ॥२१॥
समयाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः ।
न सिद्धयः कुलभ्रंशस्तत्संसर्गं न कारयेत् ॥२२॥
यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ।
स सिद्धिमिह प्राप्नोति परत्र च परां गतिम् ॥२३॥

[1] कुलद्रव्याणि सेवन्ते येऽन्यदर्शनमाश्रिता: ।
तदङ्गरोमसंख्यातं जायन्ते भूतयोनिषु ॥२४॥
मदप्रस्खलितात्मा च न किञ्चिदपि वेत्ति चेत् ।
न ध्यानं न तपश्चर्या न धर्मो न च सत्क्रिया ॥२५॥
न दैवं न गुरुर्नात्मविचारो यदि कौलिके ।
केवलं विषयासक्त: पतत्येव न संशय: ॥२६॥
श्रीगुरो: कुलशास्त्रेभ्य: सम्यग्विज्ञाय वासनाम् ।
पञ्चमुद्रा निषेवेत चान्यथा पतितो भवेत् ॥२७॥
आवृत्तिं गुरुपङ्क्तिञ्च बटुकादीनपूज्य य: ।
वीरोऽप्येवं वृथापानाद्देवताशापमाप्नुयात् ॥२८॥
अथ पूजाप्रकारस्तु कथ्यते कौलवामिनो: ।
आत्मस्थानमनुद्रव्यदेवशुद्धिं प्रकल्पयेत् ॥२९॥
स्नानं सन्ध्या भूतशुद्धि: प्राणायाम: प्रतिष्ठिति: ।
प्राणानां मातृकान्यासादिकै: स्यादात्मशोधनम् ॥३०॥
संमार्जनानुलेपाद्यैर्दर्पणोदरवत्कृतम् ।
वितानधूपदीपाद्यै: स्थानशुद्धिरियं मता ॥३१॥
ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च ।
क्रमोत्क्रमत्रिरावृत्तिर्मन्त्रशुद्धिरियं मता ॥३२॥
पूजाद्रव्याणि संप्रोक्ष्य मूलास्त्रेण विधानवित् ।
दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥३३॥
पीठे देवं प्रतिष्ठाप्य सकलीकृत्य प्रोक्षयेत् ।
अर्घ्योदकेन मूलेन [2] त्रिर्दीपनीं प्रदर्शयेत् ॥३४॥
देवशुद्धिं विधायेत्थं पश्चाद्यजनमारभेत् ।
सा पूजा सफला ज्ञेया त्वन्यथा निष्फला भवेत् ॥३५॥

---

१. संवतं कुलद्रव्याणि योऽन्यदर्शनमाश्रित: - इति पाठ उचित: ।
२ त्रि: दिप त्रि: प्रदर्शयेत् - इति ख मा.पा. ।

आदौ जलमधिष्ठाय पादयोः क्षालनं ततः ।
द्विराचम्य शिखां वद्ध्वा कुर्याद् द्वारेशपूजनम् ॥३६॥
विघ्नानुत्सारयित्वा तु ततः पुष्पादिशोधनम् ।
[1] वीरासने तथाविश्य विजयां भक्षयेत्ततः ॥३७॥
शक्तिं पार्श्वे च संस्थाप्य न्यासजालं समाचरेत् ।
कुलद्रव्यं च संशोध्य पात्राणां स्थापनं ततः ॥३८॥

**वीरासनानि -**

मृदुकोमलमासीनं सङ्ग्रामपतितं च यत् ।
जन्तुव्यापादितं वाऽपि मृतं वा नरमासनम् ॥३९॥
गर्भच्युतं च नारीणामथ वा योनिजं च वा ।
त्वचं वा तच्छरीरं वा शिवे कुर्यात्ततोऽर्चनम् ॥४०॥
ऋतुरक्ताक्तवस्त्रं वा आसनाय प्रकल्पयेत् ।
श्मशानकाष्ठघटितं पीठं वा यज्ञदारुजम् ॥४१॥
नादीक्षितो विशेज्जातु कृष्णासाराजिने गृही ।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ॥४२॥
विशुद्ध आसने कुर्यात् स्थापनं पूजनं विधिः ।

**श्रीदेव्युवाच -**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥४३॥
मुण्डादिवीरपर्यन्तं संस्कारसाधनं वद ।

**श्रीशिव उवाच -**

रहस्यातिरहस्यं च न कुत्रापि मयेरितम् ॥४४॥
तव प्रीत्या महेशानि कथ्यते शृणु साम्प्रतम् ।
मृद्वासनं भवेदादौ द्वितीयं स्यादचूडकम् ॥४५॥
कोमलं च तृतीयं स्यान्मुण्डप्रोक्तं चतुर्थकम् ।
मृतासनं पञ्चमं च षष्ठं वीरासनं मतम् ॥४६॥

---

[1] वीरासनं चोपविश्य - इति पा. उचितः ।

महावीरासनं देवि सप्तमं परिकीर्तितम् ।
सप्तानां साधयेद्देवि मालापात्रविशोधनम् ॥४७॥
१. यत्र संशोधनं चैव सर्वं संकथितं पुरा ।
इदानीमासनानां च साधनां शृणु पार्वति ॥४८॥

**आसनलक्षणम् -**

अर्वाक्षण्मासतो गर्भच्युतमाहुर्मृदुं बुधाः ।
चूडोपनयनैर्हीनं मृतं वाऽचूडकं विदुः ॥४९॥
निवृत्तचूडको बालो हीनोपयनः शिवे ।
यो मृतः पञ्चमे वर्षे तमेव कोमलं विदुः ॥५०॥
सामान्यमरणं प्राप्तं प्रोक्तं देवि मृतासनम् ।
वीररूपेण सञ्जातं तच्च वीरासनं विदुः ॥५१॥
आवेशशूलपाशादि महावीरासनं मतम् ।
अखण्डाङ्गं शवं देवि सखण्डं मस्तके नयेत् ॥५२॥
तन्मुण्डं यन्त्रमालादि पात्रकर्मणि कीर्तितम् ।

**आसनसंस्कारः -**

शवमानीय देवेशि गर्भजं यदि वा शवम् ॥५३॥
सप्तमाष्टममासीनं चूडकं वाऽपि कोमलम् ।
स्थानं संशोध्य यत्नेन वीरवेषो मुदान्वितः ॥५४॥
ततः संस्कारमाचर्य संस्थाप्य विमले स्थले ।
गन्धाष्टकं समादाय प्रोक्षयेत्प्रथमं ततः ॥५५॥
पञ्चामृतैः पञ्चगव्यैः कलापञ्चसमन्त्रितैः ।
मूलेन स्थापयेत्तत्र पीठचक्रे धरण्यधः ॥५६॥
त्रिकोणं विन्दुं मायां च चतुरस्रे त्रिकोणकम् ।
त्रिकोणं तस्य वाह्ये तु पद्ममष्टदलं लिखेत् ॥५७॥

---
१. मन्त्रसंशोधनम् - इति ख.मा.पा. ।

षोडशारं च तद्बाह्ये त्रिवृत्तं त्रिगुणान्वितम् ।
मूलदेवीं च तन्मध्ये मूलेन परिपूजयेत् ॥५८॥
वृत्तं च त्रिगुणं चैव आदिमाद्येन योजयेत् ।
वाङ्मायाकमलास्तत्र वर्णादौ सर्वकर्मसु ॥५९॥
वह्नेर्दशकलास्तत्र कोणे चाष्टदले तथा ।
षोडशारे त्रिवृत्ते च कला: सोमस्य पूजयेत् ॥६०॥
तत्रैव स्थापयेद् वीरं मृद्वाख्यं वा प्रयत्नत: ।
स्वयन्त्रं विलिखेत्तत्र साधारशक्तिपूर्वकम् ॥६१॥
सुधासिन्धुं मणिद्वीपं चिन्तामणिगृहं तथा ।
श्मशानं पारिजातं च तन्मूले शववेदिकाम् । ६२॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं तदनन्तरम् ।
अधमार्दि ततो मन्त्रा: पाणिपादं च युग्मकम् ॥६३॥
अकारादिक्षकारान्तं मातृकान्यासरूपकम् ।
तत्स्थाने पूजयेन्मन्त्री हृदि न्यासादि पूजयेत् ॥६४॥
करन्यासं ततो मन्त्री कराभ्यां पूजयेत्तत:।
अधोमुखं मृतं कृत्वा तन्मुखे मधुरं वदेत् ॥६५॥
हे वीर परमानन्द देवीपर्यङ्क शङ्कर ।
अष्टसिद्धिं च मे देहि मम शान्तिं सदा कुरु ॥६६॥
एतद् ब्रूहि च वीरेन्द्र वसुवर्णं मुखे क्षिपेत् ।
एलां लवङ्गं जातीं च फलं ताम्बूलसंयुतम् ॥६७॥
खदिरार्द्रके च गुडं क्रर्पूरं रक्ततन्तुना ।
मूलेन भावयेत्तत्र जुटिकां दृढमुष्टिकाम् ॥६८॥
अर्केन्दुशितवात्यालनिर्मितां दीपवर्त्तिकाम् ।
निमन्त्रयेत्तत: शाक्त: सप्तवाराननुक्रमात् ॥६९॥
चन्दनागुरुपुष्पाद्यैर्मूर्ध्नि देवीं प्रपूजयेत् ।
जीवन्यासं ततो मन्त्री प्राणमन्त्रेण साधयेत् ॥७०॥
गुदे लिङ्गे तथा नाभावुदरे गुह्यदेशके ।
तथोरुजानुजङ्घासु गुल्फपादतले तथा ॥७१॥

शीर्षे कण्ठे नासिकायां चक्षुषोः कर्णयोरपि ।
शिखाकवचगण्डेषु ह्यूर्ध्वाधोष्ठकयोस्तथा ॥७२॥
दन्तयोश्चैव जिह्वायां शिरःपृष्ठे च पार्श्वयोः ।
हृदादिके च बाहुभ्यां पादाभ्यां च तथैव च ॥७३॥
सर्वाङ्गे विन्यसेदेवं पीठं न्यासमनुत्तमम् ।
सूर्यस्य मण्डलं तत्र तपिन्यादिकलात्मकम् ॥७४॥
मृतकाय शवायात्र नमश्चान्ते पदं ततः ।
स्नापयेन्मूलमन्त्रेण पूजितेनाष्टवारिणा ॥७५॥
सूर्यसोमात्मकं पीठमग्निरूपं प्रकल्पयेत् ।
मेरुपृष्ठऋषिश्छन्दः सुतलं तदनन्तरम् ॥७६॥
कूर्मो देवस्ततः पश्चाद्धमार्थसाधने ततः ।
मोक्षे पुनर्मनोश्चैव सिद्ध्यर्थे परिकीर्त्तितम् ॥७७॥
कूर्ममुद्रां दर्शयित्वा अस्त्रावगुण्ठने ततः ।
शक्तियोनिमत्स्यमुद्रां धेनुमुद्रां ततः शिवे ॥७८॥
प्रदर्शयेच्छाटिकायां चतुरस्रं प्रदर्शयेत् ।
धृत्वा विमर्शयेन्मूलं पृथ्वित्वयेति क्रमात् ॥७९॥
ततो वज्रोदकेत्यादिमनुभिः कामसंज्ञकैः ।
प्रणवं पूर्वमुद्धृत्य सहस्रारपदे ततः ॥८०॥
हुं फट् स्वाहा तदन्ते च रक्ष रक्ष ततो वदेत् ।
महाप्रतिसरे सर्वविघ्नान् छेदय युग्वदेत् ॥८१॥
हुं फडन्तं समुद्धृत्य वह्निजायां समुच्चरेत् ।
दिक्पालयजनं कार्यमिन्द्रादिक्रमयोगतः ॥८२॥
वीरार्गलाघोरमन्त्रैस्तथा पाशुपतैरपि ।
महामण्डलमन्त्रैर्वा दिग्बन्धं तत्र कारयेत् ॥८३॥
शिवावलिं तत्र दद्याद् ग्रहणादावपि प्रिये ।
आदौ मध्ये तथा चान्ते त्रिवारं तु शिवाबलिः ॥८४॥
मुण्डग्रहणकाले तु सर्वथा तु शिवाबलिः।
शिवां शक्तिं च वा पूज्य दिक्पालान् बलिसंयुतान् ॥८५॥

पूजयेत्परमेशानि सायुधादि यथाक्रमम् ।
एवं क्रमेण वीरेन्द्रः सर्वेषां बलिमाहरेत् ॥८६॥
वाङ्मायाकमलाः प्रोच्य देव्यामुक एष वै यजुः ।
प्रवर्तते इमं भागबलिं गृह्णन्तु युग्मकम् ॥८७॥
अत्र तिष्ठ नमः प्रोच्य अस्तु ते हूँ फट् स्वाहा ।
अकारादिक्षकारान्तान् बिन्दुयुङ्मातृकाक्षरान् ॥८८॥
शीर्षादिपादपर्यन्तं वेष्टयेद्दक्षिणक्रमात् ।
सार्धं त्रिबलयैर्युक्तं वेष्टयेत्साधकोत्तमः ॥८९॥
नानासुगन्धद्रव्येण रक्तचन्दनचन्दनैः ।
काश्मीरागुरुकं दत्त्वा पीतसूत्रेण वेष्टयेत् ॥९०॥
बन्धयेद्विविधैर्द्रव्यैः क्षारयुक्तहरिद्रया ।
बध्नीयाद्रक्तसूत्रेण पट्टसूत्रेण वाऽपि वा ॥९१॥

**अधिकारितानिर्देशः –**

निर्द्वन्द्वो निरहङ्कारः शुद्धनाडीगणावृतः ।
पाखण्डो बुद्धिरहितः सर्वभूतहिते रतः ॥९२॥
सर्वावयवसंशुद्धः सर्वशास्त्रविशारदः ।
कृताभिषेको विद्याज्ञो जपपूजादितत्परः ॥९३॥
मृद्वासने वसेत्सो हि त्वन्यथा नरकं व्रजेत् ।
अज्ञानान्मोहदम्भैश्च दृष्टादृष्टं करोति यः ॥९४॥
स याति नरकं घोरं पिशाचत्वमवाप्नुयात् ।
प्रयान्ति ते महामूढा व्याधित्वं स्वल्पजीवितम् ॥९५॥
विशेद्वीरस्तु शास्त्रज्ञः समयाचारतत्परः ।
मन्त्रज्ञस्तन्त्रदर्शी च यन्त्रमन्त्रविचक्षणः ॥९६॥
निग्रहानुग्रहे शक्तश्चतुर्वर्गविनोदकः ।
ससिद्धः सिद्धिदो लोके शापानुग्रहणे क्षमः ॥९७॥
अशक्तः कुरुते यस्तु मृत्युस्तस्य न संशयः ।
मुद्रासनमिदं प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥९८॥

**देव्युवाच -**

देवेश श्रोतुमिच्छामि अचूड़कविशोधनम्।
अचूडकासने देवि सिद्धय: सकला: स्थिता: ॥९९॥
तमासनं समादाय मकारपञ्चकान्वित: ।
भौमाष्टम्यां चतुर्दश्यां [1] मम वा दीपकोत्सवे ॥१००॥
कुलऋक्षेऽपि देवेशि अचूडकासनं भवेत्।
दिग्बन्धभूतशुद्धादीन् कृत्वा यत्नेन पार्वति ॥१०१॥
वज्रोदकं समारभ्य रक्ष रक्षान्तिकं शिवे ।
मन्त्रान् विज्ञाय यत्नेन साधयेदिष्टसाधनम् ॥१०२॥
अन्यत्सर्वं पूर्ववत्स्यात् कोमलेऽप्येवमेव तु ।
मुण्डासनं प्रवक्ष्येऽहं शृणु सावहिता भव ॥१०३॥
भौमाष्टम्यां चतुर्दश्यां मङ्गले शनिवासरे ।
दीपोत्सवे च फाल्गुन्यां साष्टरात्रिदिनेऽपि च ॥१०४॥
पूर्वकृत्यं समाप्याथ याममात्रं गते निशि ।
वीरवेषो दयायुक्तो भक्तभक्तो जितेन्द्रिय: ॥१०५॥
महाबलो महाबुद्धिर्विजितेन्द्रिय: शास्त्रवित्।
खड्गहस्तो मुक्तकेश: सिन्दूरतिलकान्वित: ॥१०६॥
बलिद्रव्याणि चादाय दृढभक्तो महारुचि: ।
वीरसाधनसामग्रीसंवृत: साधकोत्तम: ॥१०७॥
शिवाबलिं प्रदायादौ तदन्ते मुण्डसाधनम्।
शिवारूपा स्वयं देवी तत्र विघ्नहरा ध्रुवम् ॥१०८॥
अन्यथा विघ्नकर्तारो देवा दैत्याश्च मानवा: ।
सर्वविघ्नविनाशार्थं सिद्ध्यर्थं भैरवीं यजेत् ॥१०९॥
श्मशाने गह्वरे नद्यां शून्यगेहेऽपि साधयेत्।
श्मशाने चेन्महेशानि विधिस्तत्र श्मशानवत् ॥११०॥

---

१. चतुर्दश्याममायी दीपकोत्सवे - इति ख.मा.पा. ।

अन्यत्र वीरवत्कार्यं साधनं सर्वसाधनम् ।
खादिरान् कीलकानष्टौ निखनेन्मन्त्रमुच्चरेत् ॥१११॥
महामण्डलमन्त्रैश्च सर्वविघ्नान् विघातयेत् ।
मुण्डमानीय यत्नेन पञ्चगव्यं विना क्षिपेत् ॥११२॥
दुग्धेन स्नानमाचर्य ततः संविज्जलेन च ।
तदन्ते सुरया स्नानं कृत्वा यत्नेन पार्वति ॥११३॥
तैलं लाप्य च तन्मुण्डे सिन्दूरं कज्जलं तथा ।
गन्धपुष्पैश्च सम्पूज्य खनेद्धस्तार्धमानतः ॥११४॥
तारायां कालिकायां च छिन्नायामपि पार्वति ।
मुण्डकादिभवेत्पीठमाधारादिकमेव च ॥११५॥
तत्रापि दशशक्तौ तु त्रिधा भिन्ना महेश्वरि ।
ऋतुमत्यां तथा शक्तौ यत्किञ्चित्पीठमर्चयेत् ॥११६॥

**आसनकालावधिः –**

ऋतुवस्त्रासनं देवि सूत्रान्तं परिकीर्त्तितम् ।
मुण्डासनं तु मज्जान्तं तथा शवासनं प्रिये ॥११७॥
कुचासनं जपान्तं च सुरतासनमेव च ।
मृदुकोमलचूडादिचूर्णान्तं परिकीर्त्तितम् ॥११८॥
तथा वीरासनं देवि समादाय प्रयत्नतः ।
हृन्मलं दूरतस्त्यक्त्वा हृदयं शोधयेत् पुनः ॥११९॥
वस्त्राच्छन्नं भूमयं वा कृत्वा स्थित्वा जपं चरेत् ।
नरचर्मासनं देवि गजचर्मासनं तथा ॥१२०॥
वस्त्रासनं सभङ्गान्तं सलोमान्तं नृकेशरी ।
संविद्रसं सगाजाख्यं [1] भूणाख्यं त्रोटतान्तकम् ॥१२१॥
योनित्वगासनं देवि सलोमान्तं महेश्वरि ।
योन्यासनं सजीवान्तं पातान्तं सुरतासनम् ॥१२२॥

---

१. तूर्णाख्यम् - इति ख.मा.पा. ।

विपरीतासनं देवि तत्पातान्तं प्रकीर्तितम् ।
तदन्ते सन्त्यजेद्देवि यद्यन्यं चोत्तरोत्तरम् ॥१२३॥
विष्टरासनकं देवि छेदनान्तं प्रकीर्तितम् ।
क्रमात्सिद्धिप्रदं देवि सर्वकार्यकरं भुवि ॥१२४॥
व्याघ्रासनं सलोमान्तं केचिद् भङ्गान्तमम्बिके ।
इति संक्षेपतः प्रोक्तं कालसंख्यां शृणु प्रिये ॥१२५॥
ऋतुमत्यासनं देवि त्रिदिनात्त्रिगुणाकृति ।
ऋतुवस्त्रासनं देवि त्रिमासात्फलदायकम् ॥१२६॥
मुण्डासनं तु षण्मासैर्दिनान्तन्तु शवासनम् ।
नरचर्मासनं देवि मासान्तफलमुच्यते ॥१२७॥
कुचासने द्विमासेन फलं भवति सुन्दरि ।
रहासने महेशानि पक्षान्तं सुफलं भवेत् ॥ १२८ ॥
मृद्वासने तु मासेन कोमलं तत्त्वमासिकम् ।
फलं भवति देवेशि ऊर्णाख्ये दशवर्षतः ॥१२९॥
अचूडके विष्णुतत्त्वैर्वीरेऽपि [1] मन्त्र एव च ।
वस्त्रासने पञ्चवर्षैः सैंहे तु पञ्चमासकैः ॥१३०॥
मृगाख्ये वर्षषट्कैश्च ऊर्णाख्ये दशवर्षतः ।
योनित्वगासने देवि सप्ताहेन फलं भवेत् ॥१३१॥
विष्टरे मासषट्कैश्च फलं भवति पार्वति ।

### आसनौचित्यनिरूपणम् -

मृतासनं विना देवि यो जपेत् कालिकां नरः ॥१३२॥
तावत्स नारकी ज्ञेयो यावदाभूतसंप्लवम् ।

### अनुकल्पनिरूपणम् -

मृताभावे कुशरूपं विष्टरं परिकल्पयेत् ॥१३३॥

---

1. वीरमन्त्रेण एव च - इति ख.मा.पा. ।

पूज्यं पीठं विष्टराख्यं पूज्या ताराम्बिका परा ।
श्रीदेव्या विष्टरो देवि धारातस्याः स्फुटाऽस्ति च ॥१३४॥
विष्टरं साधकस्याथ कथ्यते शृणु साम्प्रतम् ।
भूतपत्राणि यस्मिन्वै सकुशेऽप्यभिधीयते ॥१३५॥
हस्ते पादे दश दशमिता दिग्युगं हृत्सरोजे
विंशत्संख्याः सकलवरदे मस्तके कीर्तिताश्च ।
गुह्ये जिह्वावदनरदने घ्राणकर्णस्तनेषु
लिङ्गे चाण्डे युगपरिमिता योजनीयाः कुशाश्च ॥१३६॥
इत्येषः विष्टरः ख्यातः सर्वसिद्धिप्रदायकः ।
कुशैर्वा वन्धनं कार्यं नाड्या वा परमेश्वरि ।१३७।
रक्तमिश्रितसूत्रेण पट्टसूत्रेण वा पुनः ।
विष्टरं परिकल्प्याथ तस्योपरि जपं चरेत् ॥१३८॥
विधिविष्टरपद्मस्य विधिः प्रोक्तो मया तव ।
शवरूपं प्रकल्प्याथ कविर्वाग्मी भवेन्नरः ॥१३९॥
स्वयम्भुवोक्तं सूत्रञ्च कर्तव्यं सर्वसिद्धये ।
शवाभावे विष्टरस्तु शवरूपः प्रकीर्तितः ॥१४०।
साक्षात्तु शिवरूपो हि विष्टरः परिकीर्तितः
विष्टरः शिवरूपः स्यात्स्वस्य शक्तित्वकल्पना ॥ १४१॥
शिवशक्तिसमायोगात्किन्न सिद्ध्यति भूतले ।
शववीरोत्तमं वस्त्रं द्वितीयो विष्टरः स्मृतः ॥१४२॥
तृतीयं शृणु देवेशि सर्वसिद्धिप्रदायकम् ।
विष्टरः शवरूपः स्यात् सशिवाशिवविष्टरः ॥१४३॥
सिंहासनं च पर्यङ्को विष्टरस्तु तृतीयकः ।
चतुष्पादे महादेवि ब्रह्मविष्णुमहेश्वराः ॥१४४॥
ईश्वरस्तु चतुर्थः स्यात्तन्मध्ये तु सदाशिवः ।
मध्ये तु आसनस्थानं महासमरसात्मकम ॥१४५॥
हस्तौ पादौ प्रकल्प्याथ मस्तकं हृदयं तथा ।
साङ्गं सावयवं देवि शवं वा परिकल्प्य च ॥१४६॥

सपादशतपत्रेण भूतपत्रे कुशैः क्रमात्।
अस्थि वा तत्र संस्थाप्य शवांशं वाऽपि सुन्दरि ॥१४७॥
नारीरजोऽन्वितं सूत्रं तेन वा ग्रथनं चरेत्।
पट्टसूत्रेण सूत्रेण यदा योगेन वा पुनः ॥१४८॥
जीवन्यासं तत्र कृत्वा ध्यात्वा तारां जपं चरेत्।
अनेनक्रमयोगेन किन्न सिद्ध्यति भूतले ॥१४९॥
सदाशिवः प्रेतरूपो विष्टरः कथितो मया।

**विष्टरसंस्कारः -**

गायत्र्या त्रोटनं कार्यं मूलेन ग्रथनं चरेत् ॥१५०॥
यत्र नोक्ता तु गायत्री तत्क्रमं शृणु तारिके।
तन्नामपददेव्यन्ता गायत्री शम्भुना मता ॥१५१॥
तन्नामकर्मदेव्यन्ता गायत्री तारिणी मता।
कृतसंकल्पको मन्त्री कोमलं वामपाणिना ॥१५२॥
कूर्चबीजेन संगृह्य अस्त्रमन्त्रेण प्रोक्षणम्।
प्रणवं भुवनेशीं च समुच्चार्य तु तं वदेत् ॥१५३॥
शवरूप महाप्रेत चाष्टसिद्धिं प्रयच्छ मे।
इति स्तुत्वा तु तं सम्यक् कुशमध्ये निधापयेत् ॥१५४॥
तस्य देहे त्रिकोणं तु रक्तचन्दनकेन वै।
मायां तन्मध्यगां लिख्य बहिर्मण्डलकं चरेत् ॥१५५॥
प्रणवम् आः [1] सुरेखे च वज्ररेखे ततः परम्।
कूर्चं चास्त्रं वह्निवधूमयं च मण्डले मनुः ॥१५६॥
ॐ आंकारं ततो मायां क्रौंकारं हंस एव च।
वह्निजायां समुच्चार्य शवप्राणाः परं वदेत् ॥१५७॥
इह प्राणाः पदं चोक्त्वा शवजीव इह स्थितः।
शवस्य सर्वेन्द्रियाणि पुनर्वाङ्मनश्चक्षुश्च ॥१५८॥

---

[1] सुपंवं च वज्रलंखं तत परम् - इति ख मा.पा.।

श्रोत्रघ्राणा इहागत्य सुखं च चिरमेव च ।
तिष्ठन्तु स्वाहया युक्तो प्रणवं स्थापनो मनुः ॥१५९॥
प्रणवं पूर्वमुच्चार्याऽऽधारशक्तिपदन्ततः ।
कोमलासनपदं ङेन्ते नमोऽन्तेन तमर्चयेत् ॥१६०॥
प्रणवं कामपीठाय नमः शव्दान्नमस्क्रिया ।
स्वर्णैर्मापत्रयैः पट्टे कार्या मूर्त्तिः शवस्य च ॥१६१॥
संस्थाप्य विष्टरस्यान्ते सर्वं पूर्ववदाचरेत् ।
समयाशोधनं कृत्वा शक्तिशोधनमाचरेत् ॥१६२॥
शक्तिसंशोधनं कृत्वा सुराशोधनमाचरेत् ।
सुरासंशोधनं कृत्वा शुद्धिशोधनमाचरेत् ॥१६३॥
शुद्धिसंशोधनं कृत्वा मुद्रामैथुनं शोधयेत् ।

**विजयाङ्गीकारः -**

सम्विदासवयोर्मध्ये सम्विद्देवी गरीयसी ॥१६४॥
सम्वित्प्रयोगस्तेनेह पूजादौ साधकोत्तमैः ।
कर्त्तव्या च महापूजा करणीया सुमन्त्रितैः ॥१६५॥
शुक्लपुष्पा भवेद् ब्राह्मी रक्तपुष्पा तु क्षत्रिया ।
पीतपुष्पा भवेद् वैश्या कृष्णपुष्पा तु शूद्रजा ॥१६६॥
ऋषिरस्या महेशानि आनन्दभैरवो मतः ।
सम्राट् छन्दो देवता च समया च वाग्वादिनी ॥१६७॥
वालाबीजत्रयेणैव बीजं शक्तिश्च कीलकम् ।
क्रमात्कार्यो महेशानि विनियोगस्तु शोधने ॥१६८॥
द्विधा त्रिभिस्तु तैर्बीजं षडङ्गानि क्रमाद्विदुः ॥१६९॥

**ध्यानम् -**

सिद्धायां शिवबोधिनीं करलसत्पाशाङ्कुशां भैरवीम्
भक्ताभीष्टवरप्रदानकुशलां संसारबन्धच्छिदाम् ।
पीयूषाम्बुधिमन्थनोद्भवरसां संसारबन्धच्छिदाम्
वीराराधितपादुकां सुविजयां ध्यायेज्जगन्मोहिनीम् ॥१७०॥

सप्ताभिमन्त्रितं कृत्वा पूतं सर्वं भवेद् ध्रुवम् ।
संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदानघे ॥१७१॥
भैरवानन्ददत्ता त्वं पवित्रा भव सर्वदा ।
ॐ ब्राह्म्यै नमः स्वाहा ब्राह्मणीं शोधयेदिति ॥१७२॥
सिद्धिमूलक्रिये देवि हीनबोधप्रबोधिनि ।
राजाप्रजावशकरि शत्रुकण्ठनिषूदिनि ॥१७३॥
ऐँ क्षत्रियायै नमः स्वाहा शोधयेत् क्षत्रियां ततः ।
अज्ञानेन्धनदीप्ताग्ने ज्वालाग्ने ज्ञानरूपिणि ॥१७४॥
आनन्दस्यागमप्रीतिं सम्यग्ज्ञानं प्रयच्छ मे ।
ह्रीं वैश्यायै नमः स्वाहा शूद्रान्च शोधयेत्ततः ॥१७५॥
नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ।
त्रैलोक्यविजये मातः समाधिफलदा भव ॥१७६॥
क्लीं शूद्रायै नमः स्वाहा कथ्यते मन्त्रमुत्तमम् ।
अमृते अमृतोद्भवेऽमृतवर्षिणि पदन्ततः ॥१७७॥
अमृतमाकर्षय द्वन्द्वं सिद्धिन्देहि पदन्ततः ।
सर्वम्मेऽथ ततो ब्रूयाद्वशमानय तत्परम् ॥१७८॥
द्विठान्तोऽयं मनुः प्रोक्तश्चतुर्णामपि शोधने ।
मूलमन्त्रं सप्तवारं तस्योपरि नियोजयेत् ॥१७९॥
आवाहनादिमुद्राश्च धेनुं योनिं ततः परम् ।
दिग्बन्धनं छोटिकाभिस्तारत्रयपुरस्सरम् ॥१८०॥
दिव्यदृष्ट्या तथा पार्ष्णिघातैर्विघ्नान्विघातयेत् ।
सप्तधा तर्पयेद् ब्रह्मरन्ध्रे मूलं समुच्चरेत् ॥१८१॥
गुरुं पद्मे सहस्रारे तथा तत्त्वाख्यमुद्रया ।
त्रिधैव तर्पयेद् भक्त्या साधकः सिद्धमानसः ॥१८२॥
ऐँ वद वद पदं ब्रूयाद्वाग्वादिनि पदन्ततः ।
मम जिह्वाग्रे स्थिरीभव सर्वं पदं ततः ॥१८३॥
सर्वसत्त्ववशङ्करि स्वाहान्ते जुहूयान्मुखे ।
आनन्देन युतो देवि पूजा कार्या यथाविधि ॥ १८४॥

समया भक्षिता येन समया पोषिता तथा ।
स शिवः स च योगी च स तपस्वी सतां वरः ॥१८५॥
स भवेन्मुक्तिमार्गस्थः समया येन भक्षिता ।
भक्षयित्वा च समयां यं यं मन्त्रं जपेन्नरः ॥१८६॥
समस्तफलमाप्नोति सत्यं सत्यं वरानने ।

**शक्तिशोधनम् –**

संशोधनमनाचर्य स्त्रीपुंमध्येषु साधकः ॥१८७॥
कृतेऽपि सिद्धिहानिः स्यात्क्रुद्धा भवति चण्डिका ।
अभिषेकादभवेच्छक्तिर्मन्त्रस्योच्चारणाच्छ्रुतौ ॥१८८॥
रतिकाले महेशानि दीक्षाकाले च कन्यकाः ।
कलाद्वायत्नतोऽप्यर्थादभिशेकं समाचरेत् ॥१८९॥
सुरया रेतसा वाऽपि जलेन मनुना पुरा ।
आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ॥१९०॥
नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ।
पवित्रीकुरु शब्दान्ते मम शक्तिं कुरु प्रिये ॥ १९१॥
वह्निजायां समुच्चार्य शुद्धिमन्त्रः प्रकीर्तितः ।
अनेन विधिना देवि अभिषिक्ताः स्त्रियः सदा ॥१९२॥
रममाणोऽत्र यं नित्यं सर्वसिद्धिमवाप्नुयात् ।
इह लोके सुखं भुक्त्वा परे मुक्तिमवाप्नुयात् ॥१९३॥
अस्याः कर्णे भेदबुद्ध्या मायाबीजं समुच्चरेत् ।
तेन शुद्धा भवेन्नारी पूजायोग्या सदैव हि ॥१९४॥

**वामकौलयोर्विशेषन्यासाः –**

क्षमारभ्य त्वकारान्तो न्यासश्चेत्क्रियते यदि ।
संहारन्यासनामा स्याद्विन्दुन्यास इतीरितः ॥१९५॥
वाममार्गे प्रवृत्तानां शक्तिसेवनकारिणाम् ।
अन्तर्न्यासात्परं विन्दुन्यासे स्याच्छुक्रधारणम् ॥१९६॥
या च क्लिन्ना भवेच्छक्तिस्तावद्भोगो विधीयते ।
वामेऽत्र दक्षिणे मार्गे देवताध्यानमुच्यते ॥१९७ ॥

अक्षस्रजं हरिणपोतमुदग्रटङ्कं
विद्यां करैर्रावरतं दधतीं त्रिनेत्राम् ।
अर्द्धेन्दुमौलिमरुणामरविन्दवासां
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥१९८॥
शक्तेर्मनोरथे पूर्णे विसर्गन्यासमाचरेत् ।
ततो विन्दुः पतेत्तस्मादेतौ विन्दुविसर्गकौ ॥१९९॥
न्यासौ प्रोक्तौ यदा शुक्रं वामिनः कौलिकस्य वा ।
शक्तेस्तृप्तिं विना सर्गन्यासेनापि विनाच्युतम् ॥२००॥
तदासौ निरयं याति यावच्चन्द्रदिवाकरौ ।
इह लोकेऽप्यवंशः स्याद्विहीनो ब्रह्मतेजसा ॥२०१॥
भोगमोक्षधिया वामे पतितुं ये समुद्यताः ।
विना मन्त्रं सर्पमणिं ते गृहीतुं समुद्यताः ॥२०२॥
विसर्गमातृकान्यासो भवेत्केवलमातृवत् ।
विशेषस्तु विसर्गान्तो वर्णोच्चारो भवेदिति ॥२०३॥
विन्दुसर्गयुतान् डादिठान्तान्वर्णान्स्थितौ न्यसेत् ।
पूर्वोक्ता एव मुन्याद्याः षडङ्गध्यानमुच्यते ॥२०४॥
सिन्दूरकान्तिममिताभरणां त्रिनेत्रां
विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाभां
ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥२०५॥
मातृकान्याससंस्थाने वामकौलिकवर्त्मनि ।
प्रपञ्चयोगनामानं न्यासं कुर्यात्तदुच्यते ॥२०६॥
श्रीप्रपञ्चे द्वीपमाले कमलाजलधी तथा ।
गिरिविष्णुवल्लभे च पत्तनपद्मधारिणी ।२०७।
समुद्रतनयापीठे क्षेत्रयुग्लोकमातृका ।
वनकमलवासिन्यौ इन्दिराचाश्रमस्तथा ॥२०८॥
मागुहे तु रमानद्यौ पद्माचत्वरकौ तथा ।
नारायणप्रियोद्भिज्जौ स्वेदजा सिद्धिलक्ष्मिका ॥२०९॥

अण्डजश्च  महालक्ष्मी जरायुराजलक्ष्मिका ।
स्वरस्थाने षोडशैव युग्मानि स्पर्शजान्यथा ॥२१०॥
आर्यालवौ त्रुटिर्मा च चण्डिका च कलान्विता ।
काष्ठादुर्गे निमेषाख्यशिवश्चासौ ह्यपर्णिका ॥२११॥
अम्बिकाघटिके चैव मुहूर्त्तश्च जनीयुतः ।
खेचरी प्रहरश्चैव शाम्भवी दिवसान्विता ॥२१२ ॥
सर्वमङ्गलया युक्ता स्थितिं न्यस्य ततः परम् ।
दाक्षायिण्या तथा वारान् हैमवत्या युतान् न्यसेत् ॥२१३॥
नक्षत्रं च महामायायुक्तं योगं न्यसेत्ततः ।
माहेश्वर्या च करणं मृडान्या पक्ष एव च ॥२१४॥
रुद्राणी माससंयुक्ता शर्वाणी राशिसंयुता ।
अथर्तुपरमेश्वर्यौ काली चायनसंयुता ॥२१५॥
कात्यायनी वत्सरयुग् गौरीयुगसमन्विता ।
भवानीप्रलयौ चाथ यादिस्थानेषु विन्यसेत् ॥२१६॥
पञ्चभूतयुता ब्राह्मी पञ्चतन्मात्रसंयुता ।
वागीश्वरी ततो वाणी पञ्चकर्मेन्द्रियान्विता ॥२१७॥
संज्ञानेन्द्रियसावित्री सानिला च सरस्वती ॥
गायत्री गुणयुक्ता वाक्प्रदान्तःकरणान्विता ॥२१८॥
अवस्थायुक् शारदा च धातुयुक्ता च भारती ।
दोषयुक्ता प्रिया चेति व्यापकं विद्यया न्यसेत् ॥२१९॥
त्रितारमूलविद्यान्ते मातृकाक्षरतः परम् ।
वदेत्प्रपञ्चरूपायै श्रियै नम इति क्रमात् ॥२२०॥
प्रपञ्चादिभिरायोज्य वर्णव्यक्तिं नियोजयेत् ।
मातृकान्याससंप्रोक्तस्थानेषु तदनन्तरम् ॥२२१॥
त्रितारमूलसकलप्रपञ्चस्य स्वरूपतः ।
आर्यापराम्बादेव्यै च नमोक्त्या व्यापकं न्यसेत् ॥२२२॥
प्रपञ्चन्यास एवं स्याद् भुवनन्यास उच्यते ।
विना द्रव्याधिवासेन न स्मरेन्न जपेत्तथा ॥२२३॥

ये स्मरन्ति महामूढास्तेषां दुःखं पदे पदे ।
नासवेन विना मन्त्रो विना मन्त्रेण नासवः ॥२२४॥
परस्परविरोधित्वात्कथं पूजा विधयिते ।
तत्संशयनिवृत्तिञ्च ज्ञात्वा गुरुमुखाद्यजेत् ॥२२५॥
वीक्षणस्पर्शन-ध्यान-मन्त्र-मुद्रा-विशोधनैः ।
द्रव्यं तर्पणयोग्यं स्याद्देवताप्रीतिकारकम् ॥२२६॥

**द्रव्याङ्गीकारेऽधिकारिविवेकः-**

द्रव्येण सात्विकेनैव ब्राह्मणः पूजयेच्छिवाम् ।
ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयते ॥२२७
बाह्मणस्त्वनुकल्पं च कृत्वा चाण्डलतामियात् ।
एवं दद्यात्क्षत्रियोऽपि पैष्टिकीं नो कदाचन ॥२२८॥
नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ।.
राजन्यवैश्ययोर्दानं न द्विजस्य कदाचन ॥२२९॥
एवं प्रदानमात्रेण हीनायुर्ब्राह्मणो भवेत् ।
ताम्रे गव्यं मधुसमं दैवे पैत्रे न दुष्यति ॥२३०॥
अत एव महेशानि होमस्ताम्रे प्रगृह्यते ।
ब्राह्मणेन तथा कार्यं ब्राह्मण्यं न विनश्यति ॥२३१॥
वर्णानुक्रमभेदेन द्रव्यभेदा भवन्ति च ।
क्षीरेण ब्राह्मणैस्तर्प्यं घृतेन नृपवंशजैः ॥२३२॥
माक्षिकैर्वैश्यवर्णैस्तु हयासवैः शूद्रजातिभिः ।
यत्रावश्यं विनिर्दिष्टं मदिरादानमुत्तमम् ॥२३३॥
ब्राह्मणस्ताम्रपात्रे तु गव्यं मद्यं प्रकल्पयेत् ।
सत्ये क्रमाच्चतुर्वर्णाः क्षीराज्यमधुपिष्टजैः ॥२३४॥
त्रेतायां पूजिता देवि घृतेन सर्वजातिभिः ।
मधुभिः सर्ववर्णैश्च पूजिता द्वापरे युगे ॥२३५॥
पूजनीया कलौ देवि केवलैरासवैर्निशि ।
ब्राह्मणैश्च सदा पेया क्षत्रियैश्च रणागमे ॥२३६॥

वैश्यैर्धनप्रयोगे च शूद्रैर्नैव कदाचन।
ब्राह्मणस्य मुखान्मद्यवासना प्रभवेद्यदि ॥२३७॥
चाण्डालवद्बहिः कार्यो नासौ वामी न कौलिकः।
ब्राह्मणो न स्पृशेन्मद्यं वैदिके वर्त्मनि स्थितः ॥२३८॥
पञ्चलक्षणसंयुक्तो ब्राह्मणः काल एव सः।
अहं ब्रह्मा तथा विष्णुस्तदाज्ञावशवर्त्तिनः ॥२३९॥
स चेद् वामपथं प्राप्तः पुनः श्वानोऽभिजायते।
चतुर्लक्षणसंयुक्तो विप्रो ज्ञेयस्तु मध्यमः ॥२४०॥
ताभ्यां दत्तो भाग्यवशात्तान्त्रिकः कोऽपि चेन्मनुः।
सद्यः फलति वा यस्य क्रियया वाऽपि तस्य तु ॥२४१॥
लक्षणत्रययुक्तो यस्तस्य वैदिकतान्त्रिके।
यथोक्ताचरणादेव फलदस्तु न वामकः ॥२४२॥
लक्षणद्वयसंयुक्तस्तस्य वामश्च दक्षिणः।
समतुल्यफलौ स्यातां न कदाचन वैदिकः ॥२४३॥
एकलक्षणसंयुक्तः समस्तस्य फलप्रदः।
सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम् ॥२४४॥
अन्यत्र कामतः पीत्वा प्रायश्चित्ती भवेन्नरः।
ब्राह्मणैः कौलिकैः पेयं देवतातृप्तिहेतवे ॥२४५॥
वामिनां कौलिकानां च मुखे तिष्ठन्ति देवताः।
नयन्ति ते तु तद्गन्धं स तु वन्द्यो हरेरपि ॥२४६॥
देवता यस्य न मुखे साक्षाच्चाण्डाल एव सः।
सेवेत मधुमांसानि तृष्णया चेत् स पातकी ॥२४७॥
मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं प्रिये।
ये पिबन्ति जनास्तेषां स्तनपानं पुनर्न च ॥२४८॥
बहुनोक्तेन किं देवि यथाशक्त्या ददाति यः।
कुलाचार्याय पूजार्थं कुलद्रव्यं स धर्मवित् ॥२४९॥
शैवे तु वैष्णवे शाक्ते सौरे सुगतदर्शने।
बौद्धे पाशुपते सांख्ये मन्त्रे कालामुखे तथा ॥२५०॥

स दक्षवामसिद्धान्ते वैदिकादिषु पार्वति ।
विनालिपिशिताभ्यान्तु पूजनं निष्फलं भवेत् ॥२५१॥
शृणु देवि प्रवक्ष्यामि कौलिकाचरणं यथा ।
पापे भ्रान्तिर्भवेद्यस्य घृणा स्याद्रक्तरेतसोः ॥२५२॥
शुद्धौ चाशुद्धिताबुद्धिः पापशङ्का च मैथुने ।
स भ्रष्टः पूजयेद्देवीं चण्डीमन्त्रं कथं जपेत् ॥२५३॥

**द्रव्याणामावश्यकता -**

विनालिबलिदानाभ्यां न प्रसीदति कालिका ।
मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ॥२५४॥
नैव तुष्टा भवेद्देवी भगलिङ्गाऽमृतं ऋते ।

**मकारफलम् -**

यः करोति सुरापानं जीवन्मुक्तः स जायते ॥२५५॥
मांसं खादति यो मर्त्यस्तस्य मृत्युभयं कुतः ।
यो भक्षयति मत्स्याँश्च स शिवो नाम संशयः ॥२५६॥
मुद्रां भक्षयते यस्तु स सिद्धीनां पतिर्भवेत् ।
सुरतं यः प्रकुरुते त्रैलोक्यकरणक्षमः ॥२५७॥
एतस्य चार्थत्रितयं सात्त्विको राजसस्तथा ।
तामसश्चेति तत्राद्यो रामादिभ्यो निरूपितः ॥२५८॥
तं मार्गं ये विजानन्त्ति ते मुक्ता नात्र संशयः ।

**आसवत्रैविध्यम् -**

मदिरा त्रिविधा प्रोक्ता उत्तमा मध्यमाऽधमा ॥२५९॥
उत्तमा स्वगृहोत्पन्ना मध्यमा चान्यगेहजा ।
अधमा हट्टसंक्रीता एवं सा त्रिविधा मता ॥२६०॥

**शिव उवाच -**

देवासुरैः पुरा कल्पे मथ्यमाने महोदधौ ।
तत्र श्यामा समुत्पन्ना सुराकलशधारिणी ॥२६१॥
गौराङ्ग्यरुणचैला च भास्वद्धरितकञ्चुका ।
श्वेतोत्तरपदा देवी त्रैलोक्यस्यापि मोहिनी ॥२६२॥

दृष्ट्वा तां दानवाः सर्वे शुक्राचार्यबलात्सुरान् ।
जित्वा तां जगृहुस्तस्याः कलशाच्च पपुः सुराम् ॥२६३॥
देवान् पलायितान् दृष्ट्वा शक्तयस्तत्र संस्थिताः ।
पपुस्ता अपि तां पुण्यां सुरां दैवतमातरः ॥२६४॥
वरानपि बहून्दद्युः सुरापाः सुरमातरः ।
अभयास्मान्तर्पयन्ति शेषं गृह्णन्ति ये नराः ॥२६५॥
तेस्मद्रूपा न सन्देहो भुक्तिमुक्त्यैकभाजनम् ।
सुरा गङ्गा सुरा सिन्धुः सुरा देवी सरस्वती ॥२६६॥
सुरा गोदावरी रेवा सुरैव परमं पदम् ।
सुरां निन्दन्ति ये मूढा मूढास्ते जन्मजन्मनि ॥२६७॥
गन्धर्वैस्तूयमानास्ताः शक्तयस्तेऽत्र दानवाः ।
उत्पत्तिः कथिता देवि पानं च कथयाम्यहम् ॥ २६८॥
जिह्वामूलं समारभ्य हृदयं यावत्सुन्दरि ।
षोडशाङ्गुलं विज्ञेयं स्थानं स्वादामृतं पदम् ॥२६९॥
कलाषोडशसंयुक्तं षोडशाङ्गुलमायतम् ।
पीयते दैवतैदेर्वि मद्यममृतरूपि तत् ॥२७०॥
प्रथमन्तु पिबेद् वह्निर्द्वितीयन्तु पिबेद् शशी ।
तृतीयन्तु पिबेद् विष्णुश्चतुर्थं वरुणः पिबेत् ॥२७१॥
कुमारः पञ्चमं देवि षष्ठं तु वसवस्तथा ।
सप्तमं ॠषयः सर्वे गणेश्वरोऽष्टमं पिबेत् ॥२७२॥
नवमं धर्मराजस्तु मरुतो दशमं तथा ।
एकादशमसंस्थाने ब्रह्मपुत्रः पिबेत्प्रिये ॥ २७३॥
कुमारो द्वादशं पाति वैनायक्यस्त्रयोदशम् ।
चतुर्दशं पशुपतिः (पिबेन्मद्यं परोऽव्ययः।) ॥ २७४॥
एतेऽपिबन् पञ्चदशं षोडशं न प्रकाशयेत् ।
न पीतं मानुषैर्भद्रे देवैः पीतं तु शाम्भवैः ॥२७५॥
पानं च कथितं भद्रे अधुना देवताः शृणु ।
यो रसः स उमा देवी यन्मद्यं स महेश्वरः ॥२७६॥

यो वर्ण: स स्वयं ब्रह्मा यो गन्ध: स जनार्दन: ।
य: स्वाद: स तु सोमोऽयं यो वेग: पवन: स्वयम् ॥२७७॥
ज्ञानविज्ञानसम्पन्नं मद्यं विद्यात्सुरेश्वरि ।

**पाकप्रकार:-**

अम्भसां द्वादशप्रस्थं चतु:प्रस्थं च तण्डुला: ॥ २७८॥
प्रस्थार्धं तण्डुलं प्रोक्तं तावन्मात्रांस्तदङ्कुराम् ।
शीतादिरहिते स्थाने दिवसद्वयमास्य तत् ॥२७९॥
पश्चाद्भानौ समारोप्य जंबालसदृशं पचेत् ।
पादप्रस्थं तण्डुलाश्च तन्मात्रानङ्कुरान् क्षिपेत् ॥२८०॥
पुनर्दिनद्वयं स्थाप्य पुनरेनं प्रकल्पयेत् ।
अर्धं तस्य समादाय तण्डुलेषु विनिक्षिपेत् ॥२८१॥
पुनरेवं द्विधा कुर्यात्ताण्डुली सा सुरा स्मृता ।
अयमेव भवेत्सोम: सोमयागफलप्रद: ॥२८२॥
दूतीयागो भवेद्याग: सोमपानन्तु तत्स्मृतम् ।
या गति: सोमयज्ञेन कौलिकानामनेन सा ॥२८३॥
भोग: स्वर्गश्च भवति विना कष्टेन वामिनाम् ।
एवं तु यवपिष्टोत्था देवसोम इति स्मृत: ॥२८४॥
यवतण्डुलयोगेन शक्तिसोमो निगद्यते ।
स्विन्नकुट्टितगोधूमा: समकिण्वेन संयुता: ॥२८५॥
स्थापिता द्वादशाहं च वारुण्यां परिपाचिता: ।
तन्मद्यं सूर्यसंज्ञं स्याद्योगिनीमदवर्धनम् ॥२८६॥
पीतं तच्चक्रपूजान्ते वाजपेयफलं लभेत् ।
इदमेव त्रिधा युक्तं दलं मद्यं च साधितम् ॥२८७॥
अग्निर्भवेत्तस्य पानादग्निहोमफलं लभेत् ।
अग्निर्यदा सप्तवारं वारुणीयन्त्रग: कृत: ॥२८८॥
वडवानलमानोऽसौ महापातकनाशन: ।
दशप्रस्थं गुड: प्रोक्तस्तावद् भुत्थुलजा त्वचा ॥२८९॥

जम्बूत्वग्धातकीपुष्पं तदर्धं नारिकेलजम् ।
कुसुमं च तदर्द्धं स्यात्तदर्द्धं च हरीतकी ॥२९०॥
तावद्विभीतकं प्रोक्तं चतुर्थांशं कटुत्रयम् ।
तावच्च चित्रकं तस्माद् गुडो द्वादशभागकः ॥२९१॥
करेण भ्रामयेत्सम्यगनुलोमविलोमतः ।
अष्टोत्तरशतावृत्त्या त्रिसन्ध्यं प्रतिवासरम् ॥२९२॥
द्वादशाहेन पाकः स्याद्वारुणीयन्त्रगं पचेत् ।
एषा गौडीति विख्याता महामदकरी मता ॥ २९३॥
शिवेन निर्मिता पूर्वं स्वयं पीता च भैरवैः ।
द्विगुणं मकरन्दाख्यं वारि संयोजयेद् गुडे ॥ २९४॥
षोडशाहेन पाकः स्याच्छेषमन्यत् पुरोक्तवत् ।
सर्वदेवप्रिया चेयं वशीकरणमद्भुतम् ॥ २९५॥
देवानां शक्तयो वश्या मानुषीणां तु कथा ।
हरीतकी चित्रकं च मरीचं धातकी तथा ॥ २९६॥
मधूकपुष्पं क्षौद्रं च भागैकेन विवर्धितम् ।
अशीतिगुडसंमिश्रं शेषमन्यत्पुरोक्तवत् ॥२९७॥
इदं मनोहरं द्रव्यं योगिनीपात्रमुत्तमम् ।
मद्याभावे प्रवक्ष्यामि बिन्दुं मद्याधिकं सुराः ॥२९८॥
माहिषं दधि संग्राह्यं चतुर्दशगुणां सुराम् ।
मोचाफलस्य पक्वस्य मर्दितस्य रसस्तथा ॥२९९॥
ग्राह्यं दधि चतुर्थांशं तत्सम्मर्द्य घटे क्षिपेत् ।
चत्वारिंशद्दिनान्यष्टौ पङ्के पङ्कजसङ्कुले ॥३००॥
निधायोद्धृत्य किरणैः सौरैः सम्यग् विशोषयेत् ।
यदा तत्कठिनीभावस्तदा कुर्याद् वटीं शुभाम् ॥३०१॥
गुञ्जाभां जलसंपूर्णे ताम्रपात्रे निधापयेत् ।
इदं सुरातोऽप्यधिकं ब्राह्मणानां प्रशस्यते ॥३०२॥
गौडी माध्वी तथा पैष्टी त्रिविधा तु सुरा स्मृता ।
शूद्राणामुचिता चेयं वर्ज्या क्षत्रियवैश्ययोः ॥३०३॥

ब्रह्मानन्दसुरा यैस्तु पीता विप्रैस्तु कौलिकैः ।
न चोन्मादकरी तेषां सुरेयं बुद्धिवर्धिनी ॥३०४॥
[1] सर्वसिद्धिकरी पैष्टी गौडी भोगप्रदायिनी ।
माध्वी मुक्तिकरी ज्ञेया द्राक्षा राज्यप्रदा मता ॥३०५॥
विद्याप्रदैक्षवी हाला खार्जुरी रिपुनाशिनी ।
तालजा स्तम्भने शस्ता पनसाख्या शुभप्रदा ॥३०६॥
नारिकेलोद्भवा श्रीदा निम्वजा रोगनाशिनी ।
मधूकजा ज्ञानकरी चैलेया पापनाशिनी ॥३०७॥
यत्सानन्दं रुचिकरं समोदं च मनोहरम् ।
मद्यं तदुत्तमं देवा देवताप्रीतिकारकम् ॥३०८॥
व्रह्मा स्यात्ससलिले विष्णुर्गन्धे रुद्रश्च तद्रुचौ ।
परमात्मा तदानन्दे तस्मात्सेव्यमिदं प्रिये ॥३०९॥
दृष्ट्वा प्रणम्य प्रथमं तद्रूपाम्वारुणीं कलाम् ।
वरुणेनार्चिता देवी वारुणीति सुविश्रुता ॥३१०॥
सुरैस्तु पीयते नित्यं सुरा नाम त्विति स्मृता ।
मदनेनार्चिता नित्यं मदिरेयं प्रकीर्तिता ॥३११॥
परमार्थे समुत्पन्ना परा शक्तिः प्रकीर्तिता ।
यथाऽमृतं तथा मद्यं प्रोक्तकाले निषेवितम् ॥ ३१२॥
अमृतेन सहोत्पन्नं स्थाने मद्यं सुधायते ।
विषेणापि सहोत्पन्नं तेन मद्यं विषायते ॥३१३॥

---

[1] व्राह्मणस्य मुखान्मद्यवासना प्रभवेद्यदि ।
चाण्डालवद्वहिष्कार्यो नासौ वामी न कौलिकः ॥
वामिनां कौलिकानां च मुखे तिष्ठन्ति देवताः ।
नयन्ति ते तु तद्गन्धं स तु वन्द्यो हरेरपि ॥
देवता यस्य न मुखे साक्षाच्चाण्डाल एव सः ।
- इति ख.मा. अधिकः पाठः ।

**निषिद्धमद्यनिरूपणम् –**

नष्टैः पर्युषितोच्छिष्टैर्दुगन्धैर्गन्धवर्जितैः ।
हेतुभिः परपात्रस्थैस्तर्पणं निष्फलं भवेत् ॥३१४॥
स्वपात्रस्थं च हेतुञ्च न दद्याद् भैरवाय च ।
दत्ते च सिद्धिहानिःस्यादित्याज्ञा शङ्करैः कृता ॥३१५॥
स्वादिष्टैश्च मदोत्पिक्तैर्द्रव्यैरमृतसन्निभैः ।
मनोहरैश्च देवीनां तर्पणं सफलं भवेत् ॥ ३१६॥
मांसं तु त्रिविधं प्रोक्तं जलखेचरभूचरम् ।
जलेचराः स्युः कूर्माद्याः खेचराः कुकुटादयः ॥३१७॥
भूचरास्तु मृगाद्याः स्युस्तेषां भेदाष्टकं भवेत् ।
गोनरेभाश्वमहिषवराहाजं मृगोद्भवम् ॥३१८॥
महामांसाष्टकं प्रोक्तं देवताप्रीतिकारकम् ।
शाशं शतगुणं प्रोक्तं गोधायास्तच्चतुर्गुणम् ॥ ३१९॥
मयूरपक्षिणां मांसं तेषां वै चाधिकं भवेत् ।
कूर्ममाहिषखड्गानां पुण्यं तच्चाप्यमुत्र च ॥३२०॥
हारिणं तु ततो देवि पुण्यं मैषं ततोऽधिकम् ।
मैषाच्च द्विगुणं छागं छागाद्धरिश्चतुर्गुणः ॥३२१॥
हरेश्चाष्टगुणोऽनड्वान्नडुहो द्विगुणो गजः ।
गजाच्च षड्गुणश्चाश्वो ह्यश्वाच्च लशुनोऽधिकः ॥३२२॥
पलाण्डुना रजस्तुल्यं विशेषो नैव विद्यते ।
मत्स्यञ्च त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ॥३२३॥
उत्तमं त्रिविधं देवि शालपाठीनरोहिताः ।
प्रवीणं कण्टकैर्हीनं तैलाक्तं स्वादसंयुतम् ॥३२४॥
देव्याः प्रीतिकरञ्चैव मध्यमन्तदुदाहृतम् ।
क्षुद्राणि तानि सर्वाणि अधमान्याहुरुत्तमाः ॥३२५॥
व्रैहेयं मण्डलाकारं चन्द्रबिम्बनिभं शुभम् ।
चारुपक्वमनोहारि शर्कराद्यैः प्रपूरितम् ॥३२६॥

पूजाकाले च देवीनां मुद्रैषा परिकीर्त्तिता ।
भागद्वयं तण्डुलानां मैथिकं हिङ्गुजीरकम् ॥३२७॥
लवणं च यथायोग्यं सुरया मर्दितं दृढम् ।
चक्रीकृतं नागवल्लीदलैश्च परिवेष्टितम् ॥३२८॥
जलयन्त्रे विपक्वं तत् शक्तिमुद्रेयमुच्यते ।
कालखण्डं वर्करस्य वाद्ययन्त्रविपाचितम् ॥३२९॥
माषाढकीमसूराणां वटकैश्च समन्वितम् ॥
समभागेन चूर्णेन तच्च हिङ्ग्वादिभिर्युतम् ॥३३०॥
वटकाः कटुतैलेन पक्वाः स्यान्मुद्रिका परा ।
सर्वासामेव मुद्राणां करणे तु जलस्थले ॥३३१॥
सुरा देयाऽथवा मद्यं मांसं वा न तु चेतरत् ।
गोधूमचूर्णं मांसं च पक्वं संमेलयेद् दृढम् ॥३३२॥
दिनत्रयं जले स्थाप्यं यावदम्लं प्रजायते ।
सूक्ष्माणि मत्स्यखण्डानि पक्वान्यत्र तु मेलयेत् ॥३३३॥
मध्ये तद्रोटिकायाश्च दत्त्वा पक्त्वा च रोटिकाम् ।
इयं मुद्रा समुद्दिष्टा देवीतृप्तिकरा परा ॥३३४॥
मांसं मत्स्यं माषपिष्टं मसुराणां च चूर्णकम् ॥
गोधूमं शष्कुलीमध्ये दत्त्वाऽऽज्ये परिपाचयेत् ॥३३५॥
इयं तु परमा मुद्रा शक्तीनामतितृप्तिदा ।
रतिमात्रे वामिनाऽत्र कर्तव्या बुद्धिरीदृशी ॥३३६॥
लिङ्गं शिवो भगः शक्तिर्गाङ्गं वारि जलं मतम् ।
इति भावनया वामी रतं कुर्वन्विमुच्यते ॥३३७॥
अन्यथा स्त्रीगमं कुर्वन् निरये परिपच्यते ।
सधवारतिसंभूतं कुण्डमुत्तमभूतिदम् ॥३३८॥
विधवारतिसंभूतं गोलं सिद्धिप्रदं शुचि ।
कुलद्रव्यैर्विना कुर्याज्जपपूजां तथा व्रतम् ॥३३९॥

निष्फलं तद् भवेद्देवि भस्मना च हुतं यथा ।

**मुख्याभावे तेषामनुकल्पः –**

नारिकेलोदकं कांस्ये ताम्रे वा विसृजेन्मधु ॥३४०॥
गव्यं च ताम्रपात्रस्थं सुरातुल्यं घृतं विना ।
तक्रं क्षीरं गुडं क्षौद्रं दध्याज्यतिलशर्करा: ॥३४१॥
तैलं मार्जारबालं च द्रव्यं दशविधं स्मृतम् ।
द्रव्याभावे तु वटकं जले संलोड्य तर्पयेत् ॥३४२॥
(गुडमिश्रेण तक्रेण तच्च वा मधुभाजनम् ।
सौवीरेणाथवा कुर्यादेतत्कर्म न लोपयेत् ॥)

**वटकनिर्माणप्रकारः –**

मद्यं मांसं च विजयामष्टगन्धैः सुमिश्रिताम् ।
सम्मर्द्य वटुकं कुर्यात्तर्पणार्थं च संचयेत् ॥३४३॥
लवणार्द्रकपिण्याकपलाण्डुं माषपञ्चकम् ।
लशुनं च महादेवि मांसप्रतिनिधिः स्मृतः ॥३४४॥
मत्स्याभावे तु क्रमुकं ताम्बुलं यद्यदामिषम् ।
मुद्राभावे तण्डुलं वा भर्जितं चणकादिकम् ॥३४५॥
भृष्टधान्यादिकं यद्यच्चर्वणीयं प्रचर्वयेत् ।
तस्य संज्ञा कृता मुद्रा महामोदप्रवर्द्धिनी ॥३४६॥

**पञ्चमस्यानुकल्पः –**

पञ्चमस्याप्यभावे तु प्रकारान् शृणु पार्वति ।
वामोरौ संलिखेद्रक्तचन्दनेन त्रिकोणकम् ॥ ३४७॥
तन्मध्ये शक्तिबीजं हि विलिखेत्साधकोत्तमः ।
तत्र संपूजयेत्कान्तां मन्त्रेणानेन पार्वति ॥३४८॥
अष्टोत्तरशतं वाऽपि तदर्धं वा तदर्धकम् ।
त्रिकोणे संजपेन्मन्त्री गायत्र्या शक्तिसंज्ञया ॥३४९॥
शक्तौ शक्त्या प्रकुर्वीत कर्मलोपं न कारयेत् ।
यदि विप्रो भवेत्तत्र कुलपूजापरायणः ॥३५०॥

तदाऽनेन विधानेन कुर्यात्कुलरसोद्भवम् ।
अपरापुष्पगर्भे तु कुलस्थानं मनोहरम् ॥३५१॥
हयारिकुसुमे देवि स्वयमस्ति सदाशिवः ।
तन्मध्यै तौ तु ध्यात्वैव पुष्पमध्ये तु चन्दनम् ॥३५२॥
रक्तं वा कुसुमं दत्त्वा ध्यात्वाऽऽत्मानं कुलात्मकम् ।
योजयेत्तं शिवं शक्त्यामैक्यं संभावयन्धिया ॥३५३॥
क्षणं विचिन्त्य तत्रैव सम्पूज्य परमेश्वरीम् ।
जप्त्वा तदेव कुण्डाख्यं द्रव्यं परमदुर्लभम् ॥३५४॥
कुण्डगोलोद्भवद्रव्यास्याभावे शृणु सुन्दरि ॥
कथं स्नानं प्रकुर्याच्च देवतातोषहेतवे ॥३५५॥
यस्य कस्य तरोः पुष्पं गृहीत्वाऽऽशु प्रयत्नतः ।
तेषां मध्ये द्वयं ग्राह्यं हस्ताभ्यां मनसा तदा ॥३५६॥
उभयोः पञ्चमं तत्र कुर्वीत विधिवन्नरः ।
रक्तचन्दनघृष्टेन जले चैव क्षिपेत्तदा ॥३५७॥
तज्जलेन प्रकुर्वीत देवतास्नानमुत्तमम् ।
वाञ्छितं फलमाप्नोति सत्यं सत्यं वरानने ॥३५८॥
स्वयम्भूकुसुमाभावे रक्तचन्दनकं क्षिपेत् ।
मकारपञ्चाभावे तु पञ्चमं कारयेत्प्रिये ॥३५९॥
अभावे पञ्चमे देवि मनसा पञ्चमं चरेत् ।

**आन्तरीयमकारनिरूपणम् -**

आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः ॥३६०॥
चिच्चण्डकुण्डलीशक्तिमुद्रया स्यात्सुखोदयः ।
व्योमपङ्कजनिष्यन्दसुधापानरतो भवेत् ॥३६१॥
मधुपानमिदं प्रोक्तमितरे मद्यपायिनः ।
पुण्यापुण्यपशून्हत्वा ज्ञानखड्गेन योगवित् ॥३६२॥
परे लयं नयेच्चित्तं पलाशी स निगद्यते ।
मनसा स्वेन्द्रियगणं नियम्यात्मनि योजयेत् ॥३६३॥

मत्स्याशी स जनः प्रोक्त शेषा धीवरवृत्तयः ।
१. अप्रबुद्धा कौलिकस्य च ................ ॥३६४॥
शक्तिं तां सेवयेद्यस्तु स भवेच्छक्तिसेवकः ।
इत्येवं पञ्चमुद्राणां गुप्तं तत्त्वं मयोदितम् ॥३६५॥
ज्ञात्वा गुरुमुखात्सम्यग्यः सेवेत स मुच्यते ।

**संस्कारस्यावश्यकतानिरूपणम् -**

असंस्कृता सुरा पापा कलहव्याधिदुःखदा ॥३६६॥
आयुःश्रीकीर्त्तिसौभाग्यधर्मविद्याविनाशिनी ।
तस्मात्संस्कृत्य विधिवत्कुलद्रव्यैस्ततोऽर्चयेत् ॥३६७॥
सुसंस्कृता सुरा रोगदुःखापत्त्यघहारिणी ।
आयुःश्रीकीर्त्तिसौभाग्यधर्मविद्याविवर्धिनी ॥३६८॥
अन्यथा नरकं याति दाता भोक्ता न संशयः ।
यथा सुरा वह्निवर्णा महापातकनाशिनी ॥३६९॥
तथा मन्त्रविशुद्धा सा दिव्याग्निः स्वर्गमोक्षदा ।
दत्तात्रयेण मुनिना शुक्रेण च महात्मना ॥३७०॥
धीमता बलभद्रेण सुराः पीतास्तु मन्त्रिताः ।
संस्कारसंयुते हेतौ दत्ते तुष्यन्ति देवताः ॥३७१॥
मन्त्राणां स्मरणादेव महापातकनाशनम् ।
आयुःश्रीकान्तिसौभाग्यं ज्ञानं संस्कृतपानतः ॥३७२॥
अष्टैश्वर्यं खेचरत्वं पतनं विधिवर्जनात् ।
मन्त्रैर्युतं कुलद्रव्यं गुरुदेवार्पितं प्रिये ॥३७३॥
ये पिबन्ति जनास्तेषां पापलेशो न विद्यते ।

**क्रमेण संस्कारः**

**कलशस्थापनम् -**

वामभागे महेशानि मण्डले चतुरस्रके ॥३७४॥

---

१. अप्रबुद्धा पशोः शक्तिः प्रबुद्धा कौलिकस्य च - इति ख.मा पा. ।
क.मा पाठः त्रुटितः ।

योनिद्वयं समालिख्य तदन्तर्ब्रह्मरन्ध्रकम् ।
वृत्तेन वेष्ठयित्वा तु चतुरस्रेण वेष्टयेत् ॥३७५॥
अर्घ्योदकेन संप्रोक्ष्य तत्र संस्थाप्य यन्त्रिकाम् ।
कलाभिर्दशभिर्व्याप्तं यजेत्तन्त्राग्निमण्डलम् ॥३७६॥

**कलशस्य व्युत्पत्तिर्लक्षणञ्च -**

कलां कलां गृहीत्वा च देवानां विश्वकर्मणा ।
निर्मितोऽयं सुरैर्यस्मात्कलशस्तेन चोच्यते ॥३७७॥
पञ्चाशदङ्गुलव्यास उच्छ्रायो द्वादशाङ्गुलः ।
कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं तथा ॥३७८॥
आधारे स्थापयेन्मन्त्री सौवर्णं वाऽथ राजतम् ।
कांस्यजं मृण्मयं वाऽपि घटं निर्व्रणशालिनम् ॥३७९॥
सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदं स्मृतम् ।
कांस्यं शान्तिकरं चैव मृण्मयं पुष्टिदं भवेत् ॥३८०॥
घटमूले स्थितो ब्रह्मा घटमध्ये च केशवः ।
घटकण्ठे नीलकण्ठो घटाग्रे शक्तिदेवताः ॥३८१॥
घटस्य स्थापनेनैव देवता करगा भवेत् ।
सर्वोक्तं सर्वरूपं च सर्वदेवमयं शिवम् ॥३८२॥
आनन्दभैरवं पश्येत् घटमध्ये निरन्तरम् ।
तेजः स्वरूपी चाख्यातो माणिकल्पलतामयः ॥३८३॥
सुधारसमयी वाणी अमृतस्यन्दनिर्झरी ।
१ ........ देवतानां निवेदनम् ॥३८४॥
स्वयं करोति देवेशि स्वयं नीत्वा समो घटः ।
तद्गेहगमनादेव मूको वाक्यविशारदः ॥३८५॥
सहस्रशतधारी च महाश्रुतिधरोद्धतः ।
घटासिद्धिरियं प्रोक्ता सर्वशास्त्रमयी भवेत् ॥३८६॥

---

१ वाणी वदति देवेशं देवतानां निवेदनम् - इति ख. मा. पा. ।
देवतानां पदात्पूर्वो भागः क.मा. पा. त्रुटितः ।

१ सामान्यार्घ्यविशेषार्घ्यौ द्वौ प्रोक्तौ यत्र पार्वति ।
चक्षुःप्राणादिरूपत्वाद् घटस्त्वावश्यको मतः ॥३८७॥
यथा त्रिकोणं देवेशि विन्दुना वर्जितं भवेत् ।
तथा घटं विना देवि पूजा सर्वत्र वर्जिता ॥३८८॥
क्षालयेदस्त्रमन्त्रेण कुम्भं सम्यक्सुरेश्वरि ।
स्थापयेत्कलशाधारं कुम्भं गन्धादिवासितम् ॥३८९॥
वेष्टितं रक्तवस्त्रेण रक्तमाल्येन भूषितम् ।
स्थापयेत्कलशं तत्र सौवर्णादिविभूषितम् ॥३९०॥
कलाद्वादशसंयुक्तं भानुबिम्बं यजेदिह ।
शुद्धेन हेतुना मन्त्री मूलमन्त्रेण पूरयेत् ॥३९१॥
कलाषोडशसंख्याकमिन्दुविम्बं यजेदिह

**अन्यत्र कलाबीजनिरूपणम् –**

मण्डले कलशे देव्या वह्न्यर्कशशिमण्डलम् ॥३९२॥
तारभागैस्त्रिभिर्मन्त्री बिम्बत्रितयमर्चयेत् ।
रक्षयेदस्त्रमन्त्रेण तनुत्रेणावगुण्ठयेत् ॥३९३॥
वीक्षयेन्मूलमन्त्रेण तेनैवाभ्युक्ष्य साधकः ।
गन्धादिना समभ्यर्च्य भावयेद्देवतात्मकम् ॥३९४॥
अन्यच्च शृणु देवेशि यथा कुलादिकर्मणि ।
हानिर्न जायते देवि तान् वै मन्त्रान् शृणु प्रिये ॥३९५॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥३९६॥
सूर्यमण्डलसम्भूते वरुणालयसम्भवे ।
अमाबीजमये देवि शुक्रशापाद् विमुच्यताम् ॥३९७॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन ते देवि ब्रह्महत्यां व्यपोहतु ॥३९८॥

---

१ सामान्यार्घ्यविशेषार्घ्ये द्वे प्रोक्ते - इति पा उचितः ।

एवं मन्त्रत्रयेणैव चाभिमन्त्र्य कुलं शुभम् ।
प्रदद्यात्कालिकायै च नैवेद्यमुदरे हरेत् ॥३९९॥
वेदादिवरुणान्तञ्च षड्दीर्घस्वरभेदितम् ।
ब्रह्मशापविमोचितायै सुधादेव्यै नमोऽस्तु ते ॥४००॥
द्वादशधा जपेन्मत्रं शुक्रशापविमुक्तये ।
मायया रमया वाण्या संबुध्यन्ता त्रिवर्णका ॥४०१॥
शुक्रशापं विमोचयेत्पुनस्तद्वर्णकान्तिका
यस्या उपासना तस्या बीजेन पुटितो मनुः ॥४०२॥
षोडशार्णस्तथा ख्यातो मन्त्रिताष्टोत्तरं शतम् ।
निःशापं कुरुते साध्यं भुक्तिमुक्त्येकभाजनम् ॥४०३॥
वेदादिवारुणं वीजं षड्दीर्घस्वरभेदितम् ।
ब्रह्मशापविमोचितायै सुधादेव्यै नमोऽस्तु च ॥४०४॥
दशकृत्वा जपेन्मन्त्रं ब्रह्मशापविमुक्तये ।
मायाश्रीरङ्कुशञ्चैव षड्दीर्घस्वरभेदितम् ॥४०५॥
सुरा कृष्णस्वरूपान्ते पापं मोचय तत्परम् ।
अमृतं श्रावयद्वन्द्वं वह्निजाया ततः परम् ॥४०६॥
अनेन मनुना मन्त्री कृष्णशापं विमोचयेत् ।
पवमानः परानन्दः पवमानः परो रसः ॥४०७॥
पवमानं परं ज्ञानं तेन ते प्लावयाम्यहम् ।
श्लोकानेतान्पठेत्पश्चाद्दीपिन्यमृतेशीमनुम् ॥४०८॥
अखण्डैकरसानन्दकलेवरसुधात्मनि ।
स्वच्छन्दस्फुरणाकारनिधे ह्यमृतरूपिणि ॥४०९॥
अकुलस्यामृताकारे शुद्धिज्ञानकरे परे ।
अमृतत्वं विधेह्यस्मिन्वस्तुनि क्लिन्नरूपिणि ॥४१०॥
तद्रूपिणि करस्पर्शं कृत्वाऽज्ये तत्स्वरूपिणि ।
भूत्वा मृतापराकारे मयि विस्फुरणं कुरु ॥४११॥
अथवा मूलमुच्चार्य सुषुम्णामूलवर्त्मना ।
पाययित्वा कुण्डलिनीं द्रव्यशुद्धिरियं पुनः ॥४१२॥

अनेनैव विधानेन वीरशुद्धिं समाचरेत् ।

**द्रव्यमध्ये भैरवभैरवीध्यानम -**

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥४१३॥
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ।
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् ॥४१४॥
वृषारूढं नीलकण्ठं सर्वाभरणभूषितम् ।
कपालखट्वाङ्गधरं घण्टाडमरुवादिनम् ॥४१५॥
पाशाङ्कुशधरं देवं गदामुशलधारिणम् ।
खड्गखेटकपट्टीशमुद्गरं शूलकुन्तकम् ॥४१६॥
विचित्रखेटकमुण्डवरदाभयपाणिनम् ।
लोहितं देवदेवेशं भावयेत्साधकोत्तमम् ॥४१७॥
एवं ध्यात्वा स्वमन्त्रेण पुष्पाञ्जलित्रयं क्षिपेत् ।

**आनन्दभैरवीध्यानम् -**

तस्योत्सङ्गे सुरां देवीं चन्द्रकोटियुतप्रभाम् ॥४१८॥
हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम् ।
अष्टादशभुजैर्युक्तां सर्वानन्दवरोद्यताम् ॥४१९॥
प्रहसन्तीं विशालाक्षीं देवदेवस्य संमुखीम् ।
अथवा देवदेवेशमर्धनारीश्वरं स्मरेत् ॥४२०॥
एवं ध्यात्वा स्वमन्त्रेण पूजयेत्साधकोत्तमः ।
शिवचन्द्रौ मातृकान्तं तथा क्षमलवह्नयः ॥४२१॥
वायुश्च वामकर्णेन भूषितो विन्दुना ततः ।
बीजमेतत्समुच्चार्य तथा चानन्दभैरवम् ॥४२२॥
ङेऽन्तं शिखामन्त्रयुतं पूर्वबीजं तु संलिखेत् ।
चन्द्रं हित्वादिमं कुर्यात्कर्णे वामाक्षि योजयेत् ॥४२३॥
सुरादेव्यै ततो वौषडियमानन्दभैरवी ।
अनेन मनुयुग्मेन ध्यानपूर्वं यजेच्च तौ ॥४२४॥
मायया चादिसंयुक्तं वह्निमायेन्दुसंयुतम् ।
परमस्वामिनि प्रान्ते परमाकाशशून्य (च) ॥४२५॥

वाहिनि चन्द्रपदान्ते सूर्याग्निभक्षिणीति च ।
पात्रं विश विश स्वाहा दशधा प्रजपेन्मनुम् ॥४२६॥
वाङ्मायाकमलाप्रान्ते आनन्देश्वरि विद्महे ।
सुरादेव्यै धीमहीति तन्नोऽर्धनारीश्वरीति ॥४२७॥
प्रचोदयादिति जपेद् गायत्रीं दशधा सुधीः ।
ततश्च भावयेद्द्रव्यममृतं रक्तभं प्रिये ॥४२८॥
अकथादित्रिपङ्क्त्या तु हलक्षत्रयमण्डितम् ।
पूर्वोक्तयोनिमुद्रायां शिवशक्त्योस्तु संगमम् ॥४२९॥
अमृतं चिन्तयेद् द्रव्यमष्टधा त्वमृतां जपेत् ।

**अमृतामन्त्रः -**

ऐं क्लीं ह्रौं जूं सः इत्युक्त्वा अमृते ह्यमृतोद्भवे ॥४३०॥
अमृतेश्वरि अमृतवर्षिणीति पदं वदेत् ।
अमृतं स्रावययुगं स्वाहान्तो द्रव्यशुद्धये ॥४३१॥
अमृतेशीमनुः प्रोक्तः पञ्चत्रिंशद्भिरक्षरैः ।

**दीपिनीमन्त्रः -**

वाग्भवबीजयुग्मं च वाग्वादिनी च वाग्भवम् ॥४३२॥
क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभय इत्यपि ।
कुरु युग्मं कामवीजं सौः मोक्षं कुरु युग्मकम् ॥४३३॥
प्रासादः पराप्रासादः सप्तत्रिंशद्दशाक्षरः ।
दीपिनीमनुराख्यातः द्रव्यशुद्धिविधायकः ॥४३४॥

**प्रकारान्तरशोधनम् -**

घटं हेतुद्रव्येण पूरयेदित्यनु वृत्तौ ..........।
ततो यन्त्रं विलिख्यादौ यद्यत्कुलसमुद्भवम् ॥४३५ ॥
ध्यात्वेष्टदेवतान्तत्र जपेदष्टोत्तरं शतम् ।
धेनुयोनी विचिन्त्याथ प्रसृतन्तद्विचिन्तयेत् ॥४३६॥
दृष्ट्वाऽमृतमुपात्तं वै नृत्यन्ति योगिनीगणाः ।
नृत्यन्ति भैरवाः सर्वे नृत्यन्ति भैरवीगणाः ॥४३७॥

यद्यत्कुलं समुद्भूतं तत्तद्यन्त्रेषु पूजयेत् ।
एवं ध्यात्वा जपेद् विद्याद्वयं च साधकोत्तमः ॥४३८॥
मायालक्ष्मीद्वयस्यान्ते नमो भगवतीति च ।
महेश्वरीस्वरूपान्ते सर्वपशुजनेति च ॥४३९॥
मनश्चक्षुस्तिरस्करणं कुरुद्वन्द्वं च ठद्वयम् ।
तथान्यतिरस्करिणीं लज्जां कामेश्वरीं ततः ॥४४०॥
वाणीं ग्लौं तिरस्करणं सकलजनेति वै ततः ।
वाग्वादिनीति सकलपशुव्रतजनेति च ॥४४१॥
मनश्चक्षुःश्रोत्रजिह्वाघ्राणाक्षितिरस्करणम् ।
कुरुद्वयं ठद्वयं च सविसर्गं शिरो मनुः ॥४४२॥
तस्योपरि स्वमूलञ्च वरुणं सप्तधा जपेत् ।
इत्यनेन विधानेन द्रव्यशुद्धिं समाचरेत् ॥४४३॥

**मांसशुद्धिः -**

प्रतद्विष्णुरितिमन्त्रं मांसशुद्धौ नियोजयेत् ।
त्र्यम्बकस्य तु मन्त्रेण मत्स्यशुद्धिं समाचरेत् ॥४४४॥
तद्विष्णोरितिमन्त्रेण तद्विप्रासोऽमुना तथा ।
मुद्रां तु शोधयेन्मन्त्री देवताप्रीतिकारकम् ॥४४५॥
विष्णुयोनिमनुमस्त्रं गर्भं धेहीति वै तथा ।
कुण्डगोलोत्थयोः शुद्धौ साधको विनियोजयेत् ॥४४६॥
मांसशुद्धिं ततः कुर्याद्येन सिद्धिमुपालभेत् ।
ॐ प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरोगविष्ठाः ॥४४७॥
यस्योरुषु त्रिषु विक्रमणे शुद्धीभवन्ति भुवनानि विश्वा
अनेन मनुना मन्त्री त्रिधा मांसं विशोधयेत् ॥४४८॥

**मत्स्यशुद्धिः -**

ॐ ज्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥४४९॥
मत्स्यशुद्धिमनेनैव त्रिवारं साधकश्चरेत् ॥४५०॥

**मुद्राशुद्धिः -**

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततं तद्विप्रासो विपन्नवो जागृवांसः
समिन्धते विष्णोर्यत् परमं पदम् ॥४५१॥
मुद्राणां शोधनं कार्यं त्रिवारं मनुनाऽमुना ।

**कुलद्रव्यशोधनम् -**

स्वयम्भूकुसुमादीनां शोधने मनुरुच्यते ॥४५२॥
ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥४५३॥
गर्भन्धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं धेह्यश्विनौ देवावाधत्तां पुस्करस्रजौ ॥४५४॥
तारं कूर्चास्त्रमुद्धृत्य शिवादित्रयबिन्दुयुक् ।
बह्निजायारमामायाश्रीबीजं सुरतप्रिये ॥४५५॥
तारमायारमास्जञ्च बह्निजायां च तुन्दिलम् ।
ततोऽमृतोद्भवायेति ह्यमृतवर्षिणि तत्परम् ॥४५६॥
प्रिये देविपदं युक्तं शापं मोचय युग्मकम् ।
अमृतं च श्रावयद्वन्द्वममृतं कुरुयुग्मकम् ॥४५७
वह्निजायान्तमन्त्रेण शुक्रशुद्धिं समाचरेत् ।
ग्लूँ, म्लूँ प्लूँ न्लूँ क्लूँ स्वाहा अमृतोद्भवे ॥४५८॥
अमृतवर्षिणि अमृतं श्रावय श्रावय स्वाहा ।
त्रिवृत्त्या पुष्पशुद्धिं च कारयेत्साधकोऽथवा ॥४५९॥

इति वज्रपुष्पशोधनम्

सर्वेषां शोधनं मूलं सप्तवारं जपेन्मनुम् ।
अनेनैव विधानेन कुर्यात्पञ्चमशोधनम् ॥४६०॥
असाध्यं साधयेत्सर्वं सम्पूज्य परदेवताम् ।

**पात्रासादनम् -**

श्रीपात्रघटयोर्मध्ये सर्वपात्राणि स्थापयेत् ।४६१॥

घटान्ते श्रीगुरोः पात्रं भोगपात्रं तदन्तिके ।
तदन्ते शक्तिपात्रं च योगिनीनां तदन्तिके ॥४६२॥
तदन्ते वीरपात्रं च बलेः पात्रं तदन्तिके ।
पाद्यमाचमनीयञ्च अर्घ्येण नवमं विदुः ॥४६३॥
उत्तमं नवपात्राणि सप्तपात्राणि मध्यमम् ।
केचिद्वदन्ति मन्त्रज्ञा पञ्चपात्राणि मध्यमम् ॥४६४॥
अधमं त्रीणि पात्राणि पात्रयुग्मं तथैव च ।
एकपात्रं न कुर्वीत यदि साक्षात्कुलेश्वरः ॥४६५॥
मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी ।
इह लोके च दारिद्र्यं मृते च नरकं व्रजेत् ॥४६६॥
श्रीगुरुभोगपात्राणि त्रिषु पात्रेष्वयं विधिः ।
पूजापात्रं बलेः पात्रं पञ्चपात्रेष्वयं विधिः ॥४६७॥
शक्तिपात्रं वीरपात्रं सप्तपात्रेष्वयं विधिः ।
पाद्यमाचमनीयं च नवपात्रेष्वयं विधिः ॥४६८॥
पूजापात्रं च विज्ञेयं योगिनीनां च पूजयेत् ।
पाद्यमाचमनीयं च बलिपात्रात्प्रदापयेत् ॥४६९॥
पाद्यादीनि च सर्वाणि भोगपात्रात्प्रदापयेत् ।
पात्रद्वये महेशानि निर्णयं यत्नतः शृणु ॥४७०॥
भोगपात्रं शक्तिपात्रं वीरपात्रं च योगिनीम् ।
बलिपात्रं गुरोः पात्रं श्रीपात्रेण प्रकल्पयेत् ॥४७१॥
सामान्यार्घ्यञ्च श्रीपात्रमेकमन्यन्महेश्वरि ।
सामान्यार्घ्येण देवेशि द्रव्याणां प्रोक्षणं भवेत् ॥४७२॥
श्रीपात्रेण च पूजा स्यात् सर्वं विज्ञापितं शिवे ।
सामान्यार्घ्ये च द्वारार्घ्ये विशेषे तु विशेषता ॥४७३॥
सामान्यार्घ्यं तु सामान्यं श्रीपात्रमेकमेव वा ।
तथापि देवदेवेशि घटपात्रेऽप्यवेश्यके ॥४७४॥
कपालं यदि देवेशि तदैकपात्रमाचरेत् ।
अन्यत्रैकैकपात्रत्वं कपाले सर्वपात्रता ॥४७५॥

कपालपात्राद्देवेशि कापाली सिद्धिरस्ति च ।
यद्यद्वाञ्छति कामानि गुटिकाञ्जनसिद्धयः ॥४७६॥
सिद्धद्रव्यं कामगतिं मनोरथमयीं कलाम् ।
वाञ्छाभोगान्नव्यसृष्टिकरणं चैव दृश्यता ॥४७७॥
चिन्तामणिं कामलतां यत्पात्रे सर्वमेव च ।
कापालिनी तूर्यसिद्धिः कपालसिद्धिगोचरा ।४७८॥
एकं पात्रं समानीय खण्डत्रितयभेदतः ।

**पात्रप्रमाणम् -**

चतुरङ्गुलमुच्छ्रायमाया मे द्वादशाङ्गुलम् ॥४७९॥
अष्टाङ्गुलं सविस्तारि द्रोणग्राहि जलं यथा ।
तथा पात्रं पूर्णदीक्षा सूर्याघ्र्यादौ प्रकीर्तितम् ॥४८०॥
विशेषार्घ्यं महेशानि मानमस्य प्रकीर्तितम् ।
षडङ्गुलं च विस्तीर्णमुत्तानेन समाकृति ॥४८१॥
अथवा देवदेवेशि पात्रं च वर्त्तुलीकृतम् ।
अश्वत्थपत्राकारं वा कुतपाकारमेव वा ॥४८२॥
त्रिकोणाकारपात्रं च त्रित्रियोनिसमन्वितम् ।
मध्ये बिन्दुयुतं पात्रं ध्वजचिह्नसमन्वितम् ॥४८३॥
अथवा सुभगाकारं सध्वजबिन्दुकेशरम् ।
एवं पात्रं समानीय महाचीनेश्वरीं यजेत् ॥४८४॥

**पात्रनिरूपणम् -**

नारिकेलस्वर्णताम्रकाचशुक्तिशिलोद्भवम् ।
शङ्खसद्दारुकूर्मोत्थं कपालालाबुमृण्मयम् ॥४८५॥
उत्तमं मध्यमं हीनं विप्रादीनां प्रकीर्तितम् ।
नातिस्थूलं नातिसूक्ष्मं छिन्नं भिन्नं विवर्जयेत् ॥४८६॥
ताम्रकांस्यादिभिर्लौहैः पात्रं नैव तु कारयेत् ।
सर्वसिद्धिः सुवर्णे स्यादुद्यमस्तालपात्रतः ॥४८७॥
शान्तिः शिलायां स्तम्भस्तु मृण्मये नारिकेलजे ।
वश्याद्यं कूर्मजे ज्ञानं मुक्तिर्भुक्तिप्रदायिनी ॥४८८॥

पुण्यवृक्षजपात्रं तु पापघ्नं मृत्युनाशकृत् ।
कपाले वीरसंसिद्धिरलाबौ योगसिद्धयः ॥४८९॥
कांस्यस्याप्यथ रूप्यस्य शैवे शङ्खवरो हरौ ।
महाशङ्खो वाममार्गे स्फाटिकं ग्रहनायके ॥४९०॥
विश्वामित्रकपालन्तु सर्वपात्रोत्तमोत्तमम् ।
ब्रह्महत्यादिपापानि तथा [1] हेमशतानि च ॥४९१॥
यो ददाति महेशानि राहुग्रस्ते दिवाकरे ।
तत्फलं कोटिगुणितं नारिकेलार्घ्यपात्रतः ॥४९२॥
अलाभे तस्य पात्रस्य ह्यन्यपात्रेण पूजयेत् ।

इदमपि महाशङ्खेतरपलम्

महाशङ्खमयं पात्रं ज्ञेयं सर्वोत्तमोत्तमम् ॥ ४९३॥
नारिकेलभिधं देवि ज्ञेयं चोत्तममध्यमम् ।
रत्नपात्रं तु सुश्रोणि ज्ञेयं चोत्तमकल्पकम् । ।४९४ ॥

**महापात्रादानम् -**

आदौ मुण्डविधानं च प्रोक्तं तत्कथ्यते शृणु ।
सर्वमुण्डविधिरयं शूलप्रोतादिके शृणु । ४९५॥
[2] तरुणं सुन्दरं शूरं संमुखे रणवर्तिनम् ।
पलायनविशून्यं च ककाराष्टकवर्जितम् ॥४९६॥
यष्टिप्रभृत्यस्त्रविद्धं यदा शूलेन पातितम् ।
चाण्डालाद्यभिभूतं च शीघ्रं सिद्धिप्रदायकम् ॥४९७॥
शनिभौमदिने वाऽपि शरीरे मृतसम्भवे ।
कालारात्र्यां वीररात्र्यां मोहरात्र्यामथाम्बिके ॥४९८॥
महारात्र्यां चतुर्दश्यामष्टम्यां पक्षयुग्मके ।
दीपोत्सवचतुर्दश्यां ग्रहणे संक्रमेऽपि वा ॥४९९॥

---

[1] (ब्रह्महत्यादिपापानि तथा) विश्वासघातकम् ।
दृष्ट्वा पात्रं नारिकेलं सर्वमेव प्रणश्यति ॥
कन्याकोटिप्रदानानि तथाः ... इत्यधिकः ख.मा.पाठः । क.मा. एतावान् पाठस्त्रुटितः प्रतिभाति ।

[2] ४९६, ४९७, ४९८, ४९९, ५००, ५०१, ५०२, ५०३ श्लोकाः ख मा न प्राप्यन्ते ।

वीरवेषं समासाद्य मुक्तकेशो दिगम्बरः ।
सिन्दूरकूर्चतिलको सुरासंवित्प्रदायकः ॥५००॥
गत्वा शूलस्थले देवि सर्वद्रव्यसमन्वितः ।
ताम्वूलं विजयां खड्गं सिन्दूरं विजयां तथा ॥५०१॥
माषान्नमांसमद्यादिकारणादीनि पार्वति ।
सामग्रीं सकलां कृत्वा स्थले गेहे विशोध्य च ॥५०२॥
कृत्वा यत्नेन देवेशि शिवापूजापुरस्सरम् ।
शिवामभ्यर्च्य यत्नेन ततो शूलं प्रपूजयेत् ॥५०३॥
शूलं संपूजयेद्देवि समादानं ततश्चरेत् ॥
शूलराज महाक्रूर सर्वभूतप्रियङ्कर ॥५०४॥
सिद्धिं संकल्पितां देहि वज्रशूल नमोऽस्तुते ।
१ कृत्वा वै जागृयाद्वीरं तदन्ते खड्गपूजनम् ॥५०५॥
तच्छूलस्थं शवं पूज्य धूपदीपोपचारकैः ।
ताम्वूलैलालवङ्गादिकर्पूरागुरुसंयुतैः ॥५०६॥
द्रव्यैः संपूज्य देवेशि खड्गं संपूज्य यत्नतः ।
२ कालीखड्गसमुद्भूतसर्वसिद्धिप्रदायकः ॥५०७॥
कविचिन्तामणिस्त्वं च खड्गमुण्ड नमोऽस्तु ते ॥
३ वीर वीर महावीर षष्टिसिद्धिप्रदायक ॥५०८॥
कविकल्पलता त्वं च प्रसन्नो भव सत्त्वरम् ।
अनेन मूलमन्त्रेण प्राथ्य्र्य कर्त्तनमाचरेत् ॥५०९॥
स्वयं च कर्त्तयेद् वीरो ब्रह्माण्डवलिमर्पयेत् ।
पञ्चगव्येन मिलितं मुण्डमाच्छाद्य चाहरेत् ॥५१०॥
गृहे चानीय देवेशि हस्तार्धमानतः स्थले ।
सर्वां सामग्रीं कृत्वाऽऽदौ मुण्डप्राणान् प्रतिष्ठयेत् ॥५११॥

---

१. ५०५ (ख), ५०६, (क), (ख), ५०७ (क) श्लोकाः ख. मा. न प्राप्यन्ते ।

२. दीपं प्रज्वाल्य तत्रैव खड्गेन कर्त्तयेत्स्वयम् ।
वीरं संपूज्य यत्नेन तत्कालं मुण्डमाहरेत् । ख. मा. इत्यधिकः पाठ. ।

३. ५०८ (ख) ५०९, ५१०, ५११, ५१२, ५१३, ५१४, ५१५ श्लोकाः ख. मा न प्राप्यन्ते ।

खादिरादीन् कीलकांस्तत्र दश दिक्षु निखानयेत्
तत्र स्थित्वा वलिं दत्त्वा जपपूजापरायणः ॥५१२॥
स्वदर्शनाघोरमन्त्रौ यथा पाशुपतापि च ।
जय दुर्गा महेशानि वीरार्दनमनन्तरम् ॥५१३॥
एतैरन्यैस्त्रयोदशभिः स्थानशोधनपूर्वकम् ।
भूमौ संस्थाप्य देवेशि तत्रान्यानि समानि च ॥५१४॥
स्थाप्य स्थित्वा जपं कृत्वा तत्र पूज्य महेश्वरि ।
दिवारात्रिक्रमेणैव जपेल्लक्षद्वयं शिवे ॥५१५॥
होमतर्पणकं देवि मार्जनं द्विजभोजनम् ।
कृत्वा संसाधितं मुण्डं सिद्धमुण्डं भवेच्छिवे ॥५१६॥
एवं साधितमुण्डस्य फलं सिद्ध्यष्टकं करे ।
संसाधितेन मुण्डेन मालापात्रादिकं चरेत् ॥५१७॥
अन्यथा कुरुते यस्तु तस्य सिद्धिर्न जायते ।
मालायन्त्रं तथा पात्रं तदन्ते सिद्धिमुण्डतः ॥ ५१८ ॥
कारयेद्यत्ततो देवि समयाचारतत्परः ।
स सिद्धः सिद्धिदो लोके कलिकल्पद्रुमो भवेत् ॥५१९॥
सर्वशास्त्रार्थवेत्ता स्यान्नात्र कार्या विचारणा ।
सद्यः कृत्तं त्रिरात्रस्थं सर्वरात्रस्थगं तथा ॥५२०॥
त्रिसप्तरात्रमध्यस्य तत्र चादिक्रमाच्छृणु ।
उत्तमं मध्यमं चैव ह्यधमं त्वधमाधमम् ॥५२१॥
सद्यः कृत्तं तु यन्मुण्डमुत्तमं परिकीर्तितम् ।
त्रिरात्रमध्यगं मुण्डं मध्यमं परिकीर्तितम् ॥५२२॥
षड्रात्रोत्तरंगं मुण्डमधमं परिकीर्तितम् ।
त्रिसप्तरात्रमध्यस्थं कीर्त्तितं त्वधमाधमम् ॥५२३॥

१ सद्यः कृत्तं तु यन्मुण्डं सर्वकार्ये प्रकीर्तितम् ।
त्रिरात्रमध्यगं मुण्डं मालायन्त्रे प्रकीर्त्तितम् ॥५२४॥
षड्रात्रोत्तरगं मुण्डं पात्रकार्ये विनिर्दिशेत् ।

**महापात्रलक्षणम् -**

महापात्रस्य देवेशि लक्षणं शृणु साम्प्रतम् ॥५२५॥
गोमुखं गजपृष्ठं च गजकुम्भं तथैव च ।
कूर्मपृष्ठं कटिं चैव शक्तिपात्रं तथैव च ॥५२६॥
खण्डपद्मसमाख्यातं लक्षणानि ह्यतः शृणु ।
दीर्घाकारं तथा पृष्ठमग्रतीक्ष्णं प्रजायते ॥५२७॥
गोमुखं कथितं देवि कपालन्नात्र संशयः ।
दीर्घं समुन्नतं मध्ये पार्श्वैर्नैव सुसंस्थितम् ॥५२८॥
विस्तीर्णं च तथा पृष्ठे गजपृष्ठाकृति तव ।
मध्ये समुन्नतं यस्तु कपालपरिमण्डलम् ॥५२९॥
कूर्मपृष्ठसमाकारं कूर्मपृष्ठन्तदुच्यते ।
ललाटाच्चौलकं यावद्रेखासन्ध्युपजायते ॥५३०॥
षट्खण्डस्तु भवेद्यस्तु शक्तिपात्रं तु तद्विदुः ।
समपृष्ठेषु यच्छृङ्गं निम्नं वाऽपि तथोच्छ्रितम् ॥५३१॥
मध्ये चैव समाख्यातं पद्मपात्रं न संशयः ।
सुषिरं नगरे यस्तु शिखायां वरवर्णिनि ॥५३२॥
एकद्वित्रीणि चत्वारि जातयः स्युर्द्विजादितः ।
एकच्छिद्रं भवेद्विप्रो द्विच्छिद्रं क्षत्रियः स्मृतः ॥५३३॥

---

१ पाशयुक्तं महेशानि प्रणवं पूर्वमुद्धरेत् ।
नागपाशमहासिद्धिवेतालखेचरेश्वरः ॥
ऊर्ध्ववक्त्र महाकायपाशवीर नमोऽस्तु ते ।
एवं संप्राप्य संग्राह्यं भ्रान्तिं तत्र न कारयेत् ॥
लक्षद्वयं तत्र जपेद्वीरमार्गक्रमेण च ।
इत्यधिकः पाठः श्लोकः ५१६, ५१७, ५१८, ५१९, ५२०, ५२१, ५२२, ५२३ ख.मा. न प्राप्यन्ते ।

त्रिच्छिद्रं वैश्यमित्युक्तं चतुश्छिद्रं तु शूद्रकम् ।
छिद्रास्तु वान्यजातिश्च कपालानि भवन्ति हि ॥५३४॥
अच्छिद्रं तु त्यजेच्चैव कपालं परिकीर्त्तितम् ।
चर्तुवर्णन्तु यत्पात्रं तद्ग्राह्यं लक्षणान्वितम् ॥ ५३५॥
अन्यजातीनि पात्राणि साधकः परिवर्जयेत् ।
श्यामवर्णे महाव्याधिः कृष्णे च मरणं भवेत् ॥५३६॥
संतापं रक्तवर्णेन मिश्रवर्णे न किञ्चन ।
रक्तवर्णन्तु चाग्नेयं स्फटिकं सर्वतो भवेद् ॥५३७॥
तद्ग्राह्यं साधकेन्द्रेण भुक्तिमुक्तिफलप्रदम् ।
मधुवर्णन्तु यत्पात्रं मुक्तिदं तु प्रसिद्धिदम् ॥५३८॥
गोनवनीतसङ्काशं स्निग्धच्छायं तु मुक्तिदम् ।
शुक्रवर्णञ्च यद्रुक्षं मुमुक्षूणां प्रकीर्त्तितम् ॥ ५३९॥
वर्त्तुलं स्त्रीकपालं स्याद्द्विपुटं मोक्षदायकम् ।
एकपुटानि शस्तानि दुर्लभानि भवन्त्यपि ॥५४०॥
द्विपुटानि तु ग्राह्याणि लक्षणैस्तु युतानि वै ।
एकखण्डं कपालेन्द्रं दुर्लभं त्रिदशैरपि ॥५४१॥
तेन हस्तस्थितेनैव विद्याधरपदं लभेत् ।
द्विखण्डञ्च त्रिखण्डञ्च भुक्तिमुक्तिप्रकीर्त्तिदम् ॥५४२॥
चतुःखण्डञ्च यत्पात्रं चतुर्वर्गप्रदं तु तत् ।
पञ्चखण्डं च षट्खण्डं सप्तखण्डमनुक्रमात् ॥५४३॥
शतखण्डान्तकं देवि भाग्येनैव तु लभ्यते ।

**श्रीपात्रस्य स्थापनम् –**

साध्यसाधकयोर्मध्ये षट्त्रिंशद्ङ्गुलं भवेत् ॥५४४॥
द्वादशाङ्गुलमूर्ध्वं च ह्यधोभागे तथाङ्गुलम् ।
द्वादशाङ्गुलमध्यस्थं तत्र संस्थापयेद् बुधः ॥५४५॥
स्वार्थञ्च द्वादशं त्यक्त्वा देवार्थं द्वादशं त्यजेत् ।
द्वादशाङ्गुलमध्यस्थं तत्र चार्घ्यं निधापयेत् ॥५४६॥

**मण्डलानामावश्यकत्वं लक्षणं च -**

मण्डलेन विना पूजा विफला परिकीर्त्तिता ॥

तस्मान्मण्डलमालिख्य विधिवत्तत्र पूजयेत् ॥५४७॥

अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ।

त्रैलोक्यं मण्डितं येन मण्डलं तत् सदा शिवम् ॥५४८॥

उड्याणं चतुरस्रं स्यात्कामरूपं तु वर्त्तुलम् ।

जालन्धरं चार्धचन्द्रं पूर्णं पूर्णगिरिर्मतः ॥५४९॥

अभ्यर्च्य मण्डलं पश्चादाधारं स्थापयेत् क्रमात् ।

**अर्घ्यम् -**

सुरयार्घ्यप्रदानेन योगिनीनां भवेत्प्रियः ॥५५०॥

महायोगी भवेद्देवि पीठं प्रक्षाल्य तैर्जलैः ।

**महापात्रशोधनम् -**

पात्राणां शोधनं देवि शृणु यत्नेन साम्प्रतम् ॥५५१॥

इन्द्रो तदादितः सेन्दुर्मन्त्रेणानेन मार्जयेत् ।

ध्रुवं मण्डलमन्त्रेण भूगृहवृत्तवह्निनयुक् ॥५५२॥

कुर्यात्तत्राधारशक्तिकूर्मान्तं तान्प्रपूजयेत् ।

व्योमाग्निशक्तिसहितो यस्तु चैतद्ध्रुवादिकम् ॥५५३॥

अनेन मनुनाधारं स्थापयेत्तत्र मन्त्रवित् ।

वह्निनमण्डलमेतस्मिन्पूजयेत्तदनन्तरम् ॥५५४॥

क्रोधवीजास्त्रबीजाभ्यामाधारे क्षालितं शुभम् ।

महाशङ्खं महामन्त्री स्थापयेत्स्त्रीं पठंस्ततः ॥५५५॥

शिखां दीर्घत्रयोपेतां कालीब्रह्मारमायुताम् ।

दीर्घः शचीपतिर्वायुर्हृदयं मन्मथान्तिमम् ॥५५६॥

दीर्घत्रयसमोपेतं तारिणी पूर्वबत्पुनः ।

शिवं दीर्घत्रयोपेतं नीलाशव्दात्तु पूर्ववत् ॥५५७॥

मायां शरान्तिमं शम्भुं वामकर्णेन्दुसंयुतम् ।

सर्वकामः कालरात्रिदीर्घकायपदात्ततः ॥५५८॥

सर्वाधाराय सर्वाय सर्वोद्भवायशव्दतः ।
सर्वशुद्धिमयायाथ सर्वासुरपदात् ततः ॥५५९॥
रुधिरारुणायपदात् शुभ्राय सुरभाजनम् ।
आयदेवीकपालाय हृदयान्तो मनुर्मतः ॥५६०॥
एभिश्चतुर्भिर्मनुभिर्महाशङ्खं प्रपूजयेत् ।
तत्रासारलयं मन्त्री मण्डलं तिग्मरोचिषः ॥५६१॥
मूलेन पूरयेत्तोयं सुधाबुद्ध्या विधानवित् ।
गन्धपुष्पाक्षतान् क्षिप्त्वा त्रिखण्डान् दर्शयेत्ततः॥५६२॥
पीयूषरोचितो देवि मण्डलं तत्र पूजयेत् ।
वाचःशक्ति रमाशक्तिमनुस्वारसमन्वितम् ॥५६३॥
मूलतनीये भैरव्यां क्रोधवीजं समुज्ज्वलम् ।
अनेन मनुना मन्त्री भावयेदष्टशोऽन्वितः ॥५६४॥
शक्त्या सुधां विनिःक्षिप्य शङ्खं योनिं प्रदर्शयेत् ।
विशेषार्घ्योक्तविधिना सर्वमेव पुरोक्तवत् ॥५६५॥
एवं यथोक्तदिधिना कपालं पात्रमुत्तमम् ।
अनेन पात्रवर्येण साधयेदिष्टसाधनम् ॥५६६॥
वाञ्छासिद्धिं खेचरीं च परकायप्रवेशनम् ।
मनोरथो दिव्यदृष्टिर्वेतालगुटिके तथा ॥५६७॥
रसं रसायनं चैव साधयेदिष्टसाधनम् ।
वापनं चाञ्जनं दिव्यं पादुकायक्षिणीगणम् ॥५६८॥
खड्गसिद्धिं कुन्तसिद्धिं पाशं चाञ्जनमेव च ।
सृष्टिसिद्धिर्भैरवाष्टमहाकपालिनि शिवे ॥५६९॥
कपालार्घ्येण देवेशि सर्वं सिद्ध्यति निश्चितम् ।

**अर्घ्यस्थापनम् -**

ततोऽर्घ्यं स्थापयेन्मन्त्री स्ववामे सुरसुन्दरि ॥५७०॥
कलशाद्दक्षिणे भागे त्रिकोणं वृत्तसंयुतम् ।
षट्कोणं चतुरस्रञ्च कृत्वा तन्मध्यभागतः॥५७१॥

विलसच्चन्द्रसकलं गन्धर्वञ्च समालिखेत् ।
ओजापूकादिकं पीठं तच्चतुर्दिक्षु पूजयेत् ॥५७२॥
अङ्गमन्त्रैश्च षट्कोणे शक्तौ मूलत्रिभेदतः ।
आधारशक्तिं सम्पूज्य पूर्ववद्यन्त्रिकामपि ॥५७३॥
महाशङ्खं नारिकेलं सौवर्णं राजतं तथा ।
ताम्रं शुक्त्युद्भवं वाऽपि पात्रं तत्र निधापयेत् ॥५७४॥
समर्च्य पूर्ववन्मन्त्री कुम्भद्रव्येण पूरयेत् ।
आधारं त्रिविधं प्राहु षट्पदं वा चतुष्पदम् ॥५७५॥
अथवा वर्त्तुलाकारं कुर्याद्देवि मनोहरम् ।
पद्माभं वा त्रिकोणं वा योन्याभं धातुजं तु तम् ॥५७६॥
आधारेण विना भ्रंशो न हि तुष्यन्ति देवताः ।
तस्माद्विधिवदाधारं कल्पयेत्कुलनायिके ॥५७७॥
दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत् ।
मूलेन क्षालितं शङ्खाधारं संस्थापयामि च ॥५७८॥
कालं सविन्दुकन्तद्वद्भुजङ्गेशं समुद्धरेत् ।
वह्न्यन्ते मण्डलायेति तथा धर्मप्रदेति च ॥५७९॥
दशकलात्मने चोक्त्वा नमो गन्धादिभिर्यजेत् ।
अस्त्रेण क्षालितं शङ्खं तत्र संस्थाप्य पूजयेत् ॥५८०॥
अर्घ्यमानं तु प्रादेशं चतुरङ्गुलमुच्छ्रितम् ।
अर्घ्यपात्रमिति प्रोक्तं स्थापयामीति मन्त्रतः ॥५८१॥
अमर्कमण्डलायेति वदेद्द्वादश इत्यथ ।
कलात्मने पदं चोक्त्वा अर्घ्यपात्राय हृन्मनुः ॥५८२॥
अनेन शङ्खमभ्यर्च्य कलाः सूर्यस्य पूजयेत् ।
समर्च्य पूर्ववन्मन्त्री शङ्खद्रव्येण पूरयेत् ॥५८३॥
संस्पृश्यार्चनपात्रं तु पूजयेद् धेनुमुद्रया ।
ब्रह्माण्डखण्डसम्भूतमशेषरससम्मितम् ॥ ५८४॥
आपूरितं महापात्रं पीयूषरसमावहेत् ।
जपन् विलोमतो वर्णान् मूलमन्त्रसमुज्ज्वलान् ॥५८५॥

संपूज्य पूर्ववत्तत्र वृत्तं षट्कोणमालिखेत् ।
अकथादित्रिरेखान्तं त्रिकोणं वृत्तमध्यत: ॥५८६॥
मूलखण्डत्रयेणाथ त्रिकोणं परिपूजयेत् ।
षट्कोणे च षडङ्गानि ततस्तीर्थमयं स्मरेत् ॥५८७॥
आनन्दभैरवं ध्यात्वा समभ्यर्च्य विधानत: ।
पूजयेत्पंञ्चरत्नानि कुलद्रव्याणि नि:क्षिपेत् ॥५८८॥
तत्र माषप्रमाणं तु मांसमत्स्यादि नि:क्षिपेत् ।
कुलामृतं समादाय तत्रार्थे नि:क्षिपेद्बुध: ॥५८९॥
तत: सोमकला: पूज्या: साधकैर्निर्मलाशयै: ।
रेचयेत्पूर्ववच्छेषमयमर्घ्यविधि: स्मृत: ॥५९०॥
[1] कुलामृतादानन्तु [2] दूतं यजने वक्ष्याम: ।
भौवनेशी रमा रामा कामो योगिन्यनन्तरम् ॥५९१॥
शाकिनी च क्रमात्सप्तबीजानि [3] स्थैर्यभाञ्जि हि ।
अष्टमं तु परिज्ञेयं बीजं त्रिभुवनेश्वरि ॥५९२॥
तत्र लोकादिमो वर्णो ह्यवत्युपरि वेष्टित: ।
गमनं स्वर्गमर्त्यौ च पातालं नाग एवं च ॥५९३॥
विगृह्य रत्नशब्देन ङेन्तेन किल हृक्षुषा ।
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी ॥५९४॥
सुश्री: सुरूपा कपिला हव्यकव्यवहेत्यपि ।
आग्नेयाद्यादिवर्णाद्या दशधर्मप्रदा: कला ॥५९५॥
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचि: ।
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥५९६॥
कभाद्या वसुदा: सौरा: फडन्ता द्वादशेरिता: ।
अमृता मानदा पूषा तृष्टि: पुष्टी रतिधृर्ति: ॥५९७॥

---

[1] अत्राक्षरमेकं त्रुटितं भाति, कुलामृतस्यादानं तु पा. उचित: ॥
[2] द्वितीयजने वक्षाम: - इति ख.मा.पा. ।
[3] स्थैर्यं मां निहि - इति ख.मा.पा. ।
क.मा. कव्यपदं त्रुटितम् ।

शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता चेति कथिताः कुलनायिके ॥५९८॥
सौम्याः कामप्रदायिन्यः षोडश स्वरजाः कलाः ।
प्राग्वत्तीर्थं समावाह्य तीर्थमन्त्रेण तत्र च ॥५९९॥
संयोज्य नेत्रमन्त्रेण पुष्पं न्यस्य शिखाणुना ।
प्रदर्श्य गालिनीमुद्रां मुद्रया धेनुसंज्ञया ॥६००॥
अमृतीकृत्य विधिवत्सुधावीजेन साधकः ।
ध्यात्वेष्टदेवतान्तत्र सकलीकृत्य साधकः ॥६०१॥
अङ्गन्यासस्य चास्त्रेण कलयेच्च दिशो दश ।
नेत्रमन्त्रेण संवीक्ष्य मुद्रया शंखसंज्ञया ॥६०२॥
गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम् ।
षडङ्गानि च संपूज्य मन्त्रयेन्मूलमन्त्रतः ॥६०३॥
अभिचारेषु कार्येषु विलोमेन जपेदिति ।
अष्टकृत्वस्ततश्चार्घ्यं छादयेन्मत्स्यमुद्रया ॥६०४॥
कनिष्ठाङ्गुष्ठकैर्युक्तं करयोरितरेतरम् ।
तर्जनीमध्यमाभ्यां च संहता भुग्नवर्जिताः ॥६०५॥
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥
कलशोक्तविधानेन स्थापयेत्पात्रसन्ततिम् ॥६०६॥
पुष्पादिना समुद्धृत्य विन्दुशङ्खामृतस्य च ।
निःक्षिपेत्सर्वपात्रेषु सर्वं दिव्यं विचिन्तयेत् ॥६०७॥
एवं पात्राणि संस्थाप्य तेनैव तर्पणं चरेत् ।

## शरीरस्थदेवतर्पणम्-

[1] शुद्धद्रव्यशतेनापि गन्धपुष्पाक्षतैरपि ॥६०८॥
न्यासोक्तसर्वमन्त्रैश्च स्वात्मानं प्लावयेत्तथा ॥
मूर्ध्नि श्रीगुरुपङ्क्तिञ्च मूलाधारे तु पादुकाम् ॥६०९॥

---

1 . शुद्धद्रव्येण तेनापि- इति ख. मा. पा ।

दिव्यौघं तर्पयेदादौ आदिनाथः सदाशिवः ।
ईश्वरो रुद्रविष्णुश्च ब्रह्मा पत्नीयुताऽस्ति मे ॥६१०॥
भवन्ति द्वादश च ते सिद्धौघस्तान् प्रतर्पयेत् ।
सनकाद्याश्च चत्वारः सुजातश्चारुभूषितः ॥६११॥
सनत्कुमारो व्यासश्च वामदेवः शुकस्तथा ।
दत्तात्रेयो रैवतको द्वादशैतेऽथ मानवान् ॥६१२॥
तर्पयेत् षट् नृसिंहं च महेशं भास्करं तथा ।
महेन्द्रं माधवं विष्णुं नामान्ते तु प्रयोजयेत् ॥६१३॥
महाशिवं च सिद्धौघे मानवौघे सदाशिवम् ।
शिवं तु परमं दिव्यं पीठपूजां ततश्चरेत् ॥ ६१४॥

(एते कौलवामयोः सामान्यगुरवः)

ब्रह्मरन्ध्रे स्वके मन्त्री मुद्रया तत्त्वसंज्ञया ।
तर्पयेद् गुरुपात्रीयद्रव्येणौघत्रयं सुधीः ॥६१५॥
स्वगुरूनपि सन्तर्प्य त्रिः सकृद् वा विशेषतः ।
आत्मनो हृदयाम्भोजे परिवारगणावृताम् ॥६१६॥
देवीं पात्रामृतेनापि तर्पयेत्कुलनायिकाम् ।
शुद्धिद्रव्यं समादाय तर्पणन्तत्त्वमुद्रया ॥६१७॥
अङ्गुष्ठतर्जनीमध्ये शुद्धिं सङ्गृह्य वामतः ।
वामेन दक्षिणेनापि देवीं सन्तर्पयेत्सुधीः ॥६१८॥

**तत्त्वशुद्धिः –**

ॐ प्राणापानव्यानोदानसमानाः मे शुद्ध्यन्ताम् ।
ज्योतिरहं विरजामि विपाप्मा भूयासं स्वाहा ॥ ६१९॥
ॐ पृथिव्यप्तेजोवाय्वाकाशानि मे शुद्ध्यन्तां ज्योतिः ।
ॐ प्रकृत्यहङ्कारबुद्धिमनःश्रोत्राणि मे शुद्ध्यन्ताम् ॥६२०॥
ॐ त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवचांसि मे शुद्ध्यन्ताम् ।
ॐ पाणिपादपायूपस्थशब्दाः मे शुद्ध्यन्ताम् ॥६२१॥

[1] ॐ स्पर्शरूपरसगन्धाकाशानि मे शुद्ध्यन्ताम् ।
ॐ वायुः तेजः सलिलभूम्यात्मानो मे शुद्ध्यन्ताम् ॥६२२॥
सप्तमन्त्रान् परामृश्य हस्ताभ्यां सप्तधा पुनः ।
सर्वाङ्गं संस्पृशेन्मन्त्री तत्त्वशुद्धिरियं मता ॥६२३॥

**बटुकादिबलिदानम्-**

अवश्यमादौ वामादौ कुर्याद्बटुकपूजनम् ।
मार्गेऽस्मिन्वटुको मुख्यः सुराद्यन्तेन निर्मितम् ॥६२४॥
विना तं तु न गृह्णन्ति देवास्तस्मात्तदर्चनम् ।
अपूज्य वटुकं यस्तु मोहाद्देवं प्रपूजयेत् ॥६२५॥
तस्य पूजाफलं नास्ति बटुकश्च प्रकुप्यति ।
सगणं पूजयेत्तस्माद्गन्धपुष्पासवामिषैः ॥ ६२६॥
तत्तन्मन्त्रैर्विधानेन देवता प्रीतिमाप्नुयात् ।
ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् ॥६२७॥
मण्डलानि विधायाथ पूर्ववत् पूजयेत् प्रिये ।
पूर्ववद्बलिदानञ्च दद्यात्सर्वसमृद्धये ॥६२८॥
वटुकाय महेशानि योगिनीभ्यश्च वल्लभे ।
गणेश-क्षेत्रपालाभ्यां पूर्ववद् बलिमुत्सृजेत् ॥६२९॥
दक्षिणे वटुके दद्यादुत्तरे [2] योगिनीबलिम् ।
[3] अङ्गुष्ठतर्जनीभ्याञ्च क्षेत्रपालबलिं हरेत् ॥६३०॥
तारत्रयं ततो देवीपुत्रोक्त्वा बटुकेति च ।
नाथेति कपिलजटाभारभास्वर पिङ्गल ॥६३१॥

---

[1] ॐ स्पर्शरूपरसगन्धाकाशा मे शुद्ध्यन्ताम्- इति पाठः साधुः ।

[2] योगिनीर्बलिम्- इति ख. मा. पा. ।

[3] पूर्वं भूतबलिं दद्यात् क्षेत्रपालाय पश्चिमं ।
अङ्गुष्ठानामिकाभ्यां तु बटुकाय बलिर्मतः ॥
कनिष्ठाङ्गुष्ठयोगेन योगिनीबलिमाहरेत्- इति ख.मा. अधिकः पाठः ।

त्रिनेत्राग्निज्वालामुख इमां पूजां बलिं वदेत् ।
गृह्ण गृह्ण हूँ फट् स्वाहा षट्चत्वादिंशदर्णकः ॥६३२॥
मन्त्रमेवं समुच्चार्य ततः श्लोकं पठेदिमम् ।
बलिदानेन सन्तुष्टो वटुकः सर्वसिद्धिदः ॥६३३॥
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ।
[1] तारत्रयं सर्वपूर्वेभ्यसन्तानि वदेत्क्रमात् ॥६३४॥
योगिनी भूतभूताधिपति च डाकिनी ।
शाकिनी त्रैलोक्यवासिनी इमां पूजां बलिं गृह्ण ॥ ६३५॥
गृह्ण हूँ फट् तथा स्वाहा एकपञ्चाशदक्षरः ।
या काचिद्योगिनी रौद्रा सौम्या घोरतरा परा ॥ ६३६॥
खेचरी भूचरी व्योमचारी प्रीतिस्तु मे सदा ॥ ६३७॥
ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिनपवनयोर्यत्र तत्र स्थितो वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदाः पुष्पधूपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु देवेन्द्रतुल्याः ॥ ६३८॥
एतदन्ते महेशानि यं बीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ ६३९॥
कवचञ्चास्त्रमालिख्य बह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीबलिमाहरेत् ॥ ६४०॥
तारत्रयं तथैह्येहि[2] देवीपुत्र वटुकना- ।
थोच्छिष्टहारिणे [3] हँ हूँ हँ हूँ वारद्वयं वदेत् ॥ ६४१॥
क्षत्रपालेति सर्वेति विघ्नान्नाशय युग्मकम् ।
सर्वोपचारसहितामिमां पूजां बलिं वदेत् । ६४२॥

---

[1] तालत्रयम्- इति ख. मा. पा. ।
[2] तथैह्येति- इति ख. मा. पा. ।
[3] हूँ हूँ हूँ हूँ- इति ख. मा. पा. ।

गृह्ण गृह्ण हूँ फट् स्वाहा चतुःषष्ट्यक्षरो मनुः ।
क्षत्रपालस्य संप्रोक्तः सर्वसिद्धिप्रदायकः ॥६४३॥
योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ॥६४४॥
अनेन मनुना देवि क्षत्रपालवलिं हरेत् ।
गाँ गीं गूँ त्रयमालिख्य ङेऽन्तं गणपतिं वदेत् ॥६४५॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चारयेत्युक्त्वा बलिं गृह्ण द्विधा पदम् ॥६४६॥
वह्निजायान्वितो मन्त्रो गणपस्य बलिं हरेत् ।
वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ॥६४७॥
आधारं पूजयेत्तत्र पात्रं चान्नोदकान्वितम् ।
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ॥४४८॥
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ।
तारं च भुवनेशानीं सर्वविघ्नपदं ततः ॥६४९॥
कृद्भ्यश्च सर्वभूतेम्यो हूँकारं वह्निवल्लभाम् ।
समुच्चरन् बलिं दद्यान्मुद्रया तत्त्वसंज्ञया ॥६५०॥
तारत्रयं वदेत्सर्वभूतेभ्यः सर्व एव च ।
पश्चाद् भूतपतिभ्यो हृदुक्तः सप्तदशाक्षरः ॥६५१॥
भूता ये विविधाकारा दिव्यभौमान्तरिक्षगाः ।
पातालतलसंस्थाश्च शिवयोगेन भाविताः ॥६५२॥
ध्रुवाद्याः सत्यसंधाश्च इन्द्राद्याश्च व्यवस्थिताः ।
तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं वलिम् ॥६५३॥

**इति तन्त्रचिन्तामणौ कौलवामयोः सामान्यनित्त्यार्चनाय तन्मार्गोत्पत्तिपूर्वकश्रीपात्रादिस्थापनान्तनिर्णयनामा अष्टादशः प्रकाशः ।**

*****

# ऊनविंशः प्रकाशः

**पूजानिरूपणम्-**

पशुवीरदिव्यभेदात् पूजास्थानं त्रिधा मतम् ।
गौणं मुख्यं चोत्तमं च तदिदानीं निगद्यते ॥१॥
पशूनां कल्पिते यन्त्रे पूजा गौणी प्रकीर्तिता ।
वीराणां लिखिते यन्त्रे बिन्दौ शक्तेश्च स्थापनम् ॥२॥
स्वेष्टरूपां च तां ध्यात्वा पूजनान्मुख्यतां गता ।
दिव्यानां दिव्यचक्रे तु पूजनं चोत्तमं मतम् ॥३॥
जीवचक्रे महेशानि प्रसन्नास्ति निरन्तरम् ।
जीवचक्रस्य विज्ञानी कलौ दुर्लभ एव च ॥४॥
बालुकाया भवेत्तैलं वन्ध्या पुत्रं प्रसूयते ।
खे पुष्पमपि जायेत अयोनिर्मनुजोऽपि चेत् ॥५॥
जीवचक्रस्य विज्ञानी कलौ क्वापि न वै भवेत् ।
अग्रस्थान्नं परित्यज्य भिक्षामटति दुर्मतिः ॥६॥
तथा जीवं परित्यज्य परिधावति धावति ।
अहो जीवस्य विज्ञानी शिवतुल्यो नरो भवेत् ॥७॥
कल्पिते वा महादेवीं साङ्गां सावरणां यजेत् ।
संपूज्य पीठपूर्णान्तं तस्मिन्सिंहासनेऽथ वा ॥८॥
अभेदबुद्ध्या देवेशि अक्षतान् स्थाप्य पूजयेत् ।
पीठपूजां समाचर्य पञ्चोपचारतोऽर्चयेत् ॥९॥
पूज्यसिंहासने स्थाप्य सुधासिन्धौ समर्चयेत् ।
तत्पीठन्तु भवेदेकं सर्वासां पीठमुत्तमम् ॥१०॥
मुख्यन्तु देवदेवेशि यन्त्रपीठं समर्चयेत् ।
तद्यन्त्रसिंहपीठे तु सपीठां स्थापयेच्छिवे ॥११॥
सा देवी तत्र देवेशि भवेदावृत्तिदेवता ।
पीठावृत्तिश्च वा कार्या सर्वेषां मतमीरितम् ॥१२॥

तत्र पीठे महायन्त्रं स्वेष्टदेवात्मकं महत् ।
जीवचक्रेऽथ वा यन्त्रं भाव्यं [1] लिख्यं महेश्वरि ॥१३॥

**एतेषामभावे पूजास्थाननिरूपणम्-**

लिङ्गे स्थण्डिलवह्नयोस्तु फलके मूर्ध्नि मण्डले ।
मूर्त्तौ कुड्ये च हृदये पूजा दश सुकीर्त्तिताः ॥१४॥
अरूपं रूपिणं कृत्वा कर्मकाण्डरता जनाः ।
गवां सर्वाङ्गजं क्षीरं [2] प्रस्नवेत्तन्मुखाद्यथा ॥१५॥
तथा सर्वगतो देवः प्रतिमादौ विराजते ।
अभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः ॥१६॥
साधकस्य च विश्वासात्सान्निध्यं देवता लभेत् ।
गवां सर्वशरीरस्थं न करोत्यात्मपोषणम् ॥१७॥
सुकर्मरचितं दत्तं पुनस्तानेव पोषयेत् ।
एवं सर्वशरीरस्थसर्पिर्वत् परमेश्वरः ॥१८॥
उपासनां विना देव न ददाति फलं नृणाम् ।

**पीठपूजा-**

पीठपूजाविधानेन पीठं संपूजयेद् बुधः ॥१९॥
तत आवाहयेद्देवीं मन्त्राभ्यां पूजयेत्तथा ।
महापद्मवनान्तस्थे कारणानन्तविग्रहे ॥२०॥
सर्वभूतहिते मातरेह्येहि परमेश्वरि ।
देवेशि भक्तिसुलभे सर्वावरणसंयुते ॥२१॥
यावत्त्वां पूजयामीह तावत्त्वं सुस्थिरा भव ।
ध्यात्वा मुद्रां प्रदर्श्याथ गन्धपुष्पाक्षतादिभिः ॥२२॥
चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः ।
साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥२३॥

---

[1] लेख्यम्- इति पाठ उचितः ।
[2] स्रवेत् स्तनमुखाद् यथा - इति पाठ उचितः ।

सकलीकृत्य प्राणान्तदीयानीन्द्रियाणि च ।
प्रतिष्ठाप्यार्चयेद्देवानन्यथा निष्फलं मतम् ॥२४॥
मन्त्रहीनं क्रियाहीनं तन्त्रहीनं च यद् भवेत् ।
यद्यत्साधयते सर्वं हीनमङ्गं यथा तथा ॥२५॥
देवस्य मन्त्ररूपस्य यन्त्रव्याप्तिमजानताम् ।
कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि ॥२६॥
षोडशैरुपचारैस्तु साङ्गां सावरणां यजेत् ।
प्रणवादिनमोऽन्तेन तत्तन्नाम्ना समर्चयेत् ॥२७॥

**षोडशोपचारमन्त्राः-**

इदन्तु आसनं दत्तं मया सुरवरार्चिते ।
भवैतस्मिन्निषण्णा त्वं यावत्पूजां करोम्यहम् ॥२८॥
पाद्यं गृह्ण महादेवि सर्वदुःखापहारकम्
त्रायस्व वरदे देवि घोरादस्माद् भवार्णवात् ॥२९॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
तच्च स्वधापदैर्दद्यान्मधुपर्कं तथा प्रिये ॥३०॥
अर्घ्यं स्वाहापदेनैव सर्वमन्यन्नमःपदैः ।
दूर्वाक्षतसमायुक्तं विल्वपत्रं समन्वितम् ॥३१॥
शोभनं शङ्खपात्रस्थं गृहाणार्घ्यं हरप्रिये ।
चन्द्रजातीलवङ्गैलाकक्कोलसहितं जलम् ॥३२॥
गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम् ।
मधुपर्कं महेशानि ब्रह्मणा परिकल्पितम् ॥३३॥
मया निवेदितं तुभ्यं गृहाण जगदीश्वरि ।
मधुपर्कप्रदानान्ते पुनराचमनीयकम् ॥३४॥
दातव्यं प्राशनान्तेऽस्य यत उच्छिष्टता भवेत् ।
वारीदं शीतलं शुद्धं प्रशस्तं निर्मलं च यत् ॥३५॥
मया निवेदितं भक्त्या स्नाह्यनेन सुरेश्वरि ।
नानावर्णसमायुक्तं पट्टसूत्रादिनिर्मितम् ॥३६॥

वासः शुक्लन्तथा रक्तं गृहाण त्रिदशेश्वरि ।
देहशोभाकरं पूतं रञ्जितं रागवस्तुभिः ॥३७॥
परिधत्स्व जगद्धात्रि वासो भक्त्या निवेदितम् ।
वाससः परिधानान्ते पुनराचमनीयकम् ॥३८॥
दातव्यं भक्तिभावेन स्मृत्युक्तत्वान्मनुष्यवत् ।
दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ॥३९॥
अलङ्कारास्त्वदङ्गानि शोभयन्तु सुरेश्वरि ।
अधिकाधिकशोभायाः कारकं नागसम्भवम् ॥४०॥
अतिरागिसमुत्पिञ्जं सिन्दूरं परगृह्यताम् ।
स्निग्धमुष्णं हृद्यतमं दृशां शोभाकरं तव ॥४१॥
गृहीत्वा कज्जलं सद्यो नेत्राण्यञ्जय पार्वति ।
त्वत्पादाम्भोजनखरद्युतिकारि मनोरमम् ॥४२॥
अलक्तकमिदं देवि मया दत्तं प्रगृह्यताम् ।
अनुलेपनमेतद्धि महासुरभिशीतलम् ॥४३॥
मया निवेदितं देवि गृहीत्वा लेपयाङ्गकम् ।
इदं कुसुममामोदि ग्रामारण्यसमुद्भवम् ॥४४॥
प्राणसन्तर्पणं हृद्यं मया दत्तं प्रगृह्यताम् ।
कर्पूरागुरुसंमिश्रो वनस्पतिरसोद्भवः ॥४५॥
मया निवेदितो धूपो देवदेवि प्रगृह्यताम् ।
त्वं सूर्यचन्द्रज्योतींषि विद्युदग्नी तथैव च ॥४६॥
त्वमेव जगतां ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।
नानाविधानि रम्याणि स्वादूनि रसवन्ति च ॥४७॥
मया दत्तानि गृह्यन्तां नैवेद्यानि सुरार्चिते ।
फलमूलानि सर्वाणि ग्रामकाननजानि हि ॥४८॥
नानाकारसुगन्धीनि गृहाण त्वं हरप्रिये ।
चतुर्विधमिदं भक्ष्यं देवि षड्भी रसैर्युतम् ॥४९॥
सदातृप्तिकरं रम्यमिदमन्नं प्रगृह्यताम् ।
गव्यसर्पिःपयोयुक्तं नानामधुरमिश्रितम् ॥५०॥

निवेदितं देवि मया परमान्नं प्रगृह्यताम् ।
अमृतै रचितं दिव्यं घृतखण्डविनिर्मितम् ॥५१॥
पिष्टकं विविधं स्वादु गृहाण हरवल्लभे ।
मोदकं स्वादु रुचिरं[1] कर्पूरादिभिरन्वितम् ॥५२॥
मिश्रं नानाविधैर्द्रव्यैः प्रतिगृह्याशु भुज्यताम् ।
ताम्रपात्रे स्थितं सिन्धुं पयो गव्यमथात्र वा ॥५३॥
नारिकेलोदकं कांस्ये गृहाण शङ्करप्रिये ।
पानीयं शीतलं स्वच्छं प्रसन्नं घनसारयुक् ॥५४॥
भोजने तृप्तिकृद्देवि कृपया परिगृह्यताम् ।
भोजनान्ते प्रदातव्यं पुनराचमनीयकम् ॥५५॥
पूर्वोक्तेनैव मन्त्रेण सर्वत्रैव शुचिस्मिते ।
फलपत्रकसंयुक्तं कर्पूरादिसुवासितम् ॥५६॥
मुखकान्तिकरं हृद्यं ताम्बूलं प्रतिगृह्यताम् ।
अथागमोक्तमार्गेण तर्पयेदलिबिन्दुभिः ॥५७॥
अङ्गुष्ठानामिकाभ्यां तु नखैर्निःशब्दमुत्क्षिपन् ।
अपात्रस्यन्दमुष्टौ च तर्पयेद्देवतामुखे ॥५८॥
सकृत्तर्पणमुत्सृज्य जप्त्वा मूलं च पादुकाम् ।
अन्तःशक्तिमनुस्मृत्य तर्पयेद्देहदेवताम् ॥५९॥
अङ्गुष्ठं भैरवस्थानं चण्डिकायास्त्वनामिका ।
तस्मात्ताभ्यां तर्पणीयं यत एतत्तयोः प्रियम् ॥६०॥
अङ्गुष्ठमध्यमाभ्यां च वश्यकर्मणि तर्पयेत् ।
तर्जन्यङ्गुष्ठयोगेन तर्पयेदाभिचारके ॥६१॥
कनिष्ठाङ्गुष्ठयोगेन स्तम्भकर्मणि तर्पयेत् ।
एवं सन्तर्प्य देवाग्रे गुरुपङ्क्तिं प्रपूजयेत् ॥६२॥

---

[1] क. मा.खण्डितोयं भागः, ख.मा. पूरितः ।

कराभ्यां चिन्मुद्रां समधुनृकपालं च दधतीम्
श्रितस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ।
कृपापूर्णापाङ्गीमरुणनयनां वर्करकचा -
मुपेतां सिद्धौघैर्यजति गुरुपङ्क्तिं कृतमतिः ॥६३॥
एवं संपूज्य धूपं च दीपं नैवेद्यमेव च ।
आसवं पिशितोपेतं भक्ष्याणि विविधानि च ॥६४॥
कदल्यादिफलान्येवं ताम्बूलं च समर्पयेत् ।
बटुकादीन् समर्च्यैवं कुलदीपान् प्रदर्शयेत् ॥६५॥
ईषत्पक्वसुपिष्टेन कुर्याद्विदाङ्गुलोन्नतम् ।
दीपान् डमरुकाकारान् त्रिकोणानतिशोभनान् ॥६६॥
कर्षाज्यग्राहिणः कुर्यान्नव सप्ताथ पञ्च वा ।
अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभान् ॥६७॥
त्रिधा देव्युपरि भ्राम्य कुलदीपान् निवेदयेत् ।
समस्तचक्रचक्रेशियुते देवि तवाम्बिके ॥६८॥
आरार्त्तिकमिदं देवि गृहाण मम सिद्धये ।
कुलदीपान् प्रदर्श्याथ शक्तिपूजां समाचरेत् ॥६९॥

**शक्तिपूजाया आवश्यकतानिरूपणम्-**

कौलिका वाऽप्यकौला वा ये चैतन्मतवर्त्तिनः ।
तेषां नित्या शक्तिपूजा प्राहैवं मां पुरद्विषः ॥७०॥
कृतायां शक्तिूजायां सफलं नित्यपूजनम् ।
अकृतायां मनुष्याणां निष्फलं नित्यपूजनम् ॥७१॥
तस्माद्यत्नेन सम्पूज्या शक्तिर्नित्यार्चनादनु ।
देवीधियैव संपूज्या न सामान्यवधूधिया ॥७२॥
अभ्यर्च्य देवताबुद्ध्या भोगपात्रं निवेदयेत् ।
तदन्ते कन्याकाश्चापि प्रमदाश्च मनोहराः ॥७३॥
संपूज्य देवताबुद्ध्या दद्यात्पात्रं पृथक् पृथक् ।
अनिवेद्य तु यः शक्त्यै कुलद्रव्यं निषेवते ॥७४॥

पूजनं निष्फलं तस्य देवता न प्रसीददति ।
मन्त्रतन्त्रसमायुक्ता समयाचारपालिका ॥७५॥
कुमारी वा व्रतस्था वा योगमुद्राधराऽपि वा ।
पूजाकाले स्वतः प्राप्ता सा पूज्या सहसा बुधैः ॥७६॥
ततोऽर्चनादिकं पूर्वं मन्त्रोदकपुरस्सरम् ।
इतः पूर्वादिमनुना मन्त्री देव्यै समर्पयेत् ॥७७॥
शेषं दक्षिणवत्कुर्यात्तदुच्छिष्टादिकं तथा ।
शक्तिहीना वृथा पूजा शिवहीनं वृथार्चनम् ॥७८॥
शिवशक्तिसमायुक्ता सा पूजा सर्वकामदा ।
शक्त्यभावे द्रव्यलाभे मनःशक्तिं प्रपूजयेत् ॥ ७९॥
शेषिकामन्त्रतो देयं शेषिकायै स कथ्यते ।
ऐं ह्रीमुच्छिष्टचाण्डालिनि मातङ्गि पदं वदेत् ॥८०॥
सर्ववशङ्करि स्वाहा चैव विंशतिवर्णकः ।
मन्त्रेणानेन निर्माल्यं शेषिकायै समर्पयेत् ॥८१॥
देवीमुच्छिष्ट (चाण्डालीं) मातङ्गीं ध्यायेल्लोकैकमोहिनीम् ॥८२॥
वीणावाद्यविनोदगीतनिरतां नीलांशुकोल्लासिनीम्
बिम्बोष्ठीं नवयावकार्द्रचरणामाकर्णकेशांशुकाम् ।
हृद्याङ्गीं सितशङ्खकुण्डलधरां माणिक्यभूषोज्ज्वलाम्
मातङ्गीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ॥८३॥
कौलिकैः शक्तिसहितैस्तदुच्छिष्टं च सेवयेत् ।
स्वशक्तिं वीरशक्तिं वा दीक्षितां गुरुरूपिणीम् ॥८४॥
पाययित्वा पिबेन्मद्यमिति शास्त्रस्य निश्चयः ।
ततः श्रीगुरुरूपाय साक्षात्परशिवात्मने ॥८५॥
कराभ्यां पात्रमुद्धृत्य सद्वितीयं निवेदयेत् ।
गुरोरभावे तत्पात्रं जलमध्ये च निःक्षिपेत् ॥८६॥
पूज्यशक्तिं शक्तिपात्रं वीरेभ्यो वीरपात्रकम् ।
अन्येभ्यो योगिनीपात्रं स्वार्थे स्याद्भोगपात्रकम् ॥८७॥

कुण्डलीतर्पणार्थञ्च भोगपात्रं समाचरेत् ।
अन्त:शक्तिमनुस्मृत्य तर्पयेद्देहदेवताम् ॥८८॥
स्वात्ममूलत्रिकोणोद्यत्सूर्यकोटिसमप्रभे ।
कुण्डल्याकृतिचिद्रूपे हुनेद् द्रव्यं समन्त्रकम् ॥८९॥
अनन्तपात्रं भरितमिदं तत्परमामृतम् ।
पराहन्तामये वह्नौ होमस्वीकारलक्षणम् ॥९०॥
निर्मन्त्रं न पिबेद् द्रव्यं प्रायश्चित्तं विधीयते ।
न कदाचित्पिबेन्मद्यं निर्मन्त्रं न पिबेत्तथा ॥९१॥
विना मन्त्रं पिबेन्मद्यं स सुरापो निगद्यते ।
पूर्णपात्रं करे धृत्वा जुहोमि साधक: पठेत् ॥९२॥
ततो वीरगण: सर्व: जुषस्वेति मनुं वदेत् ।
आगलान्तं पिबेद् द्रव्यं ततश्च चर्वणं चरेत् ॥९३॥
मांसं मत्स्यं च मुद्रां च मैथुनं वै क्रमाच्चरेत् ।
स्वसम्प्रदायसंयुक्तैर्वीरैश्च सह पूजयेत् ॥९४॥
अन्योऽन्यं वन्दनं कृत्वा पिबेत्तत्तदनुज्ञया ।
सव्येनोद्धृत्य पात्रं तु मुद्रां कृत्वाऽपसव्यत: ॥९५॥
यथाविधि द्वितीयेन गृह्णीयान्मन्त्रमुच्चरेत् ।

**मन्त्रनिरूपणम्-**

इदं पवित्रममृतं पिबामि भवभेषजम् ॥९६॥
पशुपाशसमुच्छेदकारणं भैरवोदितम् ।
चित्तस्वातन्त्र्यसारत्वात्तस्याऽऽनन्दमये त्वत: ॥९७॥
तन्मयत्वाच्च भावानां[1] भावश्चान्तर्हितो रसे ।
स्वस्वातन्त्र्यविकासाय सुरा सा तेन पीयते ॥९८॥
तस्मादिमां सुरां देवीं पूर्णाहन्तां जुहोम्यहम् ।
मन्त्रेणानेन देवेशि मूलमन्त्रेण मन्त्रवित् ॥९९॥

---

[1] भावस्यान्तो हितोरसं - इति ख.मा.पाठ: ।

अनाकुलमना: कुर्यान्मधुपानं शनैः शनैः ।
यावदुल्लासपर्यन्तमुपदंशैः पिबेन्मधु ॥१००॥
पानभेदफलोल्लासप्रमाणस्थितिलक्षणम् ।
अविज्ञाय चरेद्यस्तु स भवेदापदां पदम् ॥१०१॥
पानं पञ्चविधं प्रोक्तं महादिव्यादिभेदतः ।
महादिव्यं तथा दिव्यं वीरश्चैव महापशुः ॥१०२॥
पशुवन्द्यः पशुश्चेति पञ्चधा परिकीर्त्तितः ।
प्राणापानौ समाहारौ प्रत्याहारमतः स्थिरम् ॥१०३॥
भानुमण्डलकं[1] भित्त्वा इन्द्रमण्डलमध्यगम् ।
सुषुम्णावर्त्मना नित्यं सुधाधाराप्रवर्षिणी ॥१०४॥
महादिव्यमिदं प्रोक्तं श्रृणु दिव्यं महेश्वरि ।
दिव्यं देव्यग्रतः पानं वीरं मृद्वासनोत्तरम् ॥१०५॥
त्यक्तसर्वपाशमूलवासनामलसञ्चयः ।
कौलिकाचारयोगेन पञ्चतत्त्वेन तर्पयेत् ॥१०६॥
षट्चक्रक्रमभेदेन हुनेद् द्रव्यं समन्त्रकम् ।
ध्यानार्चनपरावस्था वीरपानमनुत्तमम् ॥१०७॥
उद्वासनोत्तरं देवि वीरपानं[2] तदुच्यते ।
वीरपानं द्विधा प्रोक्तं पशुपानं शृणु प्रिये ॥१०८॥
[3] वीरपाने पूर्वधीरो परस्तु पशुरित्यपि ।
आसक्तो लोलुपो दम्भो मन्त्रार्थे चाप्रसङ्गकः ॥१०९॥
कामुकः कार्यनिर्देशे पशुपानं तदुच्यते ।
सर्वैः कुलीनैः स्थित्वा तु विना पूजां सगर्वितैः ॥११०॥
यत्पानं क्रियते देवि पशुपानं तदुच्यते ।
अतोऽपि शृणु देवेशि पशुपानक्रमः शिवे ॥१११॥

---

[1] नीत्वा इमम् - इति ख.मा.पाठः ।
[2] तदुच्यते- इति ख.मा.पा. पूरितः, क.मा. खण्डितः ।
[3] श्लोकाः १०९, ११०, १११ इति ख.मा. न प्राप्यन्ते ।

एकाकी मद्यपायी य एकान्ती शक्तिभुक् प्रिये ।
माहेश्वरस्य संसर्गं न कदाऽपि करोति चेत् ।।११२।।
पशुपानमिदं प्रोक्तं महादारिद्र्यदायकम् ।
विनां मन्त्रं विना दीक्षां विना गुरुमुखात् प्रिये ।।११३।।
यत्पानं क्रियते मूर्खैः पशुपानं विदुर्बुधाः ।
[1] महापशुरिति प्रोक्तः कौलवामौ शृणु प्रिये ।।११४।।
वामे रामा मनोहारी चालिपात्रं तु दक्षिणे ।
पानपात्रान्महेशानि वामहस्तेन तर्पकः ।।११५।।
महाकौलो महेशानि भूमौ स्थाप्य प्रतर्पयेत् ।
हस्तद्वयेन चेद्देवि कौल इत्यभिधीयते ।।११६।।
वामदक्षव्यत्ययेन वीरकौलः प्रकीर्त्तितः ।
अलिपात्रं वामपाणौ दक्षहस्तेन तर्पयेत् ।।११७।।
वामगौडस्तु संप्रोक्तश्चैतन्याख्यः स एव तु ।
भूमौ स्थाप्य महेशानि हस्तयुग्मेन तर्पयेत् ।।११८।।
आनन्दाख्यस्तु सम्पोक्तो वाम इत्यभिधीयते ।

**फलनिरूपणम्–**

मन्त्रसंस्कारसंशुद्धाऽमृतपानेन पार्वति ।।११९।।
जायते देवताभावो भवबन्धविमोचकः ।
आनन्दं ब्रह्मणो रूपं तच्च मोक्षे व्यवस्थितम् ।।१२०।।
तस्यभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते ।
दिव्यपानरतो वीरो देवीसायुज्यमाप्नुयात् ।।१२१।।
देशिको वीरपानेन देवलोकं हि गच्छति ।
साधकः पशुपानेन रौरवं नरकं व्रजेत् ।।१२२।
आरम्भस्तरुणश्चैव यौवनः प्रौढ एव च ।
तदन्ता चोन्मनावस्थानावस्था चैव सप्तमी ।। १२३।।

[1] महापशू इति प्रोक्तौ कौलवामौ - इति पाठ उचितः ।

**अवस्थालक्षणम्–**

पात्रत्रयं स्यादारम्भः कथितः कुलनायिके ।
तदन्ते तरुणश्चैव तरुणं सुखदं प्रिये ॥१२४॥
यौवनं मनसः सम्यगुल्लासः कथितः प्रिये ।
स्खलनं दृङ्मनोवाचां प्रौढमित्यभिधीयते ॥१२५॥
स्वाभीष्टचेष्टाचरणं प्रौढान्तः परिकीर्त्तितः ।
उन्मनाः पतनोत्थानमूर्च्छनाच्च मुहुर्मुहुः ॥१२६॥
देहेन्द्रियाणामवशश्चानवस्था निगद्यते ।
पिशितं माषमात्रं तु मद्यं चुलुकसंमितम् ॥१२७॥
स्वीकार्यमादौ गुरुणा शिष्येभ्यः शेषदो भवेत् ।
निःसङ्गो निर्मलो धीरो निर्लज्जो निष्कुतूहलः ॥१२८॥
निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ।
देवान् पितृन् समभ्यर्च्य देवीशास्त्रोक्तवर्त्मना ॥१२९॥
गुरुं स्मरन्पिबन्मद्यं खादन्मांसं न दोषभाक् ।
गुरुदैवतमन्त्राणामैक्यं सम्भावयन्धिया ॥१३०॥
सव्येनोद्धृत्य पात्रन्तु मुद्रां कृत्वाऽपसव्यतः ।
यथाविधि द्वितीयेन गृह्णीयान्मन्त्रमुच्चरन् ॥१३१॥
भोजनान्ते विषं मद्यं मद्यान्ते भोजनं विषम् ।
अमृतं तद्विजानीयाद्यदन्नं सुरया सह ॥१३२॥
चर्वणेन युतं मद्यममृतं कथितं सदा ।
चर्वणेन विना पानं केवलं विषभक्षणम् ॥१३३॥
ततस्तुत्वा नमस्कृत्य कुर्यात्सम्भोगमेलनम् ।
देवाताग्रे तु सम्भोगे देवताप्रीणनं भवेत् ॥१३४॥
एतासु काञ्चि ततश्च योनिमण्डले ।
पूजयित्वा महादेवि ततो मैथुनमाचरेत् ॥१३५॥
धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुवा ।
सुषुम्णावर्त्मना नित्यमक्षवृत्तिं जुहोम्यहम् ॥१३६॥

स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्तितः ।
ततो जपेत्प्रियं गच्छन् देवीं त्रिभुवनेश्वरीम् ॥१३७॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुवा ।
धर्माधर्मकलास्नेहपूर्णमग्नौ [1]जुहोम्यहम् ॥१३८॥
स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्तितः ।
प्रमादाद्यदि लुप्येत देवता सा प्रकुप्यति ॥१३९॥
विना भुक्त्वा विना पीत्वा विना कृत्वा तु पञ्चमम् ।
स पापिष्ठः कथं ब्रूते कालीमन्त्रं जपाम्यहम् ॥१४०॥
तस्मात्सर्वप्रयत्नेन साधयेत्पञ्चमं प्रिये ।
यदि चेत्क्रियते नैव तस्य दुःखं पदे पदे ॥१४१॥
योषित्सङ्गो न यदि स्यात्तदानुकल्पयोगतः ।
कर्तव्यं कर्म साङ्गार्थं नोचेद् विफलमीरितम् ॥१४२॥

**इति तन्त्रचिन्तामणौ कौलवामयोः सामान्यनित्यार्चनायां पीठपूजादिकुलद्रव्यनिषेवानान्तनिर्णयनामा ऊनविंशतितमः प्रकाशः ।**

*****

[1] अग्नः - इति ख.मा.पा. ।

# विंशतितमः प्रकाशः

निर्गत्य पूजागृहतो विहरेत्स्वेच्छया ततः ।
शृणु भोजनकालीयं कर्तव्यमधुना प्रिये ॥१॥
भुञ्जीत प्राच्यभिमुखश्चिरकालं जिजीविषुः ।
याम्यदिग्वदनो देवि यशः कामं समश्नुते ॥२॥
पश्चिमाभिमुखो भुङ्क्ते ईहमानोऽधिकां श्रियम् ।
सिद्धिं मुक्तिमभिलषन्भक्षयेदुत्तरामुखः ॥३॥
एवं स्थिते धर्मपथे विशेषाच्छक्त्युपासकः ।
सदोत्तराशाभिमुखोऽन्नमद्यात्सन्ध्ययोर्द्वयोः ॥४॥
बलिदानन्तत्र हेतुरित्याह भगवाञ्छिवः ।
येन केनाप्यासनेन यास्मिन्[1] कस्मिन्तथासने ॥५॥
उपविश्यान्नमश्नीयान्न तु भूमौ कदाचन ।
आदावाचमनं कृत्वा दक्षे संस्थाप्य चोदकम् ॥६॥
[2] वामे वाम आचमनीयमत्र निदधीत वै ।
रात्रौ पुरः प्रदीपं च दिवाग्निं यः सुरेश्वरि ॥७॥
तेनास्य जाठरो वह्निर्नित्यं सिद्धो भवेदहो ।
भूतप्रेतपिशाचानां सान्निध्यं न च जायते ॥८॥
रक्षांसि नावलुम्पन्ति तदन्नं तद्धविस्तथा ।
नैर्ऋत्याग्रां मारुतान्तां रेखामुदकधारया ॥९॥
रोषरावास्त्रमुच्चार्य कुर्याद्दक्षिणपाणिना ।
वायव्याग्रां तथैशानां वसनान्तदनन्तरम् ॥१०॥
ऐशानकोणादारभ्याग्नेयान्तामनन्तरम् ।
आग्नेयाग्रां निर्ऋत्यन्तां सर्वं शेषे विभावयेत् ॥११॥

---

[1] कस्मिन्- इति पाठः क.मा. न प्राप्यते ।
[2] वाम आचमनीयं च मन्त्रेण निदधीत वै ।- इति पाठ उचितः ।

मण्डलं मध्यविन्द्वाढ्यं रक्षःकोणे बहिर्लिखेत् ।
वज्रं वायव्यकोणे च चन्द्ररेखां सबिन्दुकाम् ॥१२॥
ईशानकोणे विलिखेदङ्कुशं वह्निकोणगम् ।
अर्वाच्युदीच्यगां रेखां मध्ये कुर्यात्ततः परम् ॥१३॥
प्रतीचीप्राच्यनुगतां पुनस्तदुपरि न्यसेत् ।
रेखाग्रं चन्द्ररेखाभिः सबिन्दुभिरुपस्पृशेत् ॥१४॥
निर्मिते मण्डले वारिधारयैवं वरानने ।
स्वयं वाऽन्योऽथवा तत्र न्यसेद् भोजनभाजनम् ॥१५॥
तदुपस्करवस्तूनि यावन्ति रचितानि हि ।
पृथक् पृथक् त्वया तत्र विन्यसेद् भाजनाग्रतः ॥१६॥
ततो दक्षिणहस्तेन तदन्नं वारिणोक्षितम् ।
शिरस्यञ्जलिमादाय प्रणमेदिष्टरूपिणम् ॥१७॥
हविरक्तं विधायादौ तेमनालोडितन्ततः ।
गृहीत्वा दक्षहस्तेन किञ्चिदन्नं जलान्वितम् ॥१८॥
घनवीजं समुच्चार्य पर्य्यन्यं च न्यसेऽन्तिमम् ।
नमस्तस्या नु नैर्ऋत्यकोणे पूर्वादिके न्यसेत् ॥१९॥
तारात् प्रजापतिभ्यो नु हृदुच्चार्यानिलाह्वये ।
दद्यादन्नं तोययुतं तत्र ऐशानमण्डले ॥२०॥
शुद्धो नमस्तस्य वीजं पुर उक्त्वा बलिं न्यसेत् ।
तद्वद् भृद्भ्यो नम प्रोच्य तद्बीजाद्यं सुरार्चिते ॥२१॥
दद्यात्सृण्युपरिष्टात्तु सतोयान्नं च साधनम् ।
ततः स्वदक्षे पूर्वस्यां कुर्याद् वर्तुलमण्डलम् ॥२२॥
आरभ्य पूर्वहरितो यावत् स्युर्विदिशेश्वराः ।
तावद्दद्यात्स तोयान्नं पठेन्मन्त्रं पृथक् पृथक् ॥२३॥
चैतन्यं प्रणवो माया पाशः कामश्च शाकिनी ।
योगिनी कमला चेति बीजान्यष्टौ पृथक् पृथक् ॥२४॥
पुष्टिः कान्तिर्बलं वुद्धिर्वीर्यं ज्ञानं तथैव च ।
वृद्धिः सिद्धिरिति ज्येष्ठा भिन्नभिन्नपदानि हि ॥२५॥

दायै नमश्च सर्वेभ्यः क्रमेण परिकीर्तयेत् ।
एतास्तु कालिकादेव्याः शक्तिरूपास्तु मूर्त्तयः ॥२६॥
परिवारतया ख्याता अन्नाधिष्ठात्र्य ईरिताः ।
एतास्तत्तत्प्रदायिन्यः स्युरन्नेन प्रपूजिताः ॥२७॥
ततो भोजनपात्राग्रे वितस्तिमित ईश्वरि ।
षण्मण्डलानि कुर्वीत वारिणा क्षुल्लकानि हि ॥२८॥
तेषामधस्तात् क्रमतो बिन्दुस्तावत्समाचरेत् ।
यावद्धस्तेनोत्पतति पिण्डीकर्तुञ्च शक्यते ॥२९॥
तावत्तत्र पुरो दत्त्वा वारिणा तत्समुत्सृजेत् ।
अधोगतिस्तदुपरि तदष्टमनवस्ततः ॥३०॥
अतः परं क्रमेणैव मन्त्रान् द्वादशतान्त्रिकान् ।
वक्ष्यमाणान् मया देवि सावधाना निशामय ॥३१॥
तारो माया च रावश्च कूर्चकुण्डे सकर्णिके ।
सुरसश्चापि फेत्कारी घटी चेति नवैव हि ॥३२॥
बीजानि पुरतो दत्त्वा हंसारादि त्रिकूटकम् ।
एह्येहि संभाष्य ततो भगवत्यपि कीर्तयेत् ॥३३॥
गुह्यकालि ततः प्रोच्य सर्वाख्यायनकारिणि ।
इदमन्नं विसं ह्युक्त्वा गृह्ण खाहि युगं युगम् ॥३४॥
बलं बुद्धिर्मे इन्द्रियाणि ततोऽनन्तरमीरयेत् ।
मयि धेहि द्वयं चापि सर्वान्तर्यामिनीति च ॥३५॥
ततः सर्वमिदं ते च स्वदतात्तदनन्तरम् ।
प्रसीद द्वितयस्यानुरोषास्ते शिर एव च ॥३६॥
मन्त्रेणानेन देव्यै तु बल्यन्नं विनिवेदयेत् ॥
अन्नपिण्डं पुनश्चान्यत् संपरिस्थाप्य मण्डले ॥३७॥
उदीर्यमाणमनुना समुत्सृज्य निवेदयेत् ।
सारस्वतरमाकामप्रासादाङ्कुशकालिका: ॥३८॥
डाकिनीप्रेतभैरव्यः पुरो बीजानि वै नव ।
कूटत्रयं च तदनु पैशाचः खेचरीकुलम् ॥३९॥

योगिनीडाकिनीभ्योऽनु इममन्नबलिं वदेत् ।
निवेदयामि च ततः सौम्या भुक्त्वा भवन्तु च ॥४०॥
सिद्धिं ददत्वनु मयि कृपां ददतु कीर्तयेत् ।
प्रभञ्जनादिबीजानि ततः सप्त समुल्लिखेत् ॥४१॥
अडाकिनी महारात्रीं रोषमस्त्रत्रयं शिरः ।
इदानीमवधेहि त्वं विनायकबलिं शुभम् ॥४२॥
पूर्ववन्मण्डले दत्त्वा बल्यन्नन्तेमनैर्युतम् ।
जल्पिष्यमाणमन्त्रेण गणाधिपतयेऽर्पयेत् ॥४३॥
वेदादिपाशगरुडयोगिनीचण्डदक्षिणाः ।
बलिः पद्मञ्च तन्द्रा च कूटसिद्धाविमे नव ॥४४॥
महागणाधिपतये विघ्नराजाय चेत्यपि ।
इमं सोपस्थलबलिं वदेद् गृह्णयुगं ततः ॥४५॥
भक्षय द्वितयं चापि सर्वान् विघ्नान् ततः परम् ।
विनाशयद्वयं चानु ममारिष्टं दह द्वयम् ॥४६॥
बीजमाप्सरसं चैवमाश्चर्यं वैश्वदेवकम् ।
ऋषभं च प्रयोजं च पञ्चैतानीरयेत् क्रमात् ॥४७॥
अस्त्रत्रयानु स्वाहा च तार्त्तीयो मनुरीरितः ।
तूर्यं बटुकनाथस्य मन्त्रमाकर्णय प्रिये ॥४८॥
पुरोक्तवत् पिण्डितान्नं मण्डले विनिधाय वै ।
समुच्चरन्निमं मन्त्रं बटुकाय समर्पयेत् ॥४९॥
तारचैतन्यपाश ह्रीं भारुण्डाकूर्चकाकिनीः ।
कालादित्यं नवैतानि बीजानि प्रोच्चरेत् पुनः ॥५०॥
रौद्रानन्दाचलाख्यातान् कूटाँस्त्रींस्तदनन्तरम् ।
एह्येहि तदनु प्रोच्य महाबटुकनाथ च ॥५१॥
इमं बलिं गृहाणानु सर्वसिद्धिं दद द्वयम् ॥
मम शत्रून्नाशय द्विर्दह द्विर्मारय द्वयम् ॥५२॥

सर्वैश्वर्यं देहि युग्मं दापय द्वितयं तथा ।
स सौरङ्गं चर्पटादिचतुष्कं तदनन्तरम् ॥५३॥
रौषास्त्रयोस्त्रिस्त्रिरुक्त्वा सर्वशेषे शिरो वदेत् ।
अधुना क्षेत्रपालस्य शृण्वन्तु बलिमुत्तमम् ॥५४॥
पुरोवत्सकलं दत्त्वा मन्त्रमेनं समुच्चरेत् ।
चैतन्यमायाकमलाजंभसानू समेखलौ ॥५५॥
ताटकं मदस्वार्णाश्च बीजानि पुरतो नव ।
कूटत्रयं ततो ब्रूयान्मायामन्दारगह्वरम् ॥५६॥
हेतुकादिपदं प्रोच्य भीषणान्तेभ्य इत्यपि ।
सर्वेभ्यः क्षेत्रपालेभ्य इमं बलिमितीरयेत् ॥५७॥
ददे सौम्यो भवेत्युक्त्वा मम सिद्धिं समुल्लिखेत् ।
प्रयच्छन्तु ततः शत्रून्नाशयन्तु च कीर्तयेत् ॥५८॥
हूँ फट् स्वाहा भवेच्छेष इत्युक्त्वा वारिणोत्सृजेत् ।
अथ षष्ठबलेर्मन्त्रं कथयामि शुचिस्मिते ॥५९॥
दीयते परिवारेभ्योऽयमुच्चार्य फलार्थिभिः ।
चैतन्यतारकमलापाश लासवधूस्मराः[1] ॥६०॥
ततः प्रासादशाकिन्यौ पुरो बीजानि वै नव ।
भगमालिकलामालिवेदवत्यस्ततः परम् ॥६१॥
रत्नकुम्भः पुष्पमाला चूडाकूटन्ततः परम् ।
एकावली ततो वज्रकवचं ब्रह्मखर्परम् ॥६२॥
जगदावृत्तिबीजं च दशमं परिकीर्तितम् ।
महाकल्पस्थायिनाम ज्ञेयमेकादशैव हि ॥६३॥
पारिजाताह्वयं कूटं तद्द्वादशतमं भवेत् ।
एकविंशतिरेव स्यात्संख्या वै बीजकूटयोः ॥६४॥

---

[1] रोप- इति ख.मा.पा. ।

गुह्यकाली सहचरं यावदेकपदादनु ।
परिवारपदं चापि द्वयमेव न्यसेन्निमम् ॥६५॥
ततः सन्धानसहितमिममन्नबलिं वदेत् ।
गृह्णद्वयं भक्षय द्विः खाहि द्वितयमेव च ॥६६॥
उक्त्वा कृत्याभिचाराँश्च दह द्विर्नाशय द्वयम् ।
सर्वसंपदामाभाष्य दह देहि द्वयं द्वयम् ॥६७॥
शत्रून् द्विः संहारयोच्चार्य शेषे कूर्चास्त्रकानि च ।
बलिमन्त्राः षडेवान्ते कथिता जगदीश्वरि ॥६८॥
ऊर्द्धस्थमण्डलेष्वेतैरुत्सृजेत् साधको बलीन् ।
एषामधस्ताद्ये प्रोक्ता बिन्दवः षट् पुरो मया ॥६९॥
तद्देवाँस्तस्य मन्त्राँश्च कथयाम्यधुना तव ।
जातवेदा वाडवश्च शन्यगस्त्यौ ततः परम् ॥७०॥
कालग्निरुद्रस्तदनु पञ्चमः परिकीर्त्तितः ।
कल्पान्तकाली षष्ठी तु विज्ञेया तदनन्तरम् ॥७१॥
तूर्यैक्ये षडिमे शब्दाः कर्त्तव्याः सुरवन्दिते ।
निधेयाः क्रमशः किन्तु वेदादि हृदयान्तरम् ॥७२॥
एतैर्मनुभिरुत्सृज्य तत्तद्देवेभ्य ओदनम् ।
मूलदैव्यै सर्वमन्नमुत्सृजेत्तदनन्तरम् ॥७३॥
उक्तमन्त्रद्वयं तत्र वैदिकं तान्त्रिकं तथा ।
दद्यादुभयमुच्चार्य क्रम एष शिवोदितः ॥७४॥
तत्रादौ वैदिकं वच्मि वक्ष्ये तदनु तान्त्रिकम् ।
इदमेव प्राणतनुधारणकारणं सदा ॥७५॥
यथा विभवसंभारसंभारितमूरीकुरु ।
त्वमेवान्नं त्वमेवात्री त्वं दात्री त्वं ग्रहीत्र्यपि ॥७६॥
त्वं भोक्त्री च विधात्री च संहर्त्र्यपि जनित्र्यपि ।
कल्पान्तकालनर्तक्यै महासंहारमूर्त्तये ॥७७॥

१ त्रिलोकिग्रासकारिण्यै किमन्ननन्ते प्रदीयते।
तथापि भक्तिभावेन यत्ते देवि निवेदितम् ॥७८॥
तदन्नं मयि वात्सल्यात्सादराद् भुङ्क्ष्व कालिके।
निवेद्यानेन मन्त्रेण तान्त्रिकं समुदीरयेत् ॥७९॥
तारो मैथञ्च माया च प्रसादो मे च योगिनी।
प्रेत: परो डाकिनी च फेत्कारी हारकर्णिके ॥८०॥
संहारादित्रयं भोगकूटाद्यं तदनन्तरम्।
पदं सिद्धिकरालीति सिद्धितो विकरालि च ॥८१॥
भगवत्यथ सङ्कीर्त्य गुह्यकालि ततो वदेत्।
इदमन्नं विसंह्युक्त्वा भुञ्ज खाहि युगं युगम् ॥८२॥
भक्षयद्वितयं चापि मां रक्ष युगलं ततः।
लज्जा महाचण्डयोगेश्वरीति तदनन्तरम् ॥८३॥
वज्रकापालिनि ततः खेचरि चक्रनायिके।
हसद्वयं वल्लयुगं योऽस्ति डिण्डिमदारुणः ॥८४॥
रोषस्यास्त्रं सृजेत्त्रिस्त्रिः स्वाहा शेषे व्यवस्थितम्।
पठित्वेमं मनुं सर्वं क्षिपेदन्वन्नमूर्द्धनि ॥८५॥
निमील्य नयने तिष्ठेत् क्षणं तदनु पार्वति।
आपोशानं ततः कुर्यादिमं मन्त्रमुदीरयेत् ॥८६॥
इदं मन्त्रं हव्यशेषं देव्युच्छिष्टं रसान्वितम्।
अश्नामि स्वर्गकैवल्यधर्मकामार्थसिद्धये ॥८७॥
इत्युच्चार्य मनुं नम्रं शिरोवामकनिष्ठया।
गण्डूषं ब्रह्मतीर्थेन स्पृशन् स्थालीं चरेद् बुधः ॥८८॥
ततो दक्षकराङ्गुष्ठानामिके योजिते चरन्।
हविरक्तं स्तोकमन्त्रं गृहीत्वा वदने न्यसेत् ॥८९॥

---

१ त्रिलोकग्रासकारिण्यै- इति पा उचितः।

प्राणाहुतीभिर्जुहुयादन्याभिरपि पार्वति ।
नानामतीयान्तद्रीतिं कथयाम्यवधारय ॥९०॥
ताराग्निजाययोर्मध्ये विभक्त्या तुर्ययान्विताः ।
क्रमेण वायवः पञ्च तेषां नामानि वै शृणु ॥९१॥
प्राणापानसमानोदानव्यानाः परमेश्वरि ।
रीत्यानया भाण्डिकेरो जुहोत्यन्यानपि प्रिये ॥९२॥
नागःकूर्मश्च कृकलो देवदत्तो धनञ्जयः ।
एतस्मादधिकं किञ्चित् कुर्य्युः कापालिकाः क्रमम् ॥९३॥
युक्तियुक्तं तमपि ते कथयामि वरानने ।
तयोरेवान्तरे शब्दौ द्वौ द्वौ स्यादन्तिमौ सदा ॥९४॥
कृत्वा विग्रहितौ पूर्वोक्तरीत्या जुहुयाच्छनैः ।
क्षुत्तृषौ च श्रमालस्यौ निद्रातन्द्रे तथैव च ॥९५॥
कामक्रोधौ लोभमोहौ मदमानौ ततः परम् ।
रोगशोकौ जन्ममृत्यू धर्माधर्मौ कृताकृते ॥९६॥
पुण्यपापे दिवारात्री ज्ञानाज्ञाने शुभाशुभे ।
जागृत्स्वप्नौ खलु सुषुप्तितुरीयौ ततोऽनु च ॥९७॥
भावाभावौ स्वर्गमर्त्यौ ततः सत्यानृते प्रिये ।
तस्मात्प्रकृतिपुरुषौ तन्मात्रेन्द्रिय इत्यपि ॥९८॥
जीवात्मपरमात्मानौ बन्धमोक्षौ तथैव च ।
चतुर्विंशतिमौ विंशत्प्रतिविम्बौ वरानने ॥९९॥
सर्वशेषे परिज्ञेये शिवशक्ती च साधकैः ।
पञ्चविंशतिसंख्याकमेतत्तत्त्वमुदीरितम् ॥१००॥
तेभ्यस्त्वाहुतिः संप्रोक्ता यामलाधिपशम्भुना ।
अनित्यत्वेन वेदाध्वर्याजिनां संमता त्वियम् ॥१०१॥
कौलाचारवतां किन्तु नित्यत्वेन प्रकीर्तिता ।
पञ्चत्रिंशाहुतिः श्रेष्ठा दश मध्याधमास्ततः ॥१०२॥
एवं तिष्ठति सिद्धान्ते प्राणाहुत्या मतान्तरे ।
यावद्यस्य भवेच्छक्यं तावत्तेन विधीयते ॥१०३॥

यावत्प्राणाहुती: कुर्यात्तावद्भोजनभोजने ।
कनिष्ठा तिष्ठति तथा मौनं चापि विधीयते ॥१०४॥
ततस्तदन्नं भुञ्जीत यद्देव्यै विनिवेदितम् ।
न हसन्ग्रासमश्नीयान्नातिरिक्तं न वामनम् ॥१०५॥
न सशब्दं पिबेत्तोयं नाधिकं भोजनान्तरा ।
न्यूनाधिके रसानां हि न निन्द्यात् किंच पूजयेत् ॥१०६॥
नैवेद्यसंभृतौ देव्यै यद्यद्रव्यं निवेदितम् ।
महाप्रसादभूतन्तत्सर्वं भुञ्जीत तत्क्षणे ॥१०७॥
नैकाक्यद्यात्साधकस्तु कौलान्बालांश्च बान्धवान् ।
सहोपवेशयेत्तत्र यत्र भुङ्क्ते: स्वयं रह: ॥१०८॥
यषामभावे कौलिक्यो भवेयु: स्थापिता अपि ।
भागत्रयं पूरयीत जठरस्याशनै: शनै: १०९॥
एको भागोऽवशोष्य: स्यात्संचारो योऽनिलाम्बुनो: ।
तिक्ताद्यमम्लमध्यं हि मधुरान्तं च भोजनम् ॥११०॥
आयुर्वेदादिषु प्रोक्तमात्रेयादिमहर्षिभि: ।
एवं निर्वर्त्य सकलं भोजनं साधक: स्वयम् ॥१११॥
उत्क्षिप्तभाजनो मन्त्रमन्यत्र स्थापयेच्छनै: ।
अवशिष्टं किञ्चिदन्नमवश्यं भाजने न्यसेत् ॥११२॥
१ तथैवोच्छिष्टचाण्डाल्यै पूर्वस्यामपि च क्रमात् ।
एतयोर्मन्त्रयुगलमिदानीमवधारयेत् ॥११३॥
मैधं माया योगिनी च रावरामास्मराश्च रुट् ।
कुल्यापोटोमुत्ताला च बीजान्येतानि वै दश ॥११४॥
उच्छिष्टभैरवायोक्त्वा तथोच्छिष्टबलिं वदेत् ।
गृह्णद्वयं भुञ्जयुग्मं हूँ फट् स्वाहा च पश्चिमे ॥११५॥

---

१ तदन्नं पिण्डितं कृत्वा सफलं दक्षपाणिना ।
स्याल्यधो बलिमादद्यादुभयत्र वरानने ॥
उच्छिष्टभैरवायादौ पश्चिमण्यां दिशि न्यसेत् ।- इति ख.मा. पाठोऽधिक: ।

अथापरं शृणु मनुं पूर्वस्यां येन दीयते ।
मैधं पाशः स्मरो रावः कूर्च्चः क्षत्रपताकिनी ॥११६॥
पूतना शक्तिर्लिङ्गं च रावी चेति दशोद्धरेत् ।
ऐँह्येह्युच्छिष्टचाण्डालिन्यनूद्यं सन्धिवर्जितम् ॥११७॥
विरूपवेश उद्धृत्य सुमुख्युक्त्वा पिशाचिनि ।
इममुच्छिष्टं सम्भाष्य बलिं गृह्णयुगं ततः ॥११८॥
खादद्वितयमस्यानु मुद्रां खेचर्यनन्तरम् ।
युगं प्रकटय प्रोच्य संन्ध्यूनमभिचारिणी ॥११९॥
सामर्थ्यं देहि युग्मं च पिशाचिन्यास्त्रयन्ततः ।
अत्रापि चरमे ज्ञेया पूर्ववच्चतुरक्षरी ॥१२०॥
एवं मनुभ्यामेताभ्यां दत्त्वा बलियुगं प्रिये ।
तत्रैवाचमनं कुर्यात्षडङ्गं तदनन्तरम् ॥१२१॥
प्रसादभूतं देव्या यत्ताम्बूलं चास्य वासनम् ।
[1] ताम्बूलं चर्वयेन्मर्त्त्यः पवित्रं श्रीकरं परम् ॥१२२॥
शुभदं सर्ववर्णानां मुखशुद्धिकरं परम् ।
ताम्बूलं दीपनं रुच्यं सर्ववातकफापहम् ॥१२३॥
त्याज्यं पित्तक्रमे रक्ते नेत्रोत्कम्पे क्षयेपि च ।
पर्णाग्रं पर्णपृष्ठं च चूर्णपर्णं विवर्जयेत् ॥१२४॥
पर्णमूले भवेद् व्याधिः पर्णाग्रे पापबुद्धयः ।
चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥१२५॥
तर्जन्या चूर्णमादाय ताम्बूलं न तु भक्षयेत् ।
यदि खादति मूढात्मा रौरवं नरकं व्रजेत् ॥१२६॥
पूगो ब्रह्मा दलं विष्णुश्चूर्णं देवो महेश्वरः ।
काषायं तु भवेद्देवी ताम्बूलमतिदुर्लभम् ॥१२७॥

---
[1] १२२ (ख), १२३, १२४, १२५, १२६ - इति श्लो. ख.मा.न प्राप्यन्तं ।

[1] एतेषां सम्प्रदानेन वर्धन्ते भाग्यसम्पदः ।
ताम्बूलं समयं देवि तत्र शृणु यथाक्रमम् ॥१२८॥
शतपर्णानि देवेशि चक्रवर्त्तित्तराय च ।
गुरुभ्यः सम्प्रदातव्या द्वात्रिंशत्पर्णवीटिका ॥१२९॥
अष्टाविंशतिभूपेभ्यो बान्धवेभ्यो दशाष्टकम् ।
जामात्रे पक्वपर्णानि वसुद्वादश वा प्रिये ॥१३०॥
पञ्चविंशतिशक्तिभ्यः पुत्रेभ्यस्तत्त्वसंख्यकान् ।
षट्पर्णानि शत्रुभ्यस्तुरीयं दानमुत्तमम् ॥१३१॥
पर्णत्रयं शत्रुपक्षे दशपर्णानि वश्ययोः ।
वीरेभ्यः षोडश शिवे दिव्यौघे वसुपीठयुक् ॥१३२॥
तदर्धं चैव सिद्धौघे मानवौघे तदर्द्धकम् ।
मान्येभ्यः सप्तपर्णानि कन्यायै पञ्चविंशतिः ॥१३३॥
चन्द्रयुक्तं महेशानि पौत्रेभ्यो दश पञ्च च ।
स्नुषायै त्रिंशतिः शिवे दास्यै चैव चतुर्दश ॥१३४॥
अन्येभ्यः परमेशानि विंशत्पर्णानि दापयेत् ।
पत्नी पुत्री तथा दासी दासश्चैव चतुर्थकः ॥१३५॥
परिवेत्ता पारिवेत्ता षट् ताम्बूलप्रदायकाः ।
अग्रदानं च शत्रुभ्यो वक्रदानं सुमित्रके ॥१३६॥
तिर्यग्दानं सेवकादौ यथायोगेन योजयेत् ।
म्लेच्छहस्ताच्छत्रुहस्ताच्छद्धिकतस्य तथैव च ॥१३७॥
अथ वैदग्धहस्तस्य ताम्बूलं हि निषिध्यति ।
आद्यः पीकोऽभियोक्तव्यो द्वितीयस्त्यज्यतां गतः ॥१३८॥
तृतीयो गृह्य ताम्बूलात्तृतीयं तृतीयं क्रमात् ।
पत्रं फलं खादिरं च चूर्णं चैव चतुर्थकम् ॥१३९॥

---

[1] श्लो १२८ (क) ख.मा. नास्ति ।

पञ्चमं तु सुखं प्रोक्तं रोगः षष्ठ उदाहृतः ।
षडङ्गमिति संप्रोक्तं षडैश्वर्यप्रदायकम् ॥१४०॥
षडैश्वर्यं यत्र वसेत्तत्र लक्ष्मीर्निरन्तरम् ।
तद् गृहीत्वा वरारोहे स्वेच्छया विहरेत्ततः ॥१४१॥
अथ सायन्तनभवं कृत्यं समवधारय ।
मध्याह्नकालवत्सन्ध्यां वैदिकीं समुपास्य हि ॥१४२॥
तान्त्रिकीमाचरेद्देवि त्रिवर्णस्थो न चेतरः ।
तुर्यस्तु तान्त्रिकीमेव नोभावप्यबलाजनः ॥१४३॥
अस्तङ्गमनवेलायां मार्त्तण्डस्य निशासु वा ।
विल्वमूले प्रान्तरे वा श्मशाने वाऽपि साधकः ॥१४४।
स्थायिनो जयिनो नित्यं काम्यं चैव कुलाकुले ।
मांसप्रधाननैवेद्यं सन्ध्याकाले निवेदयेत् ॥१४५॥
काली कालीति वक्तव्ये तदा सा शिवरूपिणी ।
पशुरूपधरा याति परिवारगणैरपि ॥१४६॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् [1] ।
तदैव मङ्गलं तस्य [2] अन्यथा कुलदूषणम् ॥१४७॥
अवश्यं चान्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यश्राद्धं यथा संध्यावन्दनं पितृतर्पणम् ।१४८॥
तथैव कुलसेव्यानां नित्यता कुलपूजने ।
पशुरूपधरां देवीं यो नार्चयति निर्जने ॥१४९॥
शिवारावे न तस्याशु सर्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित्सुकृतानि च ॥१५०॥
गृहीत्वा शापमाप्नोति[3] शिवा रोदिति निर्जने ।
एकया भुज्यते यत्र शिवया कुलभैरवि ॥१५१॥

---

१. मीश्वरम्- इति अन्यत्र ।
२. ह्यन्यथा- इति पाठ उचितः ।
३. माप्नोति- इति ख.मा.पा. ।

तत्रैव सर्वशक्तीनां प्रीतिः परमदुर्लभा ।
पशुशक्तिः पाशशक्तिर्नरशक्तिर्यथा क्रमात् ॥१५२॥
पूजनाद्द्विगुणं कर्म सगुणं साधको यतः ।
तेन सर्वप्रयत्नेन कर्तव्यं पूजनं महत् ॥१५३॥
१ राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्माणि विचिन्त्य बलिमाहरेत् ॥१५४॥
गृह्ण देवि महाभागे शिवकालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥१५५॥
एवमुच्चार्य दातव्यो बलिः कुलजनैः प्रिये ।
यदि नो भुज्यते देवि तदा नैव शुभं भवेत् ॥१५६॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेवि शान्तिं स्वस्त्ययनं चरेत् ॥१५७॥

इति शिवाबलिदानम्

कृतशौचस्तथाऽऽचान्तः पुनः पूजालयं विशेत् ।
पुष्पस्रग्धूपनैवेद्यबलिदीपादिसंभृतिम् ॥१५८॥
पूजाकालीनवत्कुर्यांत्सायन्तनसमर्चने ।
आरात्रिकं विभवतो दीपवृक्षानपि प्रिये ॥१५९॥
क्षणं निमील्य नयने ध्यानं पूर्वोक्तवच्चरेत् ।
ततो बद्धाञ्जलिः पद्मयुगलं समुदीरयेत् ॥१६०॥
योगिन्यो मातरः सिद्धा क्षत्रपाला विनायकाः ।
तथा बटुकनाथश्च चामुण्डा भैरवीगणाः ॥१६१॥
बेतालभूतकुष्माण्डा ये चान्ये कालिकानुगाः ।
इह कुर्वन्तु सान्निध्यं कुर्वेऽहं नैशिकार्चनम् ॥१६२॥
पठित्वेत्थं ततः कुर्यादृष्यादि द्विषडङ्गकम् ।
वक्त्रन्यासं ततः कुर्यादावश्यकतया प्रिये ॥१६३॥

---

१ राजादिभय आपन्ने- इति पा. उचितः ।

अन्यानपि स्वेच्छयैव यावच्छक्यान् समाचरेत् ।
वक्त्रन्यासस्य नित्यत्वमितरेषां च काम्यता ॥१६४॥
इत्थं न्यासदिकं कृत्वा स्वेच्छया सुरवन्दिते ।
बद्धाञ्जलिः पुनरपि श्लोकमेकं समुच्चरेत् ॥१६५॥
हे गुह्यकालि जगदीश्वरि विश्वमात-
श्चैतन्यरूपिणि सदाशिवजीवतुल्ये ।
दैनन्दिनप्रचितपापचयापहत्यै
सायन्तनं स्मरणमम्ब करोमि तेऽहम् ॥१६६॥
पठित्वेमं ततः पुष्पं गृहीत्वाञ्जलिना प्रिये ।
त्रिखण्डामुद्रया वाऽपि ध्यानं मीलितदृक्चरेत् ॥१६७॥

**त्रिखण्डामुद्रा-**

परिवर्त्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत्समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥१६८॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराऽऽह्वानकर्मणि ॥१६९॥
पूर्वस्तोत्रोक्तपद्याभ्यां न तु ध्यायेदिति क्रमः ।
यावस्वर्ककलेत्येकं ब्रह्मेन्द्रेति द्वितीयकम् ॥१७०॥
शक्तौ पूर्वोक्तवत्कुर्यादावाहनपुरस्सरान् ।
उपचारान् षोडशभिर्मन्त्रैरेव पुरोदितैः ॥१७१॥
अशक्तौ कुसुमैः स्रग्भिर्धूपदीपैरारात्रिकैः ।
नैवेद्यैर्बलिभिस्तोत्रपाठैरपि जपैरपि ॥१७२॥
दण्डवत्प्रणमेच्चापि कुर्याच्चापि प्रदक्षिणम् ।
काकूक्तिभिः प्रार्थयीत स्वस्याभीष्टानि साधकः ॥१७३॥
यदि चेद्विद्यते देवि प्रतिमा यन्त्रमेव च ।
कल्पयित्वा तदा तल्पं मृद्वास्तरणसंवृतम् ॥ १७४॥
स्थापयित्वोपधानं च शाययेत्तत्र कालिकाम् ।
नैशार्चनोपयुक्तानि स्युर्नैवेद्यानि यानि हि ॥१७५॥

अवश्यं तानि भुञ्जीत शक्तिभिः साधकैः सह ।
गीतवाद्यादिनृत्यान्तं यथाशक्ति ततश्चरेत् ॥१७६॥
सायन्तनीनमशनं कुर्यात्पूर्वोक्तवत्ततः ।
स्वयं शयीत तदनु सह स्वाभीष्टया स्त्रिया ॥१७७॥
प्राक्शिरो वा दक्षिणशिरो नोदक्पश्चिममस्तकः ।
प्राक्शिरः शयने विद्या आयुर्वित्तं च दक्षिणे ॥१७८॥
पश्चिमे प्रबला चिन्ता हानिर्मृत्युस्तथोतरे ।
कृतशौचः करपदैराचान्तः सुसमाहितः ॥१७९॥
दीपो ज्वलति न ध्वान्ते नाकृतापवनासनः ।
न च स्तिमितवत्पाणिर्न नग्नो नापि कञ्चुकी ॥१८०॥
पठन्दुःस्वप्ननाशाय वाक्ष्यमाणान्मनून् प्रिये ।
जगन्मातर्महामाये कालिके कालनाशिनि ॥१८१॥
दुःस्वप्नं हर रुद्राणि त्वद्भक्तं पाहि मां सदा ।
भूतप्रेतपिशाचाद्या ये भीमा देवयोनयः ॥१८२॥
रक्षोदानवदैत्याश्च ये निद्राभङ्गकारकाः ।
दुःस्वप्नजाश्च ये दोषा मम हिंसाकराश्च ये ॥१८३॥
ते त्वत्स्मरणदम्भोलिनिहता यान्तु संक्षयम् ।
ये दण्डशूका विहगा वृश्चिकाः शूकयोनयः ॥१८४॥
येषां विषं बाधतेऽङ्गं ये च शृङ्गविषास्तथा ।
विषैर्वपुर्युताः कीटा ये चोद्वेगप्रदायिनः ॥१८५॥
श्रुत्वा ते कालिकानाम विद्रवन्तु दिशो दशः ।
काली कराली चामुण्डा छिन्नमस्ता च भैरवी ॥१८६॥
हरसिद्धा सिद्धिलक्ष्मीर्डामरी बाभ्रवी तथा ।
महामारी तामसी च मातङ्गी शवरेश्वरी ॥१८७॥
चर्चिका शिवदूती च महामहिषमर्दिनी ।
उग्रचण्डा कुब्जिका च फेत्कारी गुह्यकाल्यपि ॥ १८८॥
एतास्ते मूर्त्तयो घोरा याश्च सौम्याः सुरेश्वरी ।
मातः शयानं रक्षन्तु दुःस्वप्नं नाशयन्तु च ॥१८९॥

चक्रपाशासि शूलर्ष्टिगदापरिघतोमराः ।
वज्रमुद्गरकुन्तेषुभुशुण्डीपाशपट्टिशाः ॥१९०॥
यान्यन्यानि च देवेशि करयोर्विधृतानि ते ।
अस्त्राणि तानि रक्षन्तु स्वपन्तं मां महेश्वरि ॥१९१॥
त्वदाज्ञया नारसिंही पूर्वस्यां दिशि पातु माम् ।
वाराही पश्चिमायां च दक्षिणस्यां च कालिका ॥१९२॥
उत्तरस्यां च चामुण्डा महाघोरतराऽवतु ।
ऊर्ध्वन्तथाऽधो दिग्विदिशोस्त्वं सर्वत्रैव पाहि माम् ॥१९३॥
शक्तयो याश्च ते देवि परिवारगणाश्च ये ।
सर्वत्र सर्वदा पान्तु मां त्वच्चरणसेवकम् ॥१९४॥
त्वदाज्ञयैव देवेशि नानारूपधरावुभौ ।
देवौ मामवतां विष्णुरुद्रौ सर्वसुरेश्वरौ ॥१९५॥
वराहो नरसिंहश्च वामनोऽनन्त एव च ।
त्रिविक्रमो हयग्रीवः षडेते पान्तु मां सदा ॥१९६॥
मृत्युञ्जयो नीलकण्ठो दक्षयज्ञविनाशकः ।
त्रिपुरघ्नो हरिश्मश्रुः पिनाकी नीललोहितः ॥१९७॥
प्रमथेशः कीर्त्तिवासा विरूपाक्षो महेश्वरः ।
एकादशैते मां पान्तु रुद्रा रौद्रतनूधराः ॥१९८॥
सदा मामकृतभीतिं कुरु त्वं गुह्यकालिके ।
एवमष्टादशश्लोकै रक्षां कृत्वाऽऽत्मनः प्रिये ॥१९९॥
शयीत चिन्तयन्कालीं निर्विशङ्केन चेतसा ।
सर्वां निशामयोगज्ञो गमयत्येव निद्रया ॥२००॥
उत्तिष्ठेच्चोषसि पुनः प्रातः कृत्यचिकीर्षया ।
आह्निकं पूर्ववत्कार्यं स्वस्वकल्पोक्तवर्त्मना ॥२०१॥

**मध्यमानां नित्यार्चनविधिः-**

अथान्यत्संप्रवक्ष्यामि यद्विना दुःखमाप्नुयात् ।
प्रातरुत्थाय गुर्वादिं स्मृत्वा शौचं समाचरेत् ॥२०२॥

स्नानं सन्ध्यातर्पणं च वैदिकं तान्त्रिकं तथा ।
आगत्य च गृहे पश्चात्प्राणायामत्रयं चरेत् । २०३॥
कुर्याच्च मातृकान्यासं तथाच्छन्दर्षिदैवतम् ।
तन्मन्त्रस्य कराङ्गाख्यन्यासं शंङ्खार्घ्यसंस्थिति: ॥२०४॥
मन्त्रस्नानं देवताया: पूजा पञ्चोपचारिका ।
चन्दनान्ते त्वावृतीनां पुष्पैरेव प्रपूजनम् ॥२०५॥
वैश्वदेवोत्तरं तत्र ददन्नाहुतिपञ्चकम् ।
मूलेन होमयेत्तत्प्राग् जपश्चाष्टोत्तरं शतम् ॥२०६॥
वैदिकाकाशबल्यन्ते पूजा चोच्छिष्टभोजिन: ।
तत: संप्रार्थयेद्देवं सायं संध्यां समाचरेत् ॥२०७॥
देवागारे दीपदानं प्रोक्तं संक्षेपमाह्निकम् ।

**प्रवासकारागृहाद्यशुभस्थानाह्निकम्-**

अथापराह्निकं वक्ष्ये तत्स्थानदशके भवेत् ॥२०८॥
मार्गे प्रवासे दुर्गे च नान्नप्राप्तौ मनोभये ।
कारागृहेऽशुभस्थाने सर्पव्याघ्रादिजे भये ॥२०९॥
परचक्रागमे कुर्याच्छौचाद्यं तु यथा तथा ।
मन्त्रस्नानादिकं चिन्त्यं कृत्वा मानसपूजनम् ॥२१०॥
मनसा हृदयस्यान्तर्ध्यात्वा योगाख्यपीठकम् ।
तत्रैव पृथिवीमध्ये पूजां देवस्य चाचरेत् ॥२११॥
यथा पुष्पादिभि: [1] (पूजा) बहिर्देशे विधीयते ।
तथा हृदापि कर्तव्या: सर्वास्ता प्रतिपत्तये ॥२१२॥
मनसा जठरे होमे एतद्विपदि चाह्निके ।

**रोगिणामाह्निकम्-**

अथाऽऽतुराह्निकं वक्ष्ये नित्यं स्वास्थ्याधिकस्य तत् ॥२१३॥

---

[1] पूजाशब्द: क.मा. खण्डित: ।

यदि लङ्घनपर्यन्तो व्याधिरात्मनि दृश्यते ।
तथा पूजा न कर्तव्या स्थण्डिले प्रतिमासु च ॥२१४॥
न स्नानं दन्तकाष्ठं वा कुर्याद्धोममथापि वा ।
रविमण्डलमालोक्य प्रतिमामथवा पुनः ॥२१५॥
मूलमन्त्रं सकृद् जप्त्वा पुष्पं साक्षतमुत्सृजेत् ।
श्रान्तो व्याधिभिरत्युग्रैर्जरया चेन्द्रियैर्हतः ॥२१६॥
निजसामयिकैर्वापि स्वकर्त्तव्यं समापयेत् ।
अग्निवृत्तस्ततः स्नात्वा पूजयित्वाग्निदेवताः ॥२१७॥
गुरुविप्राँस्तदग्रे च वाक्यमेतदुदीरयेत् ।
एतावत्कालविच्छिन्ना पूजा युष्मत्प्रसादतः ॥२१८॥
न दोषोऽस्त्विवति संप्रार्थ्य पुनः पूर्ववदाचरेत् ।
यस्तु रोगवशाद्दोषो जातस्तत्क्षालनं चरेत् ॥२१९॥
जपेन वाऽथ दानेन होमेन धनतोऽपि वा ।

## आशौचाह्निकम्–

अथ सूतकिनां नित्यं वैदिकं तु स्मृतीरितम् ॥२२०॥
जातसूतकमादौ च तदन्ते मृतसूतकम् ।
द्विजस्य सूतके देवि न वेदोच्चारमाचरेत् ॥२२१॥
संध्यां च मानसीं कुर्याद् ध्यात्वैव परमेश्वरि ।
शालग्रामं च प्रतिमां न स्पृशेत्कर्हिचित्प्रिये ॥२२२॥
स्पर्शात्पापी नरो भूयान्नात्र कार्या विचारणा ।
कृत्वा तान्त्रिकपूजादि मनसैव समाचरेत् ॥२२३॥
कामनार्थं प्रयोगश्चेत्तदा पूर्ववदाचरेत् ।
मृतगेहं परित्यज्य वामाचारे न सूतकम् ॥२२४॥
स्पृहां हीत्वा ज्ञानपूर्वं कुलतो धर्ममागतम् ।
यया लभेद्वामधर्मं देवतायां स जायते ॥२२५॥
गुरूपदिष्टं यत्कर्म भक्त्या वामे करोति यः ।
शास्त्रतत्त्वं देवतत्त्वं नो बहिः स तु गुह्यकः ॥२२६॥

ज्ञात्वा तमेव भजते सुखार्थी तत्र जायते ।
क्षुत्तृष्णामोहितः प्रेतस्तस्माद्धर्मं विचारयेत् ॥२२७॥
संतस्तेन नचेल्लभ्या व्यर्थं पात्रादिसाधनम् ।
पूजोदकेन कर्त्तव्या तोयं यत्रैव विद्यते ॥२२८॥
तदा संपूजयेद्देवं भावनाकुसुमादिभिः ।
भक्तिः श्रद्धा भावना च पूजानां जीव उच्यते ॥२२९॥

**जडाह्निकम्–**

जडानामाह्निकं वक्ष्ये तथा संक्षेपकर्मणि ।
रत्नमण्डपधर्मादिचतुष्कमुरगोऽम्बुजम् ॥२३०॥
मूलमूर्त्तिः षडङ्गानि तेषां पूजा विधीयते ।
सर्वेषामपि वस्तूनामलाभे भावनैव हि ॥२३१॥
निर्मलेनोदकेनैव पूजयेत्स्थिरमानसः ।
सामान्यतस्त्रिधा पूजा चोत्तमा मध्यमाऽधमा ॥२३२॥
अधिकारिनिमित्ताभ्यां भिद्यते शतधा पुनः ।
या सोपकरणैः कृत्स्नैः क्रियमाणोत्तमा मता ॥२२३॥
यथालब्धैर्विनिष्पाद्यैर्द्रव्यैः पूजा तु मध्यमा ।
या तु पुष्पाम्बुनिष्पाद्या पूजा साधमसंज्ञका ॥ २३४॥
विहिताऽखिलवेदोक्तब्रह्मर्षिभिरकल्मषैः ।
क्रियमाणा तु या पूजा सात्त्विकी सा विमुक्तिदा ॥२३५॥
राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः ।
या पूजा क्रियते सम्यग्राजसी सा सुखप्रदा ॥ २३६॥
स्त्रीबालवृद्धमूर्खाद्यैर्भक्तैरक्षुद्रमानसैः ।
या पूजा क्रियते नित्यं तामसी सा प्रकीर्तिता ॥२३७॥

अरण्ये स्वल्पकामानां सिद्ध्यर्थं पूजनं हितम् ।
निष्कामानां गृहस्थानां हितं गेहे तु पूजनम् ॥२३८॥
कदाचिदपि न त्याज्यो वेदमार्गो द्विजैः सदा ।
वेदच्युतानां विप्रत्वं देवत्वं चापि दुर्लभम् ॥२३९॥

इति श्रीतन्त्रचिन्तामणौ भोजनादिपूजायाः
सात्त्विकादिभेदान्तनिर्णयनामा
विशंतितमः प्रकाशः ।

इति तन्त्रचिन्तामणेः प्रथमो भागः ।

*****

# परिशिष्ट

तन्त्रचिन्तामणिका नेवारीलिपिमा रहेका मातृका र देवनागरीमा रूपान्तरित मातृकाहरूका केही नमूनापत्र यहाँ प्रस्तुत गरिएका छन् । यसबाट अनुसन्धाताहरूलाई मल्लकालिक लेखनप्रणाली र त्यस पछि विभिन्न समयमा विभिन्न लेखकहरूद्वारा सारिँदै आएका पाण्डुग्रन्थहरूको स्वरूपबोध गर्न सघाउ पुग्नेछ ।

वास्तविक ग्रन्थकारले शुद्धरूपमा लेखेका ग्रन्थहरू पनि पछि सारिने क्रममा शुद्धाशुद्धिको ख्याल नगरिंदा जस्ताको तस्तै रहन सकेनन् । ती मध्ये तन्त्रचिन्तामणि पनि एक हो । तर अहिले आएर ग्रन्थसम्पादक विद्वान्बाट यसको उद्धार गरिएको छ । यस्तै उद्धारको प्रतीक्षामा रहेका पाण्डुग्रन्थहरूको संख्या निकै छ । तिनको पनि प्रौढ सम्पादनद्वारा उद्धार गरिनु पर्दछ भन्ने हाम्रो अभिमत रहेको छ ।

– सम्पादक-समूह

श्रीकालिकायैनमः॥ ॥यस्याःस्वरूपमिदंकुलाकुलगंतत्त्वेनसंपादितंभुवनंपंचरसोज्वलंचनिगमाश्चचत्वारएववक्त्रनात्॥ भूतायंकिलमा
गरेणसहितंनित्यंजगन्मण्डलेतस्यैसाधकसिद्धिदानविमलप्रख्यानदीक्ष्यैनमः॥ ॥वंदेज्ञानवरप्रदाननिरतंपादारविंदंगुरोर्हृद्ध्योघ
प्रभृतेश्चविघ्ननिवयध्वंसेशलम्बोदरं॥ तंत्राणांरचनाकरंपशुपतिंगुह्येश्वरींकालिकांब्रह्मापेंद्रमहेन्द्रवंदितनरांवज्रादिकांयोगिनी॥
नेपालाधिपतेस्समस्तधरणीयानीन्द्रचूडामणेर्नानादानतपोव्रतादिकविताशीलस्यविद्यानिधेः॥ भूपालेंद्रवराधिपस्यनवमीसिंह
स्त्वमात्यःक्रमंनिर्णीयाश्रुबुधैःसमंवितनुतेश्रीतंत्रचिंतामणिं॥ ॥येकेचित्खलाप्रवधियाःत्वनिगूढगुप्तिःकायोंनदायुधजनेममभु
श्वतास्यात्॥ तस्माद्रहस्यकथनंक्रमश्चमस्त्रिलोकेप्राकट्यदोषशमनंकुरुदेविमातः॥ ॥देवीहाराःपरमार्थदत्तमनसःसिद्धिंपरामीस्सव
न्तनदैवनसद्रहस्यमखिलंज्ञातुंवचेद्युत्सुका॥ तत्पश्यंतुभवंतएनममलंग्रंथंमदीयंमुहुर्नानातंत्रविलोकनोत्सुकतयानायाशयध्वंस
नः॥ ॥तंत्राणांवचनंयेषांग्रंथेस्मिन्नकटीकृतं॥ नामानितेषांतंत्राणांउन्मात्रिकथनंप्रतः॥ कृतादियुगभेदेनमार्गएवपृथक्पृथ
क्॥ आधिक्यमागमानांचस्मृत्युक्तिक्रमस्ततः॥ कालिकाकृष्णयोस्ताराराम्योश्चैकरूपता॥ निर्णयोदशविद्यायाशिवशक्त्योरूपास
ना॥ श्यामामाभाःसर्वमूलत्वमुक्तमाद्येप्रकाशके॥ ॥मंत्रोच्चारक्रमेणैववामदक्षिणलक्षणं॥ विद्यास्वाम्नायकेमार्गेनिर्णयश्चपृथक्पृ
थक्॥ आवश्यकोमकारेषुचाम्नायाधीननन्तुयः॥ गुरुंविनातंत्रमंत्रेनाधिकारनिरूपणं॥ दीक्षाप्रसंगादिनाद्वितीयेतुप्रकाशके॥ श्री

स एव सिद्धो वै च प्रकुर्वन्नो नित्यं विष्टाद्भिः कलेवरे॥ देहाभिमानेन गलितो जीवन्मुक्तः स एव हि॥ यथेच्छालाभसंतुष्टः सो
ति नो नवनिंदति॥ न सुखेन सुखे न हृष्टः खे कर्मना व्यात्म मुच्यते॥ हित्वा विषयसौख्यं यस्तपस्तपति निर्जने॥ यत्फलं काम
ये किंचिन्नी वन्मुक्तः स एव हि॥ यावद्देहस्य निर्वाहस्तावत्कालं परिक्षिपेत्॥ वेदस्याभ्यासतः सर्वं येन येत्स तु मोक्षम
न मुक्तोहं किं स्वपने क्रान्तो कोस्य यातिक्क द्वेतसि॥ इति संभावयं नित्यं महाकालेन यं व्रजेत्॥ एतेन सुगमोपायानाम
चित्तं स्थिरं भवेत्॥ कामक्रोधाभिमंतनं तं महामायाविमोहितं॥ दुर्विज्ञेया दुर्निवारा महाकालस्य गेहिनी॥ निरंशा
घनात्सानुप्रसन्ना वेद्धि पुंवति॥ सुबुद्धिभिः प्रियैः श्रेयैर्यथा मात्ता प्रतार्यते॥ न यथा प्रतार्यते वेयं जीवन्मुक्तः स जायते
कृतं वंधार्थमनया खानपानं च मैथुनं॥ तेनैव वेदियं वक्ष्यास्त्वयं मुक्तस्तदा भवेत्॥ वामिकैः कौलिकैस्तस्मादज्ञानेश्चः
गुरुं विना॥ समस्तैरपवाज्ञानैर्वंचितेयेन चेतनैः॥ वं ध्येयं वंधनैः स्वस्य त्रोटये ह्वंधनानि च॥ भावयेच्च महाकालं जी
वन्मुक्तस्तदा भवेत्॥ वंधमोक्षप्रकारास्तु तंत्रे संकलिता मया॥ येर्ज्ञातास्तु कुमार्गेरा तैर्वंद्धेयं सुदुस्तरा॥ सुकृतान्मान
वो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात्॥ चतुराशीति लक्षेषु शरीरेषु शरीरिणां॥ न मानुष्यं विनान्यत्र तत्त्वज्ञानं तु लभ्यते॥
अत्र जन्मसहस्राणां सहस्रैरपि पार्वति॥ कदाचिल्लभ्यते जंतुर्मानुष्यं पुण्यसंचयात्॥ सोपानभूतं मोक्षस्य मानुष्यं

प्राप्य दुर्लभं याम्रारयति नात्मानं तस्मात्पापतरोत्र कं ॥ नरः प्राप्योत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवं ॥ नवेत्यात्महितं यस्तु
समयेद्ब्रह्मघातकः ॥ विनादेहेन कस्यापि पुरुषार्थो न विद्यते ॥ तस्माद्देहं धनं राज्यं पुण्यकर्माणि योजयेत् ॥ नक्ष
रक्षयेत्सर्वदात्मानं मात्मा सर्वस्य भाजनं ॥ रक्षणे यत्नमातिष्ठेज्जीवं भद्राणि पश्यति ॥ पुनर्ग्रामं पुनः क्षेत्रं पुनर्वित्तं
पुनर्गृहं ॥ पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ शरीररक्षणोपायाः सततं क्रियते जनैः ॥ यावन्निष्ठति देहोयं ता
वत्तत्वं समभ्यसेत् ॥ ब्रह्माविष्णुमहेशादि देवताभूतजातयः ॥ नाशमेवानुधावंति तस्मात्तत्वं समभ्यसेत् ॥ याव
न्नजायते दुःखं यावन्नायाति चापदः ॥ यावन्नेन्द्रियवैकल्यं तावत्तत्वं समभ्यसेत् ॥ ॥ तंत्राणि यानि स
कलानि नतानि मन्ये संत्यव यानि न पुनः प्रकटानि तानि ॥ देशान्तरे कति कतीह न सर्वमस्ति ग्रंथेत्वपूर्णाव
धनेकिसु दूषणं मे ॥ ॥ एकस्याः पदपद्मपूजनविधेर्निःशेषतो निर्णये शंभुः पंचमुखोप्यनेककवपु
र्मृत्युंजयो न क्षमः ॥ दिग्विध्यात्क मनिर्णयो वितनया ग्रंथप्रवृत्तो स्मियत्तद्यांवल्पतरं कृतं बुधवरैः क्षंतव्यमे

नद्भुवम्॥ ॥इतिनवमिसिंहकृतेश्रीतंत्रचिंतामणौमातृकावर्णध्यानादिदशविद्यादिनानामंत्रभेदपुरश्चरणोपायनिर्णयो
नामचत्वारिंशत्तमः प्रकाशः॥ ४० ॥समाप्तश्चायंग्रन्थः॥ ॥शुभमस्तुसर्वजगताम्॥ ॥शुभम्॥

सत्गुरुरक्षकः॥ तत्त्वात्तमेव भजन्ते मुक्त्यार्थी तत्र जायते॥ क्षान्त्वात्मामो हितः प्रेतत्वात्कर्म विचारयेत्॥ संततं तेन नैवेद्य
म्पोभ्यर्घ्यपात्रादिसाधनं॥ पूज्योदकेन कर्त्तव्यास्तोयं येनैव विद्यते॥ तदा संपूजयेद्देवं भावनाकुसुमादिभिः॥ भक्तिभु
क्तभावनाच पूजानां जीवउच्यते॥ ॥अथ जडाह्निकं॥ जडानामाह्निकं वक्ष्ये तथा संक्षेपकर्मणि॥ रत्नमण्डप
धर्मादिवनुष्क मूरगोंवुजम्॥ मूलमूर्त्तिः षडंगानि तेषां पूजा विधीयते॥ सर्वेषामपि वस्तूनामलाभे भावनैव हि॥
निर्मलेनोदकेनैव पूजयेत्स्थिरमानसः॥ सामान्यतस्त्रिधा पूजा चोत्तमा मध्यमाधमा॥ अधिकारिनिमित्ताभ्यां भिद्य
ते सा तथा पुनः॥ पासोपकरणैः कृत्स्नैः क्रीयमाणोत्तमा मता॥ येथालब्धैर्विनिष्पाद्यैर्द्रव्यैः पूजा तु मध्यमा॥ ॥
पत्रपुष्पांबुनिष्पाद्या पूजा चाधमसंज्ञका॥ विहिताखिलवेदोक्तैर्ब्रह्मर्षिभिरकल्मषैः॥ क्रीयमाणा तु या पूजा सात्त्विकी
सा विमुक्तिदा॥ ॥राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः॥ या पूजा क्रियते सम्यग्राजसी सा सुखप्रदा॥ स्त्रीबालवृद्ध
मूर्खाद्यैर्भक्तैरक्षज्ञमानसैः॥ या पूजा क्रीयते नित्यं तामसी सा मकीर्त्तिता॥ अल्पेस्वल्पकामानां सिध्यर्थं पूजनं हितं॥ नि
ष्कामानां गृहस्थानां हितं गेहे तु पूजनं॥ कदाचिदपि नस्यात्सा वेदमार्गो द्विजैः सदा॥ वेदभ्रष्टानां विप्रत्वं देवत्वं वापितु छत्रे
णं॥ ॥ ॥इति श्रीतंत्रचिंतामणौ भोजनादिपूजायां सात्विकादिभेदांत निर्णयनामाविंशतितमः प्रकाशः॥ ॥

# महेन्द्र-संस्कृत-विश्वविद्यालयका महत्त्वपूर्ण प्रकाशनहरू

| पुस्तक | लेखक/सम्पादक | मूल्य |
|---|---|---|
| १. स्कन्दपुराणस्य अम्बिकाखण्डः | सं. श्रीकृष्णप्रसादभट्टराईः | १२५/- |
| २. कालचक्रान्तर्गतो ज्यौतिषभागः | सं.प्रा. श्रीनयराजपन्तप्रभृतयः | ५०/- |
| ३. रामराज्यम् | ले. श्रीपूर्णप्रसादब्राह्मणः | २५/- |
| ४. षड्दर्शनीसङ्ग्रहः | ले. श्रीजाषराजः, सं. डा. श्रीदीर्घराजघिमिरेः | ३०/- |
| ५. जनकदर्शनम् | ले. डा. स्वामी रामानन्दगिरिः | ११५/- |
| ६. श्रीकृष्ण श्रीरामचरितादर्शः | ले. श्रीपूर्णप्रसादब्राह्मणः | ३५/- |
| ७. श्रीकृष्णचरितामृतम् | ले.पं. श्रीदधिराममरासिनिः | २०/- |
| ८. स्तवमाला | ले.पं. श्रीदधिराममरासिनिः | ३०/- |
| ९. पदार्थीयदिव्यचक्षुः | ले. श्रीसुमतिरुमापतिः, सं.प्रा. श्रीरामेश्वरशर्मा | ४५/- |
| १०. हरिकेलिमहाकाव्यम् | ले. श्रीवंशमणिः, सं. डा. श्रीवेणीमाधवढकालः | २००/- |
| ११. श्रीस्वर्गद्वारी महाप्रभुचरित्र | ले. श्रीदुर्गादत्तपौड्यालः | ४५/- |
| १२. संस्कृतविद्वत्सम्मेलनसंस्मरणग्रन्थः | सं. प्रा. श्रीशिवहरिमरहट्टाप्रभृतयः | २४०/- |
| १३. संस्कृतशिक्षणाभ्यासः (प्रथमभागः) | ले. सह. प्रा. श्रीनीलमणिढुङ्गानाः | ५२/- |
| १४. संस्कृतशिक्षणाभ्यासः (द्वितीयभागः) | ले. सह.प्रा.श्रीनीलमणिढुङ्गानाः | ५०/- |
| १५. आशौच विवेचन | ले. प्रा.डा. श्रीरामचन्द्रगौतमः | ७५/- |
| १६. मधुरिमा (संस्कृतकवितासङ्ग्रहः) | सं. सह प्रा. श्रीभागवतशर्मप्रभृतयः | २५/- |
| १७. गण्डकीगौरवम् | ले.श्रीउमानाथपन्थी, सं.डा. श्रीवेणीमाधवढकालप्रभृतयः | ३०/- |
| १८. श्रीरामचरितामृतम् | ले.श्रीदधिराममरासिनिः, सं.डा.श्रीवेणीमाधवढकालप्रभृतयः | ५०/- |
| १९. साहित्यप्रवेशिका | ले. प्रा. श्रीतीर्थराजसुवेदिप्रभृतयः | ५०/- |
| २०. व्याकरणप्रवेशिका | ले. प्रा. श्रीस्थानेश्वरगौतमप्रभृतयः | १००/- |
| २१. श्री ५ वीरेन्द्रगद्दीआरोहणरजतमहोत्सव स्मारिका | सं. प्रा. श्रीस्थानेश्वरगौतमप्रभृतयः | १००/- |
| २२. कर्मकाण्डभास्करः | ले. श्रीदधिराममरासिनिः, सं.डा. श्रीवेणीमाधवढकालप्रभृतयः | २१५/- |
| २३. संस्कृत-नेपालीशब्दकोशः | ले. श्रीकुलचन्द्रगौतमः, सं. डा. श्रीवेणीमाधवढकालप्रभृतयः | २६५/- |
| २४. तन्त्रचिन्तामणिः पूर्वभाग : | ले. श्रीनवमिसिंहः, सं. प्रा. श्रीविद्यानाथोपाध्यायः | २९०/- |